## सम्मतिः-

विभि[illegible]स्तृत महर्षि चरितेभ्यः सार भूतंसंगृह्यसुललित देवगिरा-अलंकृत्य च महर्षि[illegible]रमभक्ताचार्यप्रवरेण श्री रविदत्त गौतमेन-विरचिंत "देवर्षि दयानन्द चरितम्" इदं पुण्य श्लोकस्य तस्य-देवात्मनोदयानन्दस्य-आर्षसंस्कृतिसमुद्धाराय कृतं स्वात्मवलिदानम् तत्सफलसमुद्धारकृत्यञ्च प्रबुद्धपाठकानां सन्मुखं समुपस्थापयति। सहृदयसंस्कृतज्ञपाठकाः देवर्षि चरितवर्णनात्मिकां कृतिमिमां परिशीलयन्तस्तं देवं दयानन्दं प्रति-असीम श्रद्धाशीलाः सर्वसुखदां वरदाम् विश्ववारां वैदिक संस्कृतिं प्रति चातीव भक्तिमन्तो भविष्यन्तीति-मे निश्चितमभिमतम्। अतोऽहमेतत्कृते स्वीय परमस्नेहपात्राचार्य-प्रवराय सस्नेहं शुभाशीर्भिः सह बहुतरं साधुवादं वितरामि।

(स्वामी) विधानन्द सरस्वती
डी १४/१६ माडल टाउन, दिल्ली-९

सांसारिक जन जीवनं स्वर्गिक विभूतिभिर्विभूषयितुं सर्व जनात्मोद्धारं कर्तुञ्च-पुण्य पीयूष पूर्णायाः वैदिक संस्कृतेः समुद्धारात्मकम् ऋषिराजदयानन्दस्य-विचार वैदुष्यं सदैव शाश्वत रूपेण प्रासंगिकतां भजते। विद्वद्वर्यः आचार्य-शिरोमणिः श्री रविदत्त गौतमः तन्महर्षेरुदात्तचरितं संवर्णयितुं रचनामिमामरचयत्। भावानुभाविनीं भाषां प्रसंगानुकूलशब्दालंकृताञ्च-संस्कृत गिरं प्रयुज्य प्रयोक्ता आचार्यप्रवरोभाषायामाधिपत्यं प्रकटयति। निश्चितमेव कृतिरियम् आर्याणां समाजे समादरं समवाप्स्यति। एतदर्थम् हृदयेन संभाव्यः शिरसा प्रणम्यः आचार्य-प्रवरः प्रशस्योऽभिनन्दनीयश्च।
इति।

विद्वदनुरागी-
**पं० मधुर शास्त्री**
ब्लाक-५८, सैक्टर २
कालीबाड़ी मार्ग, गोलमार्कीट
नई दिल्ली-१

# देवर्षि-दयानन्द-चरितम्

## समर्पणम्

पितामहप्राणेषु समाविष्टयोः, गौतमवंशस्थतृतीय सोपानस्योदीयमाननक्षत्रयोः, तेजस्विब्रह्मवर्चस्विनोः:, शतायुष्मतोः वरुण "गौतम" हर्ष वर्धन (हिमाद्रि) 'गौतम" नाम परमप्रियसुपौत्रयोः, कयोश्चित् श्रेयःसम्पन्नब्राह्मणकुलयोः कुलयशः सौभाग्यलक्ष्मीस्वरूपशुभश्रृंगार, भ वित्री वात्सल्यमूर्ति शतायुष्मती प्राची-मनीषा (निमिषा) नाम धारिणी सुपौत्रीयुगलस्य च समुज्ज्वलभविष्यदर्थं सस्नेहमियं परम पावनीमहर्षिजीवनचरित्र रचना समर्प्यते।

शुभाशंसी<br>
पितामहः<br>
आचार्यः—'गौतमः"

ओ३म्
वैदिक धर्मस्य वैदिक संस्कृतेश्च मूर्तालोक स्वरूपम्

# देवर्षि-दयानन्द-चरितम्

देवगिराऽलंकर्ता
**आचार्य रविदत्त "गौतमः"**
एम. ए. (हिन्दी, संस्कृत)
शास्त्री, साहित्याचार्यः
वेदोपदेशकः



**इतिहास शोध संस्थान, महरौली, नई दिल्ली-110030**

परमपुण्यात्मानौ, दैनिकाग्निहोत्र परायणौ, प्रशान्तसौम्य दर्शनौ, मूर्तिमत्सौभाग्यरूपौ, सद्धर्मकार्येषुसततं सर्वत्रमुक्तहस्तेन-दानशीलौ-दक्षिणदिल्ली वेदप्रचार सभायाः प्रधानः श्री-कृष्णलाल जीसिक्का एवं सौभाग्य मूर्तिः श्रीमती कान्ता जी-सिक्का-दम्पती महाभागौ, ययोः श्रद्धया प्रदत्तसात्विकदानेन-"देवर्षिदयानन्द चरितम्" नामपुस्तकमिदं मुद्रितमभवत् ।

अत्वार्यः "गौतम" :

## रचयितुः प्राक्कथनम्

सत्य सनातन वैदिक धर्मस्य सर्वपोषिणीसुखदा वरदा वैदिक संस्कृतेश्च समुद्धारकम्' देवंदयानन्दंप्रति-असीम श्रद्धाशीलोऽहं गहनाज्ञानतमोऽर्णवनिमज्जत्सकलजनजीवन समुद्धारक युग पुरुषस्य पुण्यश्लोकमहामहिममहर्षेस्तस्य (दयानन्दस्य) अलौकिकचरित्र वर्णनात्मिकां रचनामिमां न केवलं तस्मै महामहिम्ने देवकल्पाय (देवपुरुषाय) श्रद्धाञ्जलि रूपेण समुपस्थापयामि अपितु प्रभासमान ज्ञान भानोर्ज्वलदात्म ज्योतिष स्तस्य-दिव्यात्मनो जीवनालोकेन सकलसामाजिकजन-जीवनानि समालोकयितुमपिसहृदयसुविज्ञार्यजनानां करकमलेषु सादरं समर्पयामि, येन-सर्वेषामेव-आर्यजनानां जीवनधारा श्रुतिसौरभ-सुरभितासम्भवेत्।

दिव्यात्मा दयानन्दो हि सम्पूर्णेऽपि स्वजीवनसंग्रामे हिमालय इव स्थिराविचलनिश्चयः, महासिन्धुरिव समाहितसर्वमहामहिमभावः, भुवन भास्कर इवार्षज्ञानविभाविभासितदिगदिगन्तः, वीरवरशिवराज इव सुस्थिर संकल्पशीलः, महात्माबुद्ध इव आत्ममनोव्याप्त सुदृढ़वैराग्यभावः, सीतान्वेषणे हनुमानिव सत्यान्वेषणसमर्पितजीवनसुखसर्वस्वः, सदैवात्म-विद्योगिजनसमाराधनतत्परः, सत्यहरिश्चन्द्र इव गृहीतव्रतपालनसत्यनिष्ठः, विगतरागद्वेषममत्वमोहः, शैत्योष्णत्वादिसर्वदुःखद्वन्द्वसहनसमर्थः, मानापमानादिनिरपेक्षः, भौतिसुखसाधनसम्प्राप्तिनिस्पृहः, परायत्तस्वदेशदुर्दशादुःखितमनाः, जनजागरणेन सशक्तक्रान्तिमन्त्रदाता, दीनजनदुर्गतिदर्शनदयार्द्रहृदयः, राष्ट्रोद्धारधारणाधृतव्रतः, स्व-भाषाभावभावनाविभावकः, अतुलश्रद्धासंभृतगुरुवरचरणारविन्दचञ्चरीकः, सर्वस्व-समर्पितविश्वस्तशिष्यप्रवरः, भौतिकवैभवक्षेत्रेऽकिञ्चनोऽपिअतुलाध्यात्मनिधिदानदक्षः, पाखण्डविखण्डने कुलक्कर-कालजिह्वः, वैदिकधर्मधुराधारणधुरन्धरः, पितामहभीष्म इव अखण्डब्रह्मचर्यव्रतपालनादर्शः, मर्यादापुरुषोत्तमश्रीराम इव शक्तिशीलसौन्दर्यसंभृततनुः, परमशान्तिसमाहितमनाः, उदात्तशीलसुरभितात्मा, श्रुतिशास्त्रागाधज्ञाननिधिधारकः, युक्तिप्रमाणप्रस्तुवनप्रत्युत्पन्नमतिः, अनेकशास्त्रार्थसमरविजेता, सर्वत्रविगतभयःप्रवक्ता, ज्ञानयज्ञानुष्ठानेन सत्यशिवाराधकः, अन्वर्थनामदया-आनन्दयोर्निधानः, क्षमाकरुणावतारः, तितिक्षासहिंष्णुताऽऽलोकस्तम्भः, सुखदवरदसुसंस्कृतार्षसंस्कृतिसमुद्धर्ता, सम्प्राप्तसकलयोगसिद्धिः सिद्धिसाधनावितरणमुक्तहस्तः, सततसर्वहितचिन्तकः, वैदिकधर्मोपवनपालकः, सत्यसन्धारितसर्वसिद्धान्तः, सर्वश्रेयस्करसत्यसद्धर्मसंस्थापकः, जीवनक्षेत्रे सुविहित-(प्रेयः श्रेयः)-भोगापवर्ग-समन्वयः, सर्वात्मोद्धारकः, सकल-भ्रान्तमतमतान्तरालोचकः, अखिलभूमण्डल-सुमंगलप्रदः, सदैवसकलकल्याणकल्पतरुः, मातृशक्तिसमुद्धारकः, लोकहितार्थसमर्पिततपःसाधनादिसर्वस्वः, मनसा वाचा कर्मणा सुगृहीतादर्शप्रतिपालकः, पदे पदे प्रसारितसम्पत्तिसम्मानप्रलोभनेष्वपि- अविचल-त्यागवैराग्ययोरादर्शः, राजनीतिकसांस्कृतिकधार्मिकसामाजिकादिसर्वक्षेत्रेषु श्रद्धेयः, प्रतिपक्षिणामपि परमसम्माननीयः, परमप्रभुपरमेश्वरस्य परमभक्तप्रवरः परमहंसः, तस्मिन् सर्वशक्तिमति सर्वेश्वरे चागाधविश्वस्तः, सकलसद्गुणगरिमागारः, युगप्रवर्तकः, मृत्युञ्जयः, महापुरुष आसीत्। तस्य चरितं हि स्वयमेव पुण्यं पावनम्अज्ञानान्धतमोनिवारकं

सद्ज्ञानश्रेयःसञ्चारकञ्च भविष्यतीति निर्विवादो विश्वासः।

पण्डितप्रवरश्रीदेवेन्द्रनाथ मुखोपाध्याय स्वामिसत्यानन्द सरस्वती प्रभृति-आर्यविद्वद्भिर्बृहद्ग्रन्थ रूपेण-महर्षि जीवनं सुललितार्य भाषायां कोमलकान्त पदावलिषु उपनिबद्धमासीत्। तेषां महाविदुषां तां कोमलकान्तपदावलिम्-अक्षरशः संकलय्य मदीयेन शिष्येण एकेन (श्री जगदीश विद्यार्थिना) प्रमुख घटनारूपं सार रूपञ्च संकलितम्। मयाहि (आचार्य गौतमेन) सुधियां-महार्षिभक्तसंकृतज्ञानांकृते देव गिरा सममेव देवर्षिचरित्र-सुधाधारया स्वस्वजीवनमभिषेक्तुं सुरभारतीरूपान्तरणप्रयासो विहितः, परिपूरितश्च। कियान् सफलोऽयं मे प्रयास इति तु संस्कृतभाषाऽभिज्ञा देववाणी व्याकरण वैदुष्यविभूषिता विद्वांस एव निर्णेष्यन्ति। एतत्कृते सुरभारती सिन्धुसन्तरणक्षमानां सरल-सहृदयसंस्कृतवाग्विदुषां सुधियां सत् परामर्शं प्रति सर्वदैव प्रतीक्षारतोऽहं स्थास्यामि, अभिनन्दिष्यामि च सादरं तेषां सत्परामर्शम्

अत्रहि (पुस्तकेऽस्मिन्) तत्तद् वर्णसन्धिसंयोजने निम्नांकितमनोरञ्जकोक्तिं स्मारं-स्मारं

**संहितैकपदेनित्या-नित्याधातूपसर्गयोः।**

**नित्या समासे वाक्ये तु सा विवक्षामपेक्षते।**

इति श्लोकोक्तविवक्षा-(वक्तुरिच्छा)-नियमः ह्येव मया परिपालितः, येन हि सरसां मधुरां सरलाञ्चापि देवदाणीं प्रति-अतीवोपेक्षापूर्णेऽस्मिन् युगे सामान्यस्वल्पसंस्कृत-भाषाऽभिज्ञातारोऽपि पुस्तकमिदं पठितुं भावानधिगन्तुञ्च पारयेयुः।

उक्तिश्च सा यथा—

परस्परमतीवस्नेहसंभरितौ श्रीमहेशचन्द्र-श्रीशरच्चान्द्राभिधेयौ संस्कृतभाषाभिज्ञौ-भाषां प्रतिश्रद्धाशीलौ च कावपि सुहृदौ सानन्दं पृथक् पृथक् (दिल्लीकलिकाता) नगरयोरवसताम्। परस्परं पत्रव्यवहारोऽपि सर्वदा संस्कृत-भाषायामेवाभवत्। तयोरेकतरो दिल्लीस्थितः श्रीमहेशचन्द्रः स्वभाषायां वर्णसन्धि-संयोजनविषयेऽति सुरुचिपूर्णसन्धिसंयोजनव्यसनी वा आसीत्। स हि कदाचित् स्वमित्रं श्रीशरच्चन्द्रं प्रति पत्रं प्रेषयन् तदभिज्ञानपंक्तिषु नामाक्षराणां सन्धि विधाय-श्रीमत्-शरच्चन्द्रः, इति-अस्य स्थाने।

**सेवायाम्—**

**श्रीमच्छरच्चद्रः,**
**कर्णवालिस स्ट्रीट**
**कालिकाता नगरम्**
**इति व्यलिखत्।**

पूर्णसप्ताहान्तं यावदितस्ततः परिभ्रमन्-कस्मै-अपि पत्रदानेऽसमर्थ आश्चर्यचकितः पत्रवाहकः अचिन्तयत् कोऽयं श्री-मच्छरच्चन्द्रो महोदय : ? इति संयोगवशात्-अष्टमें दिवसे स श्रीमत् शरच्चन्द्रमेवामिलत्, अपृच्छच्च श्रीमन्! वेत्ति भवान्, कोऽयं श्री-मच्छरचन्द्र इति? मनसि अतितरां संकुचितः श्रीमत्-शरच्चन्द्रो मदीयमेवपत्रामिदमित्युक्त्वा पत्रमगृह्णात्।

अस्तु। इमामेव स्थितिमनुस्मरता मयाऽपि तत्तद् वाक्यस्थबहुषु पदेषु सुतरां विजानताऽपि सन्धिनियमो नानुष्ठितः, अपि तु पृथक् पृथगेव पदविन्यासो विलिखितः। अस्तु।

पुस्तकविषये साकारदेवस्वरूपाणां देववाणीविदुषां सत्परामर्शं प्रतीक्षमाणः—

विदुषां वशंवदः स्नेहाधीनश्च
**आचार्य–रविदत्त : 'गौतम':'**
**एम० ए० (संस्कृत-हिन्दी)**
व्याकरणशास्त्री, साहित्याचार्यः
वेदोपदेशकः
७३७—डॉ० मुखर्जीनगरम्—दिल्ली-९

# विषय-सूचीपत्रम

ओ३म्

# देवर्षि-दयानन्द-चरितम्

## —अवतरणिका—

एकोनविंशतितमः शताब्दीकाल इतिहासस्य (विशेषतो भारतीय इतिहासस्य) सूचीभेद्यान्धकार-युगमासीत्। भारतीयभाग्याकाशस्तस्मिन् कालेऽविद्या-अज्ञानान्धकारयोर्घनघटाभिराच्छन्नोऽवर्तत। समाप्ताप्राय आसीत् सकलकल्याणकारिणी विश्वब्रह्माण्डपोषिणी वैदिकसंस्कृतिः, महिमामयजीवनमूल्ययुता शीलसंभृता आर्यसभ्यता च। अथच तां (वैदिकसंस्कृतिं सभ्यताञ्च) समूलमुन्मूलयितुं तत्कालीनप्रधानांगलशासकस्य (वायसरायमहाभागस्य) शिक्षा-परामर्शदाता लार्ड-मेकाले (यश्च तन्वा (शरीरेण) गौरोऽपि-आत्मना मनसा चातितरां कालिमामय आसीत्) अतिप्रयत्नपरोऽभूत्। "यदि कस्यचिद् राष्ट्रस्य जातेश्च विनाशोऽभीष्टः– तदा तस्येतिवृत्तं विनाशयन्तु, (विकृतं कुर्वन्तु), स्वयमेव तद् राष्ट्रं सा जातिश्च विनाशगर्तं गमिष्यति"* इत्युक्तिमिमामनुसृत्य-आंगलशासका अस्माकं वैदिकादिसत्साहित्यमग्निसात्करणोन्मुखा अभूवन्। मोक्षमूलरप्रभृतयश्च क्रिश्चीनशासनसमर्थका विद्वन्मन्या नानाविधविकृतार्थपरिवर्तनैर्वैदिकसाहित्यमार्यसाहित्यञ्च विकृतमनर्थकरञ्चाकुर्वन्।

सत्यसनातनवैदिकधर्मो गोधूमचूर्णनिर्मितस्य तद्दीपकस्य दशां गत आसीत्, यमन्तःस्थितं मूषका भक्षयेयुर्बहिः स्थितञ्च वायसाः स्वग्रासं कुर्युः। विदेशगमनेन स्वच्छताचर्मकर्मिमानवसंस्पर्शेन च भारतीया धर्मभ्रष्टाः, यवनादिजनहस्ताशनेन च जातिभ्रष्टा अभूवन्। प्रभुपूजार्थं निर्मितेषु देवालयेषु पोपपूजारीणाम्-(पूजा+अरीणां–शत्रूणां) मूर्तिपूजकानामेवाभवदेकछत्र साम्राज्यम्। येषु देवालयेषु तथाकथितदेवस्थानेष्वपि सत्सु देवदासीनामधारिणीभिर्निरीहकन्यकाभिः सह प्रावर्तत दुर्दान्तो दुराचारः। सर्वतः प्रासरच्च दम्भमयो घृणितः कार्यकलापः।

एकतः क्रिश्चीनमतानुयायिनोऽस्मान् (आर्यवंशीयान्) क्राइष्टमहाभागस्य-अविपशुगणनायां प्रविष्टान् कर्तुं प्राणपणेन सन्नद्धाः, उतश्च मोहम्मदीयाः स्वीय-मिथ्याचारचरिते मते आर्यजनान् दीक्षितुं बद्धपरिकराः। क्वचिद् बालविधवानां

---

* **If you want to destroy a nation, destroy its history and the nation will perish of its own accord.**

करुणक्रन्दनम्, अपरतश्च– अनाथशिशूनां हृदयविदीर्णकरं प्ररोदनम्। बालविवाहानामवयस्क– (अवयःप्राप्त– अपरिपक्व-) कुमारीभिःसमं वयः प्राप्तपुरुष-विवाहानाञ्च (अयोग्य-अमिलितविवाहानाञ्च) प्रचलितोऽभूद् भूयान् प्रचारप्रसारः। अतिशोचनीया स्थितिरबलानाम्। अपमानिताः, अनादृताः, पददलिताश्च ताः सर्वक्षेत्रेष्वासन्। पादोपानहस्थितिस्तासाम्। "**स्त्रीशूद्रौनाधीयाताम्**" इत्यादि आरोपितवितथवाक्यैस्ता वेदाध्ययनक्षेत्राद् बहिष्कृता आसन्। "**द्वारं किमेकं नरकस्य ?** नारी, प्रभृतिकल्पितवचनैर्नरकद्वाररूपेणोद्घोषिता महिमामयी मातृशक्तिः। उपरते च भर्तरि जीवितामेव निर्दोषां तां कलङ्किनीं मन्यमाना अग्नौ प्राक्षिपन्। आसीत् प्रचलिताऽनर्थकरीभ्रूणहत्या। जन्मक्षणानन्तरमेव निरीहकन्यका धरित्रीगर्भे (भूमिगर्भे) न्यखातयन्।

इतोऽप्यधिकशोचनीयतरा स्थितिः सेवकशूद्राणाम्। शंकराचार्यनिम्बार्काचार्यमध्वाचार्यप्रभृतय आचार्यप्रवरास्तेषां कृते समुदघोषयन्— "वेदमन्त्रांश्चेत् शूद्राः शृणुयुस्तेषां कर्णेषु प्रक्षेप्तव्यम् (पूरणीयम्) उष्णं त्रपु, उच्चारयेयुश्चेत्तेषां जिह्वाछेदनम्, यदि च ते वेदमन्त्रान् **कण्ठस्थी**कुर्युस्तिदा सर्वमेव देहं तेषां विदारणीयम्-" इति। अतो विस्मारिता वेदाः, पूर्णतोऽवरुद्धं तेषामध्ययनाध्यापनम्। मानवरचितग्रन्था वेदानामुच्चासनमगृह्णन्। "अपहृताः शंखासुरेण वेदाः" इति सर्वैरेव स्वीकृतः प्रसारितः प्रवादः। प्रवर्तिते प्रतिप्रत्यूषेऽमृतनिर्झरिणीनां सुरभीणां (गवां) गलेषु परापतत्– आरापातः। एवंविधे पापपरिपूर्णे प्रसृतगहनतमोमये च समये कश्चिदेवं विधो दिव्यात्मवान् महान् मानवोऽपेक्षित आसीत्, यस्मिंश्च गौतमकपिलकणादकुमारिलभट्टपाण्डित्यम्, आदित्यब्रह्मचारिणो वीरवरस्य हनुमतः पितामहभीष्मस्य च ब्रह्मचर्यम्, शंकराचार्यस्य योगवैभवम्, भीमस्य बलम्, बुद्धस्य अनुपमत्यागवैराग्यभावत्वम्, मर्यादापुरुषोत्तमश्रीरामस्य मर्यादापालनसामर्थ्यम्, योगिराजश्रीकृष्णस्य छत्रपतिशिवामहाभागस्य च नीतिचातुर्यम्, महाराणाप्रतापस्यौजस्तेजःशौर्यम्, महर्षिपतञ्जलि-व्यासयोश्चाध्यात्मिकवैभवमेकत्रैव पूर्णं पुञ्जीभूतं भवेत्। फलतस्तस्य करुणाकरस्य परमप्रभोरनुकम्पया, **आर्यराष्ट्रभारतस्य** सौभाग्यपरम्पराभिश्च सर्वैरेवगुणगणैरेतैरलंकृतो विभूषितश्च युगपुरुषो देवर्षिर्दयानन्दसरस्वती सकलमानवजगज्जीवनं समुज्ज्वलीकर्तुं (प्रकाशयितुम्) पुण्येऽहनि पुण्यमयीं भारतभुवं स्वीयशुभजन्मनाऽलमकरोत्।

# जन्म बाल्यकालश्च

दिव्यात्मा दयानन्द आदर्शो देवर्षिः; अतो नहि स स्वजन्मस्थानस्य, कुलस्य स्वपित्रोश्च नामादिकमुदलिखत्; परन्तु श्रद्धालवो भक्तजनाः सुतरामन्विष्य तस्य देवर्षेः पूर्ववृत्तजातं सम्प्राप्नुवन्नेव। स्वनामधन्यदयानन्दस्य देवर्षेर्जन्म १८८१ विक्रमसंवत्सरे फाल्गुणमासस्य कृष्णदशमी तिथौ शनिवासरे तदनु १८२५ ईस्वीय (क्राइष्ट) संवत्सरे फरवरी-मासस्य द्वादश तारिकायां गुजरातप्रान्तान्तर्गत मौरवीराज्यस्य टंकारा नामधेयग्रामे समभूत्। श्रीकर्षणत्रिवेदी (तिवारी) महर्षेर्जनकः; यश्च औदीच्यब्राह्मणः, पर्याप्तभूस्वामी, धनादानप्रदानकार्यकलापे च प्रतिष्ठितो (लब्धप्रतिष्ठो) भद्रपुरुषः आसीत्। १८७३ ईस्वीय संवत्सरे मन्ना-चौधरी-महाभागेन सह प्रचलितवार्तालापप्रसंगे स्वामिमहोदयः स्वयमेव प्रावोचत्—

"टंकाराग्रामे मम पितुस्तदेव प्रतिष्ठितं पदमासीत्, यच्च बृटिशभारत-प्रशासने राज्यकरविभागाधिकारिणः– (राज्यकरसमाहर्तुः– रेवेन्यूकलैक्टर-माल-अफसर-आदेः) पदमवर्तत। "गुजरातप्रान्ते एतादृशमधिकारिणम्" 'जमेदार' इति पदेन सम्मानयन्ति" इति।

राज्याधिकारिणः सम्मानितपदप्राप्तोऽपि श्रीकर्षणमहाभागः प्रचुरधनधान्य-सम्पन्नो विशेषाधिकारयुक्तः प्रबुद्धो विद्वानवर्तत। शैवमते सोऽतीव निष्ठावान्-आस्थावांश्चासीत्। एवंविधसमृद्धराज्याधिकारिणो धर्मशीलसद्गृहस्थस्य सानन्दं सदनं देवषिर्दयानन्दः स्वीयज्योतिर्मयात्मन आलोकेन समालोकयत्।

महर्षेर्दयानन्दस्य जन्मनाम मूलशंकरः, स च पित्रोः प्रथमा सन्ततिः। सुपुत्ररत्नप्राप्त्या पित्रोर्हृदयारविन्दमसीमहर्षोल्लासेनोल्लसितमभूत्। सम्पूर्णपरि-वारे आनन्दोत्सवः प्रावर्तत। तस्मिन् हर्षोत्सवे च विविधवाद्ययन्त्राणां ध्वनयोऽजायन्त। नगरनिवासिनो बन्धुबान्धवाश्च सर्वतः सानन्दं साधुवादं व्यतरन्। गृहद्वारि मांगलिकं हवनयज्ञकार्यं सम्पादितं, येन प्रसूता प्रसूतिश्च रोगकरकृमिभिः सुरक्षां लभेयाताम्।

कुलमर्यादानुरूपं नवजातशिशोर्जातकर्मसंस्कारसुकृत्यं सम्पादयन् प्रहर्षपूर्णः पिता (श्रीकर्षणमहाभागः) मधुसिञ्चितस्वर्णशलाकया शिशोः रसनायां 'ओ३म्' पदं विलिख्य पूर्णास्तिकभावेन तस्य कोमलकान्तकर्णयोः "वेदोऽसि" इति पदद्वयं प्रावोचत्। शिशुर्मूलशंकरश्च देवर्षिदयानन्दरूपेणोदीयमानः सन् कर्णयोः प्रोक्तं पदद्वयमिदं पूर्णरूपेण सार्थकमकरोत्। यतोहि नहि तत्समः कश्चिदास्तिको वेदोद्धारकः प्रचारको वा अस्मिन् युगेऽजायत। यथा च मैडम ब्लैवट्स्की समुदहरत् "Dayananda was possessed of the vedas." 'वेदमयो हि देवर्षिर्दयानन्दः" इति।

एकादशे दिवसे शिशोर्नामकरणसंस्कारोऽतिसमारोहेण सम्पादितः। शिशुर्मूलशंकरो ममतामये मातुरङ्के भूरिस्नेहभावभरितयोः पितुर्हस्तयोर्बन्धुबान्धवानां स्नेहसिक्तलालनपालने च सुरक्षिताशोकबालद्रुम इव शुक्लपक्षस्य च पूर्णेन्दुरिव अनुदिनमवर्द्धत।

प्रारब्धे पञ्चमे वर्षे मूलशकरस्य विद्यारम्भो महता समारोहेण सम्पन्नोऽभवत्। बालो मूलशंकरोऽतिसुन्दराणि नवानि परिधानानि पर्यग्रहीत्। सर्वमेव सदनं स्वच्छं सुसज्जीकृतञ्चावर्तत। गृहद्वारेषु च विस्तारिताः विविधरागरञ्जिताश्चित्रकलाः। सुसम्पादितो यज्ञः प्रदत्तबहुदक्षिणो विप्रभोजश्च। पुण्यावसरेऽस्मिन् समागतनरनारीणां समक्षं श्रीकर्षणमहाभागस्तेजस्विनं वर्चस्विनञ्च दर्शनीयं स्वपुत्रमङ्कमुपवेश्य-इष्टदेवान् स्मरन् स्वयंदेवनागरीवर्ण मालाम् (अक्षरान्) अशिक्षयत्।

सम्पन्ने विद्यारम्भे यदा बालो देवनागरीवर्णमालायां पूर्णाभ्यस्तो जातः, तदा दाक्षिणात्यप्रान्तेषु संस्कृतपाठनस्य प्रचलितपद्धतेरनुरूपं प्रथमं तं (बालम्) संस्कृतशब्दरूपावलीमपाठयत्। ततो धातुरूपकारकचक्रसमासचक्रादिभिः सहैव मातृभाषा (गुजराती) पुस्तकान्यपि बालकमपाठयत्। वयसोऽष्टमवर्षपूर्तेः प्रागेव मूलशंकरः संस्कृतव्याकरणस्य सामान्यज्ञानातिरिक्तं हितोपदेशम्, रघुवंशमहाकाव्यस्य कतिचित् सर्गांश्चापि सुतरामधीतवान्, एवं शिवसहस्रनाम शिवमहिम्नःस्तोत्रादीनि कतिचित् स्तोत्राण्यपि कण्ठस्थीकृतवान्। न केवलं तदध्ययनमात्रमेवासीदपितु स नियमितसन्ध्यावेलासु तेषां स्तोत्राणां पाठमपि पुण्यं मन्यमानस्तत् परायणपरो बभूव। एवञ्च सर्वमेवेतो यावदेतदध्ययनजातं पितुः प्रशिक्षणेनैव सम्पन्नम्।

एवं शनैः शनैर्विद्याध्ययने बालसुलभक्रीडासु च प्रवृत्तो मूलशंकरोऽष्टमे वर्षे पदार्पणमकरोत्। ''**अष्टमे वर्षे ब्राह्मणमुपनयीत**'' अष्टमे वर्षे ब्राह्मणबालकस्य यज्ञोपवीतसंस्कारः सम्पादनीयः, इति गृह्यसूत्रादेशमनुसरन् श्रीकर्षणमहानुभावः सविशेषसमारोहेण स्वतनयस्य संस्कारमिमं सम्पन्नमकारयत्। उपनयनसंस्कारानन्तरञ्च मूलशंकरस्य वेदाध्ययनं समारब्धम्। यतो बालकस्य पिता-औदीच्य-ब्राह्मणोऽतस्तस्य प्रथमं सामवेदप्रशिक्षणं प्रचलितम्। परं तद् विहाय पुनस्तस्य स्थाने रुद्राष्टाध्यायी पाठनं नियतीकृतम्। तदनन्तरञ्च तं सम्पूर्णो यजुर्वेदः कण्ठस्थीकारितः। एवञ्चाचतुर्दशवर्षान्तं यावद् बालो मूलशंकरः सम्पूर्णां यजुर्वेद-संहितां कण्ठस्थीकृतवान्। अन्ये चापि केचन वेदांशास्तस्य कण्ठरताः (गताः) अभूवन्। वेदातिरिक्तं निरुक्तम्, निघण्टुः, पूर्वमीमांसा तथा केचन कर्मकाण्डग्रन्था अपि तस्याध्ययनविषया बभूवुः। अथ च तेषां गहनपरिशीलनमेव तस्य प्रमुखाध्य-

यनमननविषयोऽभूत्।

मूलशंकरस्य पिताऽतिनिष्ठावान् शिवभक्त आसीत्, अतः स हि नित्यमेव पार्थिवपूजनं व्यद्धात्। तस्य पुत्रोऽपि श्रद्धाशीलः शिवभक्तो भवेदिति तस्य स्वाभाविकी समीहा। बालको विधिपूर्वकं व्रतोपवासादिकमाचरेदिति स सदैव समीहते स्म, अतः स नित्यमेव देवालयेषु देवकथासु शिवोत्सवेषु च सपुत्र एवागच्छत्। एवञ्च चतुर्दशवर्षवयःपूर्तिं यावन्मूलशंकरस्य मनोभूमावपि–शिवभक्तिबीजांकुरं पल्लवितम्।

## अद्भुतप्रबोधो मूर्तिपूजायामनास्था च

१८९४तमे संवत्सरे पित्रोर्लालनपालने प्रवर्द्धमानो बालको मूलशंकरो यदा पूर्णचतुर्दशवर्षदेशीयो जातस्तदा पिता तं महाशिवरात्रिव्रतमनुष्ठातुमादिशत्; परं विशेषो मातृस्नेहः (मोहः); अतः "नायं सुकोमलो बालो व्रतोपवासादिक्लेशसहने समर्थः, स्वल्पवयस्येव श्रीमान्नैनं धार्मिककर्तव्य सोपानारोहणेऽतियत्नविशेषेण योजयतु" इति सा स्वपतिं प्रार्थयत्; परं सुस्थिरधारणाधनी पिता पत्नीमुपेक्ष्य पुत्राय व्रतपूर्तिं समादिशदेव। प्रथमं मूलशंकरोऽपि विषयेऽस्मिन् किञ्चित्परावृत्तः; परं स्वर्गापवर्गप्राप्त्याद्यनेक-विधप्रलोभनाकृष्टो व्रतमाहात्म्यञ्च श्रुत्वा व्रतं पारयितुं सोत्साहो जातः। व्रतपूर्त्यर्थं देवालये समुपस्थितश्च

समादिष्टो मूलशंकरः– समस्तरात्रावद्य जागरणं विधेयम्; अन्यथा व्रतस्य निष्फलत्वम्; पूजाप्रकारोऽपि तस्मै समुपदिष्टः। शिवरात्रौ स्थानीयसर्वसाधारणनागरिकजनाः, विशिष्टः शिवभक्तप्रतिष्ठितवर्गश्च नगराद् बहिर्बृहच्छिवालये एकस्मिन् संभूय व्रतपूर्वकं पूजापाठजपजागरणादिकमन्वतिष्ठन्। सम्पूर्णशिवालयः– 'टन-टन, हर-हर, बम-बम' महादेवादिभिर्विविध-नादैर्निनादित आसीत्। स्नानशुचिशरीराः, शामूल्य (कौषेय) शाटिकाधराः, विभूतिविरचितभालस्थलाः; रुद्राक्षमालामण्डितग्रीवाः हस्तस्थितशुद्धोदकपूर्ण-कलशादिपूजासामग्रीसम्भाराः, शिवाराधकश्रेणय एकैकशः कृत्वा शिवालयं प्राविशन्। सर्वत्र प्रपूरितो दीपप्रकाशः, धूपगन्धश्च सम्पूर्णं वायुमण्डलं सुगन्धितमकरोत्। भक्तिभावतः सुचारूरूपेण सम्पन्ना प्रथमप्रहरपूजा, यथा तथा द्वितीयप्रहरपूजाऽपि परिसमाप्ता; परं समापतिते तृतीयप्रहरे सर्वेषामेव भक्तजनानां लोचनेषु तन्द्रा प्रसरिता। निद्रादेवी सर्वानेव मूर्च्छितानिव विधाय स्ववशमनयत्। मूलशंकरस्य पितैव सर्वतः प्राक् निद्राङ्केऽपतत्।

यदा हि पूजारिणः सर्वानपि भक्तजनान् सुखदनिद्रागमनगुञ्जितनासारन्ध्रानपश्यन् तदा तेऽपि देवालयस्य बहिर्भागे समागत्य निद्रालीना बभूवुः।

आसीत्सर्वतो गहननिस्तब्धताया नीरवतायाश्च साम्राज्यम्, स्थिरसंकल्पो मूलशंकरो ह्येव नीरवतायामस्यामेकाकी ( केवलः ) जागर्ति स्म। यतः सोऽपठत्, अशृणोच्च—

**'यो जागार तमयं सोम आह तवाऽहमस्मि सख्ये न्योकाः।'**

—ऋग्वेद ५।४४।१४

अर्थाद् व्रतसाधनायां यो जागर्ति तमेव साधकं सर्वसुखशान्तिप्रदः सोमः (परमः प्रभुः) प्रब्रवीति, त्वया सहैव एकत्र व्याप्नुवन्नहं ते सखा। अतस्तं सत्यसखायमन्विष्यन्नेकाकी मूलशंकरो ह्येव सर्वेष्वपि सुप्तेष्वजागरत् यदा हि निद्रापाशाः समापतन् तदा लोचनयोर्जलकणान् प्रक्षिप्य स्वात्मानं सावधानं सचेतसञ्चाकरोत्। सोऽतिव्याप्तभयो यतः समागतायां निद्रायां व्रतभंगः सम्पत्स्यते; अतः शिवदर्शनोत्सुकः स निश्चललोचनः शिवप्रतिमां पश्यन्नवर्तत।

तस्मिन्नेव क्षणे स साश्चर्यमपश्यत्; यत् कतिपयक्षुद्रमूषकाः स्वस्वबिलेभ्यो निष्क्रम्य शिववेद्यामारुह्य— उत्प्लुत्योत्प्लुत्य चेतस्ततः कूर्दन्तो विविधं व्यायाममकुर्वन्। ते निर्भयाः सन्तः सानन्दं वेदिस्थितं नैवेद्यभोगं भुञ्जन्तः स्वीयमलमूत्रेण शिववेदिमपि मलिनामकुर्वन्। मेघमण्डलेषु दिव्यन्ती विद्युद्रेखेव, सिन्धुसलिले चोच्चलन्ती-उत्तालतरंगलेखेव मूलशंकरस्य बालहृदयेऽपि दृश्यमिदं दर्शं दर्शं दिव्यज्ञानज्योतिरदिव्यत्। विविधविचारतरंगतरङ्गायिते हृदये स सोद्विग्नोऽचिन्तयत्। मया श्रुतमासीद् यद् भगवान् शिवस्त्रिपुरारिः* (त्रिपुरविनाशकः सत्यशिवः)। तस्याराधनेनायमात्मा सकलकल्याणं पूर्णानन्दमयममृतत्त्वञ्चानुष्ठातुं क्षम इति।

परं कीदृशोऽयं शिवः ? यश्च क्षुद्रमूषकेभ्योऽपि स्वात्मानं परित्रातुमक्षमः। सत्यशिवस्तु त्रिशूलधारी, कैलासविहारी, स्वपाशुपतास्त्रेण च सर्वासुरसंहारी

---

* यथाहि— ब्रह्माण्डक्षेत्रे जन्माभिगृह्णन् जीवात्मा त्रिषु शरीरपुरेषु निवसति, मुक्तात्मनो बन्धनकारीणि स्थूलसूक्ष्मकारणरूपाण्येतानि त्रीणि शरीराण्येव त्रिपुराणि; यावदात्मा तस्य परम- पितुः पूर्णप्रसादं प्राप्नोति तावत् त्रीण्येवैतानि शरीरपुराणि नश्यन्ति। अतएव स मङ्गलमयः प्रभुरेव त्रिपुरारिशब्देनाभिधीयते। अयमेव त्रिपुरारिः सत्यशिवः। यथा च— शिवु कल्याणे इति संस्कृतधातोः शिव इति पदं सम्पद्यते; य आत्मने शिवम्— सकल कल्याणं— पूर्णानन्दं वितरति— कल्याणकरत्वात् स परमप्रभुरेव सत्यशिवः, यमभिगन्तुं मूलशंकरः शिवरात्रिव्रतं समाचरत्।

वरप्रदानेऽभिशापप्रदाने च समर्थ इति। प्रतीयते नायं सत्यशिवः, अचेतनः, अक्षम-प्रस्तरप्रतिमारूप एव केवलम्। नास्य जडरूपस्य तथाकथित देवस्य समाराधनेन स्वल्पीयसी सिद्धिरपि सम्प्राप्तुं शक्या, किं पुनर्मृत्युञ्जयपदावाप्तिरमृतत्त्व-सम्प्राप्तिर्वेति।

यदा तस्य जिज्ञासा न प्रशान्ता, तदा पितरमुद्बोध्य शंकासमाधान-मैच्छत्, परं पितुः पार्श्वे समुत्तेजिततर्जनां विहाय नान्यत्किञ्चित्समीचीनं समाधानमासीत्।

पिता प्रावोचत् "कलिकालेऽस्मिन् भगवतः शिवस्य साक्षाद् दर्शनम् असम्भवम्; अतस्तस्य प्रतिमापूजनमेव सर्वेष्टसिद्धिकरम्", परमनेन पितुरुपदेश-परकसमाधानेन मूलशंकरस्य सन्तुष्टिर्नाभूत्। घटनयाऽनया च तस्य मूर्तिपूजा-यामास्था पूर्णतः परिसमाप्ता। ततः प्रभृति च स आजीवनं मूर्ति-(प्रतिमा)-पूजनमत्यजत्। अथच पुनः कियदपि बृहद् भयं प्रबलप्रलोभनं विकटविपदोऽपि च तं प्रतिमां प्रति नतमस्तकं कर्तुं नापारयन्।

"साक्षात्-शिवदर्शनमहं करिष्ये" इति सुस्थिरं संकल्प्य पितुरादेशञ्चोपलभ्य मूलशंकरो देवालयाद् गृहं परावर्तत। एतन्मिथ्याव्रतं प्रति तस्यास्था पूर्णतः परिसमाप्ता; अतः पितुर्निषेधेऽपि स गृहमागत्य मातरं भोजनमयाचत भुक्तवांश्च। यतो मूर्तिपूजां प्रति तस्यास्था विरता; अतः स पितृव्यं प्रार्थयत् "अध्ययनकारणान्नाहं प्रतिमापूजनादिकार्यजातं निर्वर्तयितुं प्रभविष्यामि; अतो भवद्भिर्विषयेऽस्मिन् मां पितुरादेशतो विमोचयितुं प्रार्थनीयम्" इति। अथचैवं मातुः पितृव्यस्य च प्रसादान्मूलशंकरोऽस्मात् प्रतिमापूजन-रूपजालतो विमुक्तः। ततः प्रभृति मूलशंकरः सम्पूर्णप्राप्तसमये विद्याध्ययने ह्येव संलग्नः। समीपवर्तिन एकस्य ब्राह्मणदेवस्य सकाशात् स निघण्टु-निरुक्त-मीमांसादिशास्त्राणि-अध्येतुमारभत। स्मार्त- (स्मृति)-ग्रन्थानाम- ध्ययनमपि तेन प्रारब्धम्।

## स्वसुर्निधनम् – मृत्युविजयसंकल्पश्च

मूलशंकरो हि पितुर्ज्येष्ठपुत्रः। तस्य द्वे अनुजे द्वौ चानुजावास्ताम्, एवञ्च पितुः पञ्च सन्ततय आसन्। "**मा भ्राता भ्रातरं द्विक्षत्**" इति श्रुतिसूक्तेरनुरूपं सर्वभ्रातृभगिनीषु परस्परं महान् स्नेहोऽवर्तत। १८९६तमे विक्रमसंवत्सरे मूलशंकर आयुषः षोडशतमे वर्षेऽवर्तत; तदा एकस्यां रात्रौ स स्वीयपरिवारजनैः सह एकस्मिन् नृत्योत्सवे कस्यचिन्मित्रस्य गृहमगच्छत्। नातिचिरं प्रवृत्ते ह्येव नृत्योत्सवे गृहसेवकः कश्चिदुद्विग्न इवागत्य मूलशंकरस्य चतुर्दशवर्षीयां भगिनीं

विशूचिकारोगग्रस्तां न्यवेदयत्। परिवारोपरि वज्रपातमिव वृत्तमिदं श्रुत्वा सर्वेऽपि पारिवारिकजनाः स्वगृहं परावर्तन्त। सर्वोऽपि गृहजन औषधोपचारे संलग्नः, भिषग्वराश्चापि बहुशः प्रयत्नपरा बभूवुः परं निष्फलेषु सर्वप्रयत्नेषु मूलशंकरस्य प्रियभगिनी चतसृष्वेव होरासु स्वप्राणानत्यजत्। यदा हि दारुणघटनयाऽनया सर्वोऽपि परिवारजनः शोकविह्वलोऽविरलाश्रुधाराप्रवाहितहाहाकारेण प्ररुदन्नासीत्; माता च ममतामयी शोकशल्येन विमूर्च्छितेव जाता, शोकसागरे निमग्नश्च सकलस्नेहिवर्गस्तदा मूलशंकरो ह्येव केवलं मृतभगिनीशयन-(शय्या)-समीपस्थ भित्तिसंलग्नोऽश्रुविरहितलोचनाभ्यां तूष्णीं स्थितः प्रियभगिनीशवमेकदृशा निरैक्षत। तस्य चेतसो गहनचिन्तामजानन्तः बान्धवजनास्तस्योपरि बहुतरं कटुकटाक्षान् प्राक्षिपन्। स्नेहशीलो जनकः सततप्रेमप्रदर्शिनी जननी च तस्मै 'वज्रहृदयः', 'पाषाणहृदयः' इति विशेषणं प्राददताम्, परं मूलशंकरस्य सन्मुखे घटनेयमेतादृशीं जटिलां समस्यामेकामुपास्थापयत्; यस्याः समाधानार्थं तस्य चित्तमतितरामुद्विग्नमभूत्।

यथा हि प्रबलप्रभञ्जनवेगोऽम्भसि नावोन्मुखं परावर्तयति यथा च विशालाद्रिशिलाभिराहतः सरित्प्रवाहः परावर्तते; एवमेवादृष्टपूर्वया घटनयाऽनया मूलशंकरस्य चित्तवृत्तयोऽपि क्रमशः स्वकीयदृष्टिप्रवाहं परावर्तयन्। विद्युत्पातप्रकम्पितमानव इव मरणभयभीतो मूलशंकरोऽचिन्तयत्। मम भगिनीव सर्वेऽपि लोका एकैकशः कृत्वाऽवश्यमेव करालकालग्रासग्रस्ता भविष्यन्ति । एवमेव मयाऽपि-एष एव मार्गो ध्रुवमनुसरणीयः। अमोघैर्यमकालपाशैर्नहि किमपि लघुबृहज्जीवजगदिदं स्वात्मत्राणं कर्तुं प्रभविष्यति। हा ! असह्यैषा मरणजन्यवियोगवेदना सर्वैरेवैकदावश्यं भविष्यति सह्या। सम्पूर्णमपि जीवजगद् ध्रुवं द्रक्ष्यति तद् दुर्दिनम्। वस्तुतो जलबुद्बुदसमानं क्षणभंगुरम्, सन्ध्याराग इवास्थिरम्, पलाशपत्रपतिततुषारकण इव चञ्चलमिदं जीवितम्; अतोऽवश्यं कश्चिदुपायोऽनुष्ठेयो येन जन्ममरणयोर्दारुणदुःखान्मुक्तिलाभोऽमृतजीवनस्य चोपलब्धिर्भवेत्। घटनामिमामनुसृत्य महर्षिः स्वयमेव स्वात्मकथायामलिखत्—

"मृतभगिनीवियोगो मम जीवनस्य प्रथमः शोकः, तेन शोकेन च मम हृदयं केनचिद् विलक्षणभावेन व्यथितमभूत्। यदा हि ममात्मीयजनाः स्वजनाश्च मृतभगिनीमभितः करुणपरिदेवनपरा आसन्, तदाहं पाषाणनिर्मितप्रतिमेवा-विचलभावेन स्थितोऽचिन्तयम् "संसारेऽस्मिन् सर्वैरेव जनैरेकदा मृत्युमुखे प्रवेष्टव्यम्; एवमेव मयाऽपि चावश्यमेव मृत्युग्रासेन भवितव्यम्" इति, फलतस्तदाहमचिन्तयम् "क्व गमनेनाहं मृत्योर्यन्त्रणायाः सुरक्षितो भविष्यामि मुक्तिपथं च द्रष्टुं शक्ष्यामि" इति। अथच तत्रैव स्थितोऽहं स्थिरसंकल्पमुकर्वम्; यत् "यथैव संभविष्यति तथैवाहं मुक्तिपथावलम्बनेन- अवर्णनीयमृत्युक्लेशात्

स्वात्मानं परिरक्षयिष्यामि'' इति।

## परमप्रीतिपरायणपितृव्यस्य निधनम्

१८९९तमे विक्रमसंवत्सरे मूलशंकर आयुष एकोनविंशतितमे वर्षे पदार्पणमकरोत्। वर्षेऽस्मिन् तं प्रति-असीमस्नेहशीलो विद्वान् धार्मिकश्च तस्य पितृव्योऽपि विशूचिकारोगग्रस्तोऽभवत्। कृतेष्वपि-अनेकौषधोपचारेषु न कोऽपि सफलो जातः। मरणासन्नपितृव्यो मूलशंकरं विसृजन्, अन्तिमे क्षणे शोकविह्वलः स्वनेत्राभ्यामश्रूणि व्यमुञ्चत्। स्नेहशीलपितृव्यस्यावस्थामिमां निरीक्ष्य मूलशंकरोऽप्यतितरामधीरः सन् करुणक्रन्दनं कुर्वन्नश्रुधारासारेण रुरोद। रोदनेन चातिशोथयुते तस्य लोचने गंगायमुनयोः प्रवाहं प्रावहताम्। न हि स स्वजीवने कदापि-एतावद् रोदनमकरोत्। घटना चेयं तस्य वैरोग्यज्योतिरप्यतितरा-मुद्बुद्धमकरोत्।

'मृत्युर्हि महान् गुरु; परं बिरला ह्येव तस्य महागुरोः प्रशिक्षणं गृह्णन्ति। ये चास्य परमगुरोरुपदेशं शृण्वन्ति धारयन्ति च ते ह्यमृतत्वं लभन्ते। म्रियमाणः पितृव्यो मूलशंकरम् **'मृत्यवे त्वा परिददामि'** इति सन्दिशन्निव वियुक्तः। मूलशंकरश्च मौनमपि सन्देशमिममश्रौषीत्। स्वात्मानं च मृत्यवे समर्पयत्। फलतो दयानन्दरूपेण स मृत्युमजयत्। मृत्युश्च तस्य दयानन्दस्वरूपात् पराजितः। स च मृत्युञ्जयोऽभवत्।

## अशान्तधाराः

सम्प्रति मूलशंकरस्य कृते भगिनीपितृव्ययोर्निधनात् सर्वोऽपि संसारस्तस्य पदार्थाश्च असारभूता अभूवन्। स हि वस्तुमात्राद् ग्लानिमभजत्। स्वेष्टमित्रजनान् विद्वज्जनांश्च सोऽमृतत्वप्राप्तेरुपायानपृच्छत्। सर्वे ह्येव सुधियो विद्वांसश्च परमपदप्राप्तये तस्मै साधनरूपेण गृहत्यागं योगाभ्यासञ्चोपादिशन्। अनेन च प्रबललालसासंप्रेरितमूलशंकरस्य मनसि योगाभ्यासस्य समीहा समाविष्टा। स हि स्वमनस्यचिन्तयत् ''नायं योगाभ्यासो गृहकार्यकलापेषु सत्सु मोहममताजालेषु च साधयितुं शक्यः; अतः गृहं परित्यज्य क्वचिद् गन्तव्यमेव। एतन्निश्चयानन्तरं स प्रगटरूपेण स्वमित्रजनेषु निजमनोभावमवदत्। ''निश्चितं मया असारोऽयं संसारः नात्र कश्चिदेवंविधः पदार्थो यदर्थमयमात्मा (मानवात्मा) जिजीविषां परिपालयेत्; न चापि मनोरमं वस्तुजातं किञ्चिद् यस्मिन् मनो रमयेत्। सार-(सत्त्व)-हीनं नीरसञ्च संसारमिममहं परिकल्पयामि'' इति। मित्राणि सम्बन्धिजनाश्च मूलशंकरस्य मनोभावान् तस्य पित्रोः (यशोदाबाई-श्रीकर्षणमहा-भागयोः) पार्श्वे प्रावदन्। तौ दम्पती च पुत्रस्य कृते सतत सावधानावभवताम्।

इतिहासेऽनेकान्येतादृशोदाहरणानि समुपलभ्यन्ते, येषु दयानन्दसमविरक्त-वीरान् मोहबन्धने बद्धुं बन्धुवर्गो विवाहशृंखलामेव सर्वोत्तमबन्धनविधाममन्यत। इमामेव परम्पराप्राप्तपद्धतिं मूलशंकरस्य पितरावपि बहुतराममन्येताम्। तौ च शीघ्रतया तस्य परिणयार्थं बद्धपरिकरावभूताम् । विंशतितमे वर्षे ह्येव स्वसुपुत्रस्य विवाहकार्यं सम्पादनीयमिति तौ स्थिरसंकल्पावास्ताम्। वैराग्यज्योतिरिदमनु-रागमेघस्य धारासारवर्षाभिः स्वयमेव प्रशमिष्यति इति तयोः सुस्थिरं मन्तव्यम्। मूलशंकरोऽपि यदाऽजानात् ''यत्तस्य सुस्थिरबन्धनार्थं प्रबलः परिणयपाशो व्यवस्थापितः''तदा स मित्रजनानां मुखेन प्रस्तावस्यास्य प्रबलविरोधमकरोत्। तस्य विरोधेन च विवशः पिता तस्मिन् वर्षे वैवाहिककार्यं स्थगितमकरोत्।

स्थगितो विवाहः; परं मूलशंकरश्चिन्ताविरतो नाभूत्। स हि शङ्कितो यत्समारब्धे एकविंशतितमे वर्षे पुनरपि विवाहप्रसंगः समारप्स्यते, तदा च तस्य स्थगनमसम्भवप्रायो भविष्यति; अतः १९००तमे संवत्सरे विंशतितमवर्षस्य समाप्तावेव तेन स्वपिताश्रीः प्रार्थितः ''मया हि व्याकरण-ज्योतिष-वैद्यक-(आयुर्वेद)-विषयाणां ग्रन्था अध्येतव्याः, एतदर्थं च काशी (वाराणसी) गमनमावश्यकं यतस्तत्रैवैतद्विषयकग्रन्थानामध्ययनं सुकरं स्यात्'' इति। स्वयं शास्त्रज्ञो विद्वान् श्रीकर्षणः स्वपुत्रस्य प्रस्तावेनानेन सहजतया सम्मतो जातः, परं स्नेहशीला जननी या सदैव पुत्रस्य प्रस्तावानभ्यनन्दत्- एतद्विषये स्वीयां विमतिं प्रादर्शयत्। सा हि प्रस्तावेऽस्मिन् पुत्रस्य पूर्णगृहत्यागभावमन्वभवत्; अतः सा स्वपुत्रं वाराणसीं गन्तुं नान्वमन्यत, अवदच्च— अनुभवाम्यहम् ''शास्त्राणां बह्वध्येतारो युवानो विरक्ता भवन्ति'' अतो नाहं त्वां काशीं गन्तुमनुमन्ये। ततश्च मूलशंकरेण प्रार्थितम् ''अस्मद् ग्रामस्यैव नातिदूरे क्रोशत्रयमात्रस्थितो ह्येकोऽस्मत्सम्बन्धी विद्वान् विप्रः प्रतिवसति; तत्सकाशमेवाहमध्ययनार्थं प्रेषणीयः'' इति। पितरौ च प्रस्तावेनानेन सम्मतौ, अतस्तयोरनुमतिमवाप्य मूलशंकरस्तस्य विदुषो विप्रस्य पार्श्वेऽध्ययनार्थं सम्प्राप्तः; परिश्रमेण चाध्येतुमारभत।

मूलशंकरो हि अपूर्वमेधाशीलः; अत्यद्भुता चमत्कारिणी च तस्य तर्कशक्तिः; अत्युत्कृष्टश्चोहापोहसामर्थ्यम्; सद्विद्याप्राप्तेरभिलाषश्च प्रबलतमः; गुणैरेतैर्विभूषिताश्छात्रा गुरुजनानामतिप्रीतिभाजो भवन्ति। अतोऽवश्यमेव मूलशंकरस्याचार्योऽपि एतादृशं मेधाविनं शिष्यं सम्प्राप्य धन्यं स्वात्मानममंस-यिष्यत। एकस्मै सुपात्रशिष्याय स्वविद्यादानावसरञ्चोपलभ्य हर्षातिरेकञ्चाप्यन्व-भविष्यत्। परमतिसाधारणप्रमादेनैकेन स एतादृशसुयोग्यतमशिष्यतः अभिवञ्चितः। एकदा गुरुशिष्यवार्तालापावसरे प्रचलितविवाहप्रसंगे संयोगवशात्-

मूलशंकरस्य मुखात् शब्दा इमे निःसृताः "विवाहविषये मे मनसि स्थितो जुगुप्साभावो न कदापि निर्गन्तुं शक्यते" इति। स्वशिष्यमनोभावान् विज्ञाय गुरुवरोऽतिविह्वलो विकलश्च सञ्जातः। स हि स्वविश्वस्तशिष्यस्य विश्वासं संरक्षितुं न प्राभवत्। विश्वासं चेममवज्ञाय सन्देशमिमं मूलशंकरस्य पितरौ सम्प्रैषयत्। स्वपुत्रस्य विरक्तिविचारैः सहजरूपेण विचलितौ पितरौ ततः स्वपुत्रं परावर्तयामासतुः; सपदि च तं विवाहबन्धने बद्धुं प्रयासपरावभवताम्।

## गृहत्यागः

मूलशंकरो गृहं परावृत्यापश्यत्, यत्तस्य वैवाहिकवस्त्राभूषणानि, नानाविधविवाहसामग्रीसम्भाराश्चैकत्रीक्रियन्ते। सर्वमिदं दृष्ट्वा स विस्मितः जातः; अतितरां खिन्नं तस्य चित्तमभवत्। सर्वे ह्येवेष्टमित्रबन्धुबान्धव-जनास्तस्य विवाहोत्सवं द्रष्टुं समुत्सुका आसन्। दूरवर्तिसम्बन्धिजन-समागमनस्यापि समयः सम्प्राप्तः। एकस्य समृद्धगृहस्थस्य विशालगृहांगनं स्वच्छं सुसज्जितश्चाभवत्। अतितरां प्रमुदितः पिताश्रीः; ममतामयी माता च नह्यानन्दसीमानममन्यत। गृहवर्तिनः सर्वे ह्येव-आबालवृद्धा हर्षितहृदयाः प्रमुदितवदनाश्चासन्। सर्वस्मिन् सद्मनि हर्षोल्लासप्रवाह इव प्रसृत आसीत्। परिवारजनश्च सर्वोऽपि प्रहर्षनिर्भरः, परं मूलशंकरो गहनविचारमग्नो व्यचिन्तयत् "सर्वे ह्येव स्वजनास्तं बन्धने बद्धुमुद्युक्ताः" इति। एकदा मूलशंकरस्य मनः सम्बन्धिजनमोहमायातोऽतितरां विरक्तमभवत्। विकासमानयौवनस्य एकविंशति-वर्षाणामायुष्येव स विवाहोत्सवसुशोभितं धनधान्यपूर्णगृहं, वैवाहिकसज्जासज्जितं सर्वमैश्वर्यजातं पित्रोर्वात्सल्यम्, इष्टमित्राणां सरसस्नेहश्च पूर्णतः परित्यज्य "नाहं कदापि गृहं परावर्तिष्ये" इति निश्चित्य स्वगृहान्निष्क्रान्तः। १९०३तम विक्रमसंवत्सरस्यायं कालः।

गृहत्यागस्य प्रथमां रात्रिं मूलशंकरः स्वनगराद् बहिः षट्क्रोशान्तरे व्यतीतामकरोत् (व्यतीयाय)। अवशिष्टायामेव प्रहरमात्रनिशायां स पुनरपि स्वप्रयाणयात्रामत्यवाहयत्। आसायन्तनकालं स विंशतिक्रोशान्तरे ग्राममेकं सम्प्राप्य तत्रत्य हनुमन्मन्दिरे तां रात्रिं व्यतीयाय। अपि च स स्वयात्रामतिचातुर्येण निरवहत्। प्रसिद्धं पन्थानं परित्यज्य सोऽस्तव्यस्तविषममार्गेषु प्रचलन् परिचितजनसम्मिलनसम्भावनामपि निरस्तामकरोत्।

उतश्च 'गृहं परित्यज्य सहसा क्वचिद्गतो मूलशंकरः;" इति विस्मितौ पितरावजानतां वज्रपातश्चान्वभवताम्। अतितरां व्याकुलो जनकः, जननी च ममतामयी जलविहीनमीनसमा परं विह्वला-अचेतना च जाता। शोकतरंगमूर्च्छित इव सकलबन्धुवर्गः। वैवाहिकमंगलमयं सकलं सामग्रीसम्भारम-

मंगलमयमिव सञ्जातम्। गृहद्वारभित्तिषु सर्वत्रैवोदासीनताया वितानमतन्वत। सपदि ह्येव प्रारब्धमन्वेषणकार्यम्। अश्वारोहिणः पदातयश्च सर्वासु दिक्षु प्राधावन् (प्रसृताः)। यत्र कुत्रापि मूलशंकरस्य गमनसंभावना प्रतीयते स्म तत्र तत्रैवान्वेषणपरा अगच्छन्, परं मानसरोवरप्रयाणे पञ्जरं विहाय गतो राजहंसो न कस्यापि दृष्टिपथमागात्।

# अमृतत्वान्वेषणम्

सत्यशिवसम्प्राप्तिर्मृत्युमहारोगमहौषधश्चान्विष्य मृत्युञ्जयपदावाप्तिश्चेति मूलशंकरस्याभिलाषद्वयमासीत्। स हि विद्वज्जनेभ्यः सुविज्ञेष्टमित्रजनेभ्यश्चाश्रौषीत्; यद् योगसाधनमेव सत्यशिवसम्प्राप्तेर्मृत्युयन्त्रणापरित्राणस्य च केवलमुपायः; अतएव स योगिजनान्वेषणे प्रयत्नपरोऽभूत्। शैलानिवासिनो लालाभक्तयोगिनो विषये मूलशंकरेण मार्गस्थपर्यटकवैरागिजनेभ्यः संन्यासिभ्यश्च बहुशः श्रुतमासीत्; अतः स तमेव संम्मिलितुं गमनपर आसीत्। मार्गे ह्येव तं साधुवेषिवञ्चकदलमेकममिलत्। मूलशंकरो हस्तांगुलीषु स्वर्णांगुलीयकानि शरीरे च बहुमूल्यशामुल्य-(कौशेय)-परिधानानि धृतवानासीत्। तस्य वेषभूषामिमां विलोक्य साधुवेशधारी वञ्चक एकः सकटाक्षमब्रवीत्– साधु रे त्यागभावाभिलाषिन्! हस्तांगुलीषु स्वर्णांगुलीयकानि परिदधदपि विरागसोपानपरम्परारोहणमभिनयसि। तुच्छस्वर्णांगुलीयकेषु साभिलाषस्त्वमवश्यमेव विरागिजनानां शीर्षादर्शो भविष्यसि। करिश्रेष्ठैरावतपरित्यागिनो महात्मानस्तद् बन्धनरज्जवे न स्पृहयन्ति। श्रुत्वैतन्मूलशंकरः सर्वाण्यपि तानि स्वर्णांगुलीयकानि तेषामेव वञ्चकसाधूनां पुरः प्रक्षिप्य स्वमार्गमियाय।

लालाभक्तयोगिनं सम्प्राप्य मूलशंकरो योगाभ्यासे प्रवृत्तः। अत्रैव तस्यैकेन ब्रह्मचारिणा सह साक्षात्कारोऽभवत्; यश्चैनं नैष्ठिकब्रह्मचर्यदीक्षायै सम्प्रैरयत्। मूलशंकरश्च प्रस्तावमिमं स्वीकृत्य दीक्षां गृहीतवान्। ब्रह्मचारी महोदयस्तस्मै दीक्षां प्रदाय काषायवस्त्राणि समुपाहरत्; हस्ते च काष्ठतुम्बरुमेकं प्रदायादिशत्, इतः प्रभृति शुद्धचैतन्य इति ते नामकरणम्। अथ च ब्रह्मचारी शुद्धचैतन्यस्तत्रैव साधुसमाजे स्थितः योगसाधनां निरवहत्। एकस्यां रात्रौ स मठाद् बहिरेकं विशालवृक्षमधिष्ठितः साधनापरायण आसीत्। तदैव स तद् वृक्षस्थितपक्षिणामेकामतिविलक्षणां घू-घूध्वनिं गुञ्जितामश्रृणोत्। बाल्यकालेपितृगृहीतभूतप्रेतादिभ्रान्तसंस्कारो ब्रह्मचारी सहसा तां भूतप्रेतादीनामेव ध्वनिमवगम्य भयभीतः सन् मठाभ्यन्तरे प्रविष्टः। शुद्धचैतन्यो बहुकालं लालाभक्तमठे स्थितो योगसाधनामकार्षीत्, परं "नात्र स्थितस्य संकल्पितमनःकामना सम्पूर्तिमेष्यति" इति निश्चित्य स ततः प्रस्थाय कोटकाङ्गड़ानामकं लघु नगरमेकं विरराज।

कोटकांगड़ानगरे शुद्धचैतन्यो नवानुभवमेकमन्वभवत्। तत्र हि स बहून् विरक्तान् (वैरागिणः) तैः सह संलग्नामेकां लावण्यमयीं युवतिं राजपुत्रीञ्चापश्यत्। बहुशः प्रयतमानोऽपि शुद्धचैतन्यः "कुत एषा कथमेतद् विरक्तजनपाशपतिता? इति विज्ञातुं नापारयत्। युवतिश्च सा शुद्धचैतन्यमाकर्षयितुं परिहासपरा;

परं स्थिरसंकल्पो ब्रह्मचारी स्त्रिया सह परिहासमशिष्टं ब्रह्मचर्यव्रतविरुद्धं पापकर्म मन्यमानस्तामुपेक्षितवान्।

एको विरक्तो धृतकौशेयशाटिकं शुद्धचैतन्यं निरीक्ष्य व्यङ्ग्भावेनावदत्—ब्रह्मचारिन्! कौशेयशाटिकां धारयन् कथं वैराग्यभावं बिभर्तुंप्रभविष्यसि? ब्रह्मचारी शुद्धचैतन्यस्तदामात्ररुप्यकत्रयमबिभृत। तथाऽपि स सर्वा अपि कौशेयशाटिकाः प्रक्षिप्य (विमुच्य) सामान्यसूत्रशाटिका अक्रीणात् पर्यधारयच्च। कोटकाङ्गड़ायां व्यतीतेष्वपि त्रिषु मासेषु स स्वीयमनोरथमुक्तां नाप्नोत्। यदा स विश्वस्तो जातो यद् "गृहत्यागमूल्येन स यद्रत्नमभिलषन्नितस्ततः पर्यटति नात्र तस्य सम्प्राप्तिसम्भवः" तदा स कोटकांगड़ामपि पर्यत्यजत्। अत्र स्थितेनैव तेन श्रुतम् "यत्कार्तिकमासे सिद्धपुरस्थानेऽनेकसिद्धसाधुविरक्तयोगिसंन्यासिमहात्मनां बृहन्मेलकमेकं संयोक्ष्यते" इति स तत्र स्वेष्टसिद्धिकामनां कामयमानः सिद्धपुरं प्रति प्रायात्।

## पूज्यजनकेन सहान्तिमं सम्मिलनम्

कोटकाङ्गड़ातो नातिदूरं गतं मूलशंकरमेकः पूर्वपरिचितो ग्रामीणवैरागिमहोदयोऽमिलत्। गृहत्यागानन्तरं चिरकालतः सम्प्राप्तमेकं प्रणयिजनमवलोक्य तस्य हृदयमतीव द्रवितं भावविह्वलश्चाभूत्। तस्य लोचनेऽश्रुधारामवर्षताम्। तञ्च भावविह्वलमवलोक्य वैरागी-अपि तामेव दशामभजत्। स च शुद्धचैतन्यमुखात्तस्य सर्वां गृहत्यागकथामशृणोत्। शुद्धचैतन्यश्च तदभिमुखं गृहत्यागं, मार्गस्थविघ्नबाधाजातं, काषायवस्त्रधारणादिकञ्च सर्वमेव सकारणमवर्णयत्। वैरागिमहोदयस्तु प्रथमं ब्रह्मचारिणो वेषभूषां निरीक्ष्य जहास; परं तत्क्षणमेव धीरभावेन गृहत्यागविषये तस्यातिभर्त्सनामकरोत्। अन्ततोऽतिदुःखितो वैरागी ब्रह्मचारिणमपृच्छत्, "किमाजीवनार्थे परित्यक्तं त्वया गृहम्? न कदापि गृहं परावर्तितुकामः?" इति, शुद्धचैतन्यश्च तं प्रथममिलितप्रणयिनं सुस्थिररूपेण समुदतरत्, आम्, पूर्णतः परित्यक्तं मया गृहम्; साम्प्रतञ्च कार्तिकमासीयसिद्धपुरमेलकमभिगच्छामि, इति। एवं परस्परं संवदन्तौ तौ विसृष्टौ।

शुद्धचैतन्यश्च ग्रामानुग्रामं विचरन् कालान्तरे सिद्धपुरं सम्प्राप्नोत्। तत्र च स नीलकण्ठमहादेवमन्दिरे स्वीयासनमाससाद। अस्मिन्नेव मन्दिरे केचन दण्डिस्वामिनो ब्रह्मचारिणश्च पूर्वत एव व्यराजन्त। किञ्चित्कालं ब्रह्मचारी शुद्धचैतन्यस्तत्र समागताध्यात्मवेत्तृविदुषां, सद्ज्ञानसम्पन्नजनानाञ्च सत्संगेन निर्विघ्नं भूरिशो लाभमर्जयत्। तत्र सम्मेलने समागताः सामान्यजना यावद् भोज्यपानशयनेष्वेव सुखमविन्दन्त; तावद् वैराग्यरागरञ्जितः, सदभिरुचिसंप्रेरितः, आत्मधनाभिलाषुकः शुद्धचैतन्यः भवभयभञ्जिनीं, श्रेयःसम्भारभरितां,

जीवनामृतप्रदां योगविद्यामभिविन्दितुकामः क्रमशः सर्वेषामेव महात्मविदुषां चरणारविन्देषु वन्दनापरो बभूव।

उतश्च वैरागिमहाभागः स्वस्थानं सम्प्राप्य ब्रह्मचारिणः (मूलशंकरस्य) पितरं संसूचितवान् ''काषायपरिधानधरो युष्मत्पुत्रो ब्रह्मचारिरूपेण सिद्धपुरमेलकं सम्प्राप्तः'' इति। स्वपुत्रस्य वृत्तमभिज्ञाय पिता (श्रीकर्षणः ) सैनिकचतुष्केण सह सपदि सिद्धपुरं सम्प्राप्य तदन्वेषणपरो बभूव। इतस्ततः सर्वत्रानुभ्रमन्नन्विष्यमाणः पिता एकदा प्रत्यूषे तमेव शिवालयं सम्प्राप्नोत् यत्र काषायपरिधाने तत्सुतः समुपविष्ट आसीत्। काषायवेषयुतं स्वसुतमवलोक्य तस्य क्रोधाग्निः समिद्धः। रोषारक्तलोचन उच्चस्वरेण सुतं निर्भर्त्सयन् सोऽवदत्; ''कुलपांसनेन त्वया सदैवार्थमस्मत्कुलं कलङ्कितम्'' इत्यादिरोषपरायणः पिता बहुतरं स्वपुत्रं निरभर्त्सयत्। तदानीं पितुस्ताडनां परिशमयन् (परिरक्षन्) मूलशंकरस्तस्य चरणयुगलमग्रहीत्; प्रत्यवदच्च; कतिचिद्धूर्तजनपरिवञ्चितेन त्यक्तं मया स्वगृहम्; नहि स्वेच्छया, अतएव भूयसः क्लेशानसहे; देव! क्षन्तव्या मेऽपराधाः, सम्प्रति च स्वयमेवाहं गृहनिवर्तने समुत्सुक आसम्; अतश्च सहैव भवता गृहं प्रतिनिवर्तयिष्यामि'' इति। परं पुत्रस्य प्रार्थनयापि नहि पितुः क्रोधाग्निः प्रशान्तः; न च स निश्चिन्तताम भजत्।

स हि तस्य तुम्बरुं बभञ्ज, काषायकञ्चुकञ्च शकलीचकार; शतशः कटुवचनानि वर्षयन् स श्वेतवासांसि परिधाप्य सुतं स्वस्थानमनयत्। तत्रापि सुतं निर्भर्त्सयन् स रोषपूर्णस्वरेणोवाच ''मातृघातकस्त्वम्, त्वद् वियोगव्यथिता ते माता तत एव सततरुदनपरायणा मरणोन्मुखेव जाता; परमतीवनिष्करुणस्त्वं नहि स्वजननीमपि चिन्तयसि'' इति।

पुत्रः (मूलशंकरः) सविनयमुवाच ''सम्प्रति चिन्ताविरहितेन भवता भाव्यम्; सहैव श्रीमताऽभिगम्याहं पूजनीयां जननीमभिवादयिष्यामि।'' परं पिता पुनरपि सचिन्तो ह्येवावर्तत। स हि प्रबलप्रतिबन्धे पुत्रं पर्यरक्षत्। आदिदेश च सैनिकान् ''नायं निर्ममः क्वचिदेकाकीगन्तुं प्रभवेत्, सकलां रात्रिं जाग्रतो ह्येवेमं निष्करुणं स्वदृष्टिपथे परिरक्षन्तु'' इति।

शुद्धचैतन्यो यद्यपि पूर्णतः पितरं समाश्वासयत्; परं नहि तस्य क्षणिको वैराग्यभावः; स हि सत्यं शिवं साक्षात्कर्तुं मृत्युञ्जयपदमवाप्तुञ्च प्रबलाभिलाषुकः; अत स यथा तथा स्वात्मानं पितुः पाशाद् विमोक्तुमैच्छत्। असमञ्जसगतो मूलशंकरो विनिद्रो ह्येव कतिचिद् रात्रीरत्यवाहयत्। पितुः बन्धने तस्य दिवारात्रियुग्मं व्यतीतम्; तृतीयदिवसोऽपि यथा तथा पूर्णतां गतः। समागतायां तृतीयनिशायां तस्याः प्रतिपलं तस्य लोचनयोरेव लीनमवर्तत।

शय्यास्थितो हि स दर्शकदृशा निद्रितः प्रतीयमानोऽपि जाग्रदेव वस्तुतो ऽ वर्तत। यदा तस्या अपि रात्रेरर्धभागो व्यतीतस्तृतीयप्रहरश्चायातस्तदा संयोगवशात् सर्वेऽपि प्रहरिणस्तन्द्रां भजन्तो गहननिद्रालीना बभूवुः। समुचितावसरं लभमानो ब्रह्मचारी स्वहस्ते जलपात्रमेकमभिगृह्णन् सत्त्वरमेव प्रयातः, प्रष्टश्च केनचिद् जलपात्रेण लघुशंकार्थगमनं विवृणुयादिति चिन्तयन् निर्बाधश्चाभिसरन् स सिद्धपुरस्य क्रोशार्धे उद्यानमेकं सम्प्राप्य वटवृक्षशाखाश्रयेण तत्रस्थ पुरातनमन्दिरस्य शिखरे भविष्यस्थितिं समीक्षमाणः स्वात्मानं तिरोहितमकरोत्।

अपरतो यदा प्रहरिणो जनकश्च ब्रह्मचारिणः प्रयाणप्रत्यभिज्ञामलभन्त तदा तत्र महान् कोलाहलो जातः। तमन्वेष्टुं प्रहरिणो जनकश्च रात्रावेव व्यग्रतया इतस्ततः प्राधावन्। सर्वत्रान्वेषणपरास्ते तदुद्यानमपि सम्प्राप्ता यत्र शुद्धचैतन्यः प्रच्छन्नोऽवर्तत। मन्दिरान्तर्बहिरन्विष्यन्त उद्यानरक्षकांश्च विषयेऽस्मिन् पृच्छन्तस्ते ब्रह्मचारिणमलभमाना भग्नाशास्ततो बहिर्निष्क्रान्ताः। दृश्यमिदं रात्रेराचतुर्वादनं यावत् ब्रह्मचारिणा सुतरां दृष्टम्। परं स हि आवर्जिताङ्गसञ्चालनव्यतिकरः, अवरुद्धकासादिप्रवाहः, अतिसूक्ष्मीकृतश्वासप्रश्वासादिप्रक्रियः, नितान्तप्रच्छन्न-भावेनावस्थितोऽवर्तत; सर्वोऽपि दिवसस्तेनातिक्लेशेन निराहारेण चैवातिवाहितः। प्रवृत्ते किञ्चित्तमःप्रसारे रात्रौ सप्तवादनसमये स देवालयशिखरादवातरत्; मुख्यमार्गञ्च विहायाभिमुखं प्रयातः। तद् ग्रामस्य क्रोशद्वयान्तरे स ग्राममेकं सम्प्राप्य विश्राममकरोत्। पिता-(श्रीकर्षण)- महाभागश्च कतिचिद् दिनानि सिद्धपुरे स्थित्वान्ततो भग्नाशः स्वस्थानं न्यवर्तत। इदमेव शुद्धचैतन्यस्यान्तिमं पितृदर्शनं स्वजनसंसर्गश्चाभवत्।

ततः परं प्रतिग्रामं प्रतिनगरञ्च विचरन् सोऽहमदाबादं प्राप्नुवन् बड़ौदानगरमभिप्राप्तः; तत्र च चैतन्यमठे स्वासनमाससाद। चैतन्यमठश्च-अद्वैतवादिनां, शांकरवेदान्ते निहितनिष्ठानां ब्रह्मचारिणां संन्यासिनाञ्च बृहत्केन्द्रमासीत्। तत्र स्थिता ब्रह्मानन्दप्रभृतयो ब्रह्मचारिणः संन्यासिनश्च वेदान्तदर्शने निष्णाताः। ते हि वेदान्तफक्किकाः श्रावंश्रावं शुद्धचैतन्यमपि पूर्णवेदान्तिनमकुर्वन्; तेषां सत्संगेनायमपि "अहं ब्रह्मास्मि" इति समुद्घोषमुदघोषयत्। परं नेतोऽप्यस्य ज्ञानपिपासा प्रशान्ताः, अतो यावत्स वाराणसीवासिनीभद्रमहिलायाः कस्याश्चिन्मुखात् नर्मदातटे संयुज्यमानां बृहद् विद्वत्सभामेकामश्रृणोत्; तावत्स सत्वरमेव नर्मदातटं प्रति प्रयातः। तत्र च स श्रीसच्चिदानन्दपरमहंसस्य सम्पर्कं सम्प्राप्य सद्ज्ञानचर्चां चर्चितवान्।

श्रीसच्चिदानन्दस्य कथनात् स नर्मदातटवर्तिनं चाणोदकर्णालीनगरं प्राप्नोत्; यत्र हि महद् विदुषां, ब्रह्मचारिणां संन्यासिनाञ्च मण्डलमेकं विराजितमासीत्।

अत्र च श्रीचिदाश्रमप्रभृतिसद्विद्वत्संन्यासिभिः, अनेकसुयोग्यपण्डितब्रह्मचारिभिश्चास्य संसर्गोऽभूत्। यैश्च सहायमनेकविधपारमार्थिकशास्त्रीयविषयेषु च वार्तालापपरायणो ज्ञानगोष्ठीसुखमन्वभवत्। तत्रैव च श्रीपरमानन्दनामधेयः परमहंस एको विराजमान आसीत्। यस्य पार्श्वे ब्रह्मचारी शुद्धचैतन्यः स्वीयशास्त्राध्ययनं प्रारभत। कतिपयमासाध्ययनेनैवायं वेदान्तसार-आर्यहरिमीडेतोटक-आर्यहरिहरतोटक-वेदान्तपरिभाषादिप्रमुखग्रन्थजातमधीतवान्।

## संन्यासदीक्षा परिव्रजनञ्च

शुद्धचैतन्यो यस्यां ब्रह्मचर्यदीक्षापद्धतौ दीक्षितस्तस्यां स्वहस्तेनैव भोजनपाचनादिव्यवस्थितमासीत्; एतेनास्य विद्याध्ययनेऽतीव विघ्नमजायत। स हि सांसारिकवासनाजालतोऽतितरां विमुक्त आसीत; अतः स संन्यासदीक्षां गृहीतुमैच्छत्; येन भोजनपाचनादिविघ्नजातं निवर्तेत। चतुर्थाश्रमप्रवेशतश्चाकृति-नामादिपरिवर्तनेन परिचित्जनेभ्यः प्रत्यभिज्ञानमपि सुकरं न स्यात्। अथ च गृहपरावर्तनादिविघ्नजातमपि पूर्णतो विरमेत्। एवं संन्यासाश्रमप्रवेशे स्थिरसंकल्पः स स्वमित्रेण दाक्षिणात्यपण्डितेनैकेन स्वामी चिदाश्रमस्य सेवायां स्वात्मने संन्यासाश्रमदीक्षादानार्थं न्यवेदयत्। परं स हि संन्यासिप्रवरः ब्रह्मचारिणं शुद्धचैतन्यं युवानं मन्यमानो दीक्षादानेऽसहमतिमकरोत्।

श्रीचिदाश्रमस्य संन्यासदीक्षादानप्रतिषेधेन शुद्धचैतन्यो निराशो हताशश्च नाभवत्। विद्याध्ययने योगसाधने च प्रवृत्तः स संन्यासदीक्षायै कमप्यन्यं संन्यासिनं गुरुवरं प्रतीक्षमाणः सतां सत्संगे मुनिजनसम्मिलने, विद्याविनोदे, शास्त्रचिन्तने, आत्मिकाराधने योगाभ्यासे च संलग्नो नर्मदातटे सार्धवर्षमेकं व्यतीतमकरोत्। सम्प्रति चायं पूर्णचतुर्विंशतिवर्षाणां प्राप्तवय आसीत्। एकदा तेन श्रुतं यत् "चाणोदतः सार्धैकक्रोशान्तरे वनप्रदेशे श्रीपूर्णानन्दसरस्वती नामधेयो दाक्षिणात्यदण्डिस्वामिप्रवरः कश्चित् समागत्य विराजते;" स हि सर्वशास्त्रेषु निष्णातो विद्वद्वरः संन्यासिप्रवरः शास्त्रेषु कुशलेन ब्रह्मचारिणा स्वशिष्येणैकेन सह समागतः। संप्राप्तसमाचारः शुद्धचैतन्यः स्वमित्रेण दाक्षिणात्यपण्डितेन सह प्रशंसितसंन्यासिप्रवरस्य सेवायामुपस्थितः। सविनयाभिवादनानन्तरञ्च समीपमुपविश्य शास्त्रचर्चां कर्तुं प्रारभत। ब्रह्मविद्यासम्बन्धिविविधविषयेषु वार्तालापप्रसंगेन सोऽन्ततः सुतरामभ्यजानात्, यद् दण्डिस्वामिमहाभागस्तदन्तेवासी च ब्रह्मविद्यायां निष्णातावास्ताम्। स हि तस्मात्संन्यासिप्रवरात्संन्यासदीक्षां गृहीतुमियेष। तस्य संकेतेन दाक्षिणात्यपण्डितमित्रजनस्तस्मै संन्यासाश्रमदीक्षार्थं दण्डिनं प्रार्थयामास; "भगवन्! एष ब्रह्मचारी शुद्धचैतन्योऽतिसुशीलो विनीतश्च ब्रह्मविद्याध्ययनेऽतीव समुत्सुकः; परं भोजनपाचनप्रक्रियायामेवास्य भूयान् समयो

व्यत्येति; येन चास्याध्ययनेऽतीव प्रत्यूहः; अतः प्रार्थयामि यदस्य कामनानुरूपं भवन्त इमं संन्यासाश्रमदीक्षादानेनानुगृह्णन्तु'' इति। दण्डीमहाभागोऽपि प्रथमं तस्य पूर्णयौवनावस्थां निरीक्ष्य दीक्षां दातुं न्यषेधीत्; परं दाक्षिणात्यपण्डितप्रवरस्य भूयसाग्रहेण स तस्मै दीक्षां दातुं सहमतः।

दिनद्वयस्य व्रतोपवासजपानुष्ठानादिकमादिश्य तृतीयदिवसे दण्डीस्वामी पूर्णानन्दः शुद्धचैतन्यं संन्यासाश्रमे दीक्षितवान्। तस्य हस्तयोर्दण्डं कमण्डलुञ्चोपहृत्य ''दयानन्दः सरस्वती'' इति तस्य नामकरणं चकार। विनयावनतशिष्याय दण्डीमहाभागः संन्यासधर्मान् रीतिनीतीश्चोपादिशत्। आश्रममर्यादां, विद्योपार्जनां, जपतपश्चर्यादिकञ्चाशिक्षयत्। दयानन्दश्च कतिचिद् दिवसपर्यन्तं गुरुचरणयोरुपविश्य ब्रह्मविद्याविषयकग्रन्थानपठत्। ततश्च गुरोरनुमतिमवाप्य स दण्डाश्रितकर्मकाण्डनिर्वहणेऽध्ययनबाधां निरीक्ष्य स्वेच्छया संन्यासाश्रमदण्डं विससर्ज। कतिपयदिवसान्तरे गुरुवरो द्वारिकानगरीं प्रस्थितः; दयानन्दश्च चाणोदकर्णालीमेवाध्यवसत्।

दयानन्दस्वामिनो योगाभ्यासे, ब्रह्मविद्याऽवाप्तिविषये च सविशेषोऽभिलाषः। स हि यत्र कुत्रापि स्थितं कमपि योगिनं विद्वांसं वाऽभ्यजानात्तमेव सत्वरमुपातिष्ठत्। चाणोदसमीपे ह्येव व्यासाश्रमे समागतं महात्मानं योगानन्दं संश्रुत्य स तमुपस्थाय योगक्रियाः शिक्षितुमारभत। पुनश्च ''छिन्नाडे''-स्थाने समागतं ''कृष्णशास्त्री'' इति नामधेयं धुरन्धरं वैयाकरणमभिज्ञाय स व्याकरणाध्ययनलालसया तत्स्थानं प्राप्नोत्। किञ्चित्कालपर्यन्तञ्च व्याकरणमधीत्य पुनश्चाणोदकर्णालीं परावृत्य-एकस्य राजगुरोः समाश्रयेण वेदाध्ययने प्रवृत्तोऽभूत्।

चाणोदकर्णालीस्थाने सम्प्रति दयानन्दस्वामिनः सम्पर्कः श्रीज्वालानन्दपुरी श्रीशिवानन्दगिरिनामधेयश्रेष्ठतमयोगियुग्मेन संवृत्तः। द्वावेवेमौ योगिनौ सुमनसौ प्रशान्तात्मानौ चास्ताम्। स्वामिप्रवरश्च सौभाग्यं मन्यमानो द्वयोरेतयोर्मङ्गलमिलनानन्दमन्वभूत्। योगिजनावपि ''जिज्ञासुरयमात्मपिपासुरिति'' मन्यमानौ सहैव स्वात्मभ्यामेनमपि योगाभ्यासे नियोजयामासतुः। योगाभ्यासानन्तरं च त्रयो ह्येव सम्मिलिता योगशास्त्रचर्चामकार्षुः। किञ्चित् समयानन्तरं ''मासान्तरे प्रापणीयावावां, त्वां हि योगसाधनविषयकसकलगूढ-(गहन)-तत्त्वानि सक्रियाणि सरहस्याणि प्रशिक्षयिष्यावः, तत्र च सरितस्तीरे दुग्धेश्वरमहादेवमन्दिरेऽस्मदासनं स्थितं भविष्यति'' इति दयानन्दं निर्दिश्य तौ हि अहमदाबादं सम्प्राप्तौ। दयानन्दश्च मासमेकं चाणोदकर्णालीस्थितो जपतपश्चर्यानुष्ठानानि विधाय महात्मनोस्तयोरादेशमनुसरन् अहमदाबादं सम्प्राप्य दुग्धेश्वरमन्दिरे तयोर्दर्शनलाभेन कृतार्थोऽभूत्। योगिनावपि स्वप्रतिज्ञां पूरयन्तौ वेदप्रतिपादित योगं तद्भेदरहस्यादिशिक्षयन्तौ-

अमूल्ययोगतत्त्वरत्नैर्दयानन्दमाकण्ठं पूरयामासतुः। स्वयं महर्षिप्रवरो ह्येव द्वाविमौ योगिनौ प्रति स्वीयां श्रद्धाञ्जलिं समर्पयन्नुवाच "सत्यप्रतिज्ञौ तौ महात्मानौ स्ववचनानुरूपमेव धन्यं मामकुरुताम्; अनयोः प्रसादादहं सुतरां सक्रियां योगविद्यां पूर्णतोऽध्यगच्छम्। अतितरां कृतज्ञोऽहमेतयोर्देवात्मनोः, तौ हि महान्तमुपकारं मय्यकुरुतामतस्तयोरहं सविशेषमनुग्रहं मन्ये" इति।

चिरं यावद् योगिजनसत्संगेन कृतकृत्यः स्वामिप्रवरः आबूपर्वतयात्रां प्रस्थितः; श्रुतमासीद् यद्– "आबूपर्वते बहवो योगिनो निवसन्ति" अतोऽत्र समागत्य स महात्मजनसम्मिलने सप्रयासो बभूव। अत्र हि पूर्वोक्तयोगिजनेभ्योऽपि प्रवरान् योगिनः सम्मिल्य दयानन्दस्तेभ्योऽपि विशिष्टानि योगतत्त्वरत्नान्यग्रहीत्। एवं सप्ततोऽष्टवर्षपर्यन्तं विभिन्नस्थानेषु पर्यटन् महात्मजनसम्मिलनेन, विदुषा सम्पर्केण, अभ्यासिजनसंसर्गेण (योगिनामेषाञ्च) शुभसत्संगेन, आत्मोन्नति-सोपानानि समारोहन् स्वामिमहाभागः १९१२तम संवत्सरस्य वैशाखमासे हरद्वारनगरे संयुज्यमानं कुम्भपर्वमहामेलकमयासीत्। "कुम्भपर्वणि बहवो योगिनः प्रच्छन्नतया निवसन्ति तैश्च सह शास्त्रचर्चासौभाग्यं सम्भवेत्" इति तत्राभिगमनाभिप्रायः। कुम्भविषये ऋषिवरः स्वयमेवोदहरत् "हरद्वारस्थमिदं प्रथममेव मद् दृष्टं कुम्भपर्वमेलकमासीत्, मेलकेऽस्मिन् एतावन्तस्त्यागिनस्तत्त्व-दर्शिनश्च महात्मानः संयोक्ष्यन्ते, इति न मया पूर्वकल्पितमासीत्" इति। ऋषिप्रवरोऽत्र योगिनां सत्संगं विधाय चण्डीपर्वते यौगिकक्रियाणां क्रियात्मक-निर्वहणार्थमध्यगच्छत्। परिसमाप्ते कुम्भपर्वणि दयानन्दो हृषीकेशयात्रा- परस्तत्र स्थित-उच्चतरमहात्मनां संन्यासिनाञ्च सामीप्यमुपलभ्य योगसाधन-रीतीरभिगृह्यमाणो विमलचित्तवृत्तीनां विशुद्धात्मनां सत्संङ्गलाभमलभत। प्रवर्द्धमानायामुष्णतायां प्रायः सर्वेऽपि सन्तः सुरसरितः उपरिभागानसेवन्त, परं देवर्षिदयानन्दश्चिरकालमेकाकीभावेन तत्रैव (हृषीकेशे ह्येव) व्यराजत।

अत्रैकदा-एको ब्रह्मचारी पर्वतीयसाधू च द्वौ स्वामिनममिलन्। यैश्च सह परिचयविशेषेणाकृष्ट ऋषिवरः टिहरीयात्रार्थं प्रवृत्तः। टिहरीनगराद् बहिस्ते स्वच्छस्थान एकस्मिन्नासनमासेदुः। नगरमिदं तदा विद्यावयोवृद्धविदुषां सुपठितराजपण्डितानाञ्च केन्द्रस्थानत्वेन प्रसिद्धमासीत्। एकदा च राजपण्डितः कश्चित् स्वामिनं सम्प्राप्य सादरं स्वगृहे भोजनार्थं न्यमन्त्रयत्। नियतसमये स्वामिमहाभागं सहवर्तिब्रह्मचारिणञ्च समानेतुं समागतेन गृहपतिसन्देशवाहकेन सह स्वामिप्रवरो ब्रह्मचारी चोभावेवातिथेयगृहस्थस्य गृहं प्रातिष्ठेताम्। परं गृहद्वारान्तरे प्रविष्टो ह्येव ऋषिवरोऽतीव घृणितं दृश्यं संवीक्ष्य परावर्तुकामो-ऽपश्यत्; कश्चित् पण्डितो मांसशकलानि कर्तयन् अग्नावपचत्; ततोऽन्तरे मांसास्थिनिचये वह्निभुक्तपशुशिरःसु च पण्डिताः छुरिकया तान्त्रिकक्रियाविधाने

प्रवृत्ताः। सर्वाण्येतानि तान्त्रिककृत्यानि वीक्ष्य स्वामिमहाभागोऽतीवघृणाकुल आश्चर्यचकितश्च जातः। तदैव स्वामिनं समीक्ष्य ससम्मानं स्वागतं व्याहरन् गृहपतिरुपस्थाय सादरमुवाच "स्वैरं स्वैरं प्रविशन्तु भवन्तः" इति। परमृषिवरो घृणास्पदं दृश्यमिदमवलोक्य क्षणमपि तत्र स्थातुं नालम्; स हि "करोतु भवान् स्वकृत्यं न ह्यस्मदर्थे कश्चिदायासो विधेयः "इति प्रब्रुवन् सत्वरमेव परावर्तितः स्वस्थानं च सम्प्राप्य विश्राममलभत। स्वल्पेनैव समयान्तरेण गृहपतिः स्वामिनमुपस्थाय परावर्तने खेदं जनयन् सविनयं प्रार्थयत् "कृपयाऽनुगृह्णन्तुं मां मद् गृहेऽशनपानेन, न जाने कारणेन केनात्रभवन्तः परावृत्ताः, मया ह्यत्युत्तमोत्तमं सामिषमशनपानं भवत्कृते प्रस्तुतीकृतमासीत्" इति। स्वामिमहाभागश्च सुव्यक्तमुवाच "निष्फलमिदं सर्वं तवातिथ्यजालम्, मांसभोजिनो यूयम्, वयञ्च मांसदर्शनेनैवास्वस्थतां भजामः, कुतस्तत्स्पर्शनमशनं वा, सात्त्विकान्नफलमूलाशिनो वयम्, आतिथ्यं कर्तुकामाश्चेत् सात्त्विकान्नफल-मूलादिकमस्मत्स्थाने ह्येव समुपनयन्तु सेवकजनोऽत्रैव भोजनं निर्मास्यतीति। श्रुत्वैतत्तामसो राजपण्डितवरोऽतितरां लज्जितः स्वगृहं परावृत्य स्वामिना निर्दिष्ट-मन्नफलमूलादिकं सात्त्विकपदार्थजातं तस्मै समुपाहरत् ।

टिहरीस्थितः स्वामिप्रवरः कतिचिद् दिवसान् तत्र तन्त्रग्रन्थानामध्य-यनमकरोत्। ततश्च ततः प्रस्थाय श्रीनगरं प्राप्य केदारघाटस्थितमन्दिरे स्वासनमाससाद। श्रीनगरसमीपे ह्येव वनावृत्तपर्वत एकस्मिन् श्रीगंगागिरि-नामधेयो निष्णातो विद्वान् महात्मा न्यवसत्। यश्च दिवससमये न कदापि गिरेरधोऽवातरत्। तेनैकान्तवासिना प्रशान्तात्मना देवपुरुषेण सम्मिल्य मैत्रीभावमापन्न ऋषिवर उत्तमोत्तमयोगशास्त्रचर्चां विदधत्समयमत्यवाहयत्। एकान्तसेविना परमहंससमेन तेन महात्मना संगतः सन्तुष्टश्च स्वामिप्रवरस्तत्र मासद्वयाधिकं व्यतीतमकरोत्।

# उत्तराखण्डयात्रा

ग्रीष्मारम्भे गंगागिरिमभिनन्द्याभिवाद्य च ऋषिवर आत्मसहचर-ब्रह्मचारिणा पर्वतीयसाधुयुग्मेन च समं केदारघाटतः प्रस्थाय रुद्रप्रयागादिविभिन्न-स्थानेषु परिभ्रमन् शिवपुरीमायातः, शरदृतोश्चातुर्मासञ्च तत्रैव व्यतीयाय। शिवपुरीतः परावृत्य सहयोगिनां संगमपि-असुविधाकरं मन्यमानस्तानपि विसृज्य पुनःकेदारघाटमायातः। ततः प्रस्थाय किञ्चित्कालं गुप्तकाशीस्थितो गौरीकुण्ड-भीमगुफात्रियुगीनारायणप्रभृतिस्थानेषु परिभ्रमन् स्वल्पकालेनैव पुनस्तृतीयवारं केदारघाटमाससाद। स्थानमिदं गंगागिरेः सत्संगसुखेन स्वामिनोऽतिशयप्रीति-करमासीत्। किञ्चित्कालमास्थाय दयानन्दस्य मनसि हिममण्डितहिमवतः पर्वतमालासु भ्रमणस्य तत्कन्दरावर्तियोगिजनान्वेषणस्य च प्रबललालसा समुदभूत्। समुद्गते ह्येव संकल्पे सोऽतिभयंकरं शीतप्रवाहं विषमपर्वतीययात्रा-जन्यक्लेशांश्चापरिगणयन् हिमशैलशिखरवर्तिनीकन्दरासु स्थितान् सिद्धजनानन्वेष्टुं प्रस्थितः।

शैत्यातिशयेन त्रयोऽपि सहचरास्तु मध्यमार्गतो ह्येव परावृत्ताः, परं सहिष्णुर्दयानन्दः केवल एव तं विषममार्गमतिचक्राम। विंशतिदिनानि यावत् श्वेतहिमाच्छादितशीतलोत्तुंगगगनस्पर्शिशैलशिखरेषु=इतश्चोतश्चाध ऊर्ध्वं परिभ्रममाणः (परिभ्रमन्) कमपि सिद्धयोगिनं महात्मानञ्चालभमानः शैलशिखरात्परावर्तत।



ततः स्वामिमहाभागोऽतिसमुन्नतां तुंगनाथशिखामारोढुं प्रवृत्तः; परं तत्र हि मन्दिरेषु मूर्तीनां पूजकपूजारीणाञ्च सम्मर्दं निरीक्ष्य सत्वरमेव निम्नैरवातरत्। अधस्तात् मार्गद्वयं वीक्ष्य ऋषिवरः सघनवनाभिमुखं गच्छतः पथः पथिकोऽभूत्। नातिदूरे स बृहच्छिलाभिरगणितलघुप्रस्तरशकलैश्च समाकीर्णं गहनवनमेक-मध्यतिष्ठत्। अत्र हि भयावहा जलविहीनाः प्रपाताः, पुरस्सरणपद्धतिविहीनश्चा-दृश्यः पन्थाः; सर्वतः स्थिततरुराजिघनीभूते, सघनपादपावरुद्धरविरश्मिपथे, दिवाऽपि निशामये तस्मिन् गहनवनेऽवरुद्धो महर्षिप्रवरो यदा पथपरावर्तनायोपरि दृष्टिपातं प्राक्षिपत् तदाऽवतरणसमये निम्नगतिकारणात्सुगमोऽपि प्रतीयमानः पन्थाः सरलरेखासमानः समुत्थित इव परिलक्षित आसीत्। अतएवोपरि प्रयाणं परिहरन् स सततसावधानः तरुशाखाः प्रशाखाः लतागुल्मांश्च समाश्रयन् नीचैरवतीर्यैकस्य निर्झरस्य तीरमाससाद। तत्र समुत्थितां शिलामेकामारुह्य स सर्वतो दृष्टिपातं प्रक्षिपन् अगम्यगिरिशिखासमूहं, गहनं भयावहञ्च वनमेव सर्वत्र प्रसरितमपश्यत्।

अस्ताचलोन्मुखे भुवनभास्करे सर्वत्र प्रसरितासह्यशैत्ययुते तादृशे

कुसमये कदाचित्स्वामिप्रवरः पेयजलविरहितेऽसह्यशीतपरिरक्षणक्षमवह्नि-प्रज्वलनसाधनविहीने तस्मिन् गहनवने स्वीयदयनीयदशामप्यन्वशोचत्। अन्ततः सहजवीरभावेन सोऽग्रतोऽगच्छत्, परमतिगहने तस्मिन् वने कण्टकाकीर्णगुल्मेषु समुत्सरन्ति तस्य सर्वाण्यपि वासांसि (वस्त्राणि) शकलीभूतानि। तीक्ष्णाग्रप्रस्तरशकलैश्चाहतौ परिलग्नकण्टकैर्भिन्नौ द्वावपि पादौ खञ्जाविव संवृत्तौ। शरीरञ्च सर्वं रक्तरञ्जितमभूत्। अन्ततोऽतिदुःखं क्लेशजातञ्च सहमानः ऋषिवरः कथञ्चित्तद् गहनवनमुत्तीर्य तुङ्गनाथपर्वतोपत्यकामभिप्राप्तः, प्राप्तः सुगमः पन्था इति चापि सोऽन्वभूत्। सर्वत्र नीरवरजनीजनितनिःस्तब्धताया नीरवतायाश्च साम्राज्यम्, प्रसृतं सर्वत्र सूचीभेद्यं तमः; अतः सततसावधानः कथं कथमपि मार्गमन्विष्यमाणः स शनैः शनैः प्रसरन् अन्ततो व्याप्तकतिपयपर्णकुटीरं स्थानमेकमध्यगच्छत्। ओखीमठगमनमार्गोऽयमिति परिज्ञात ऋषिवरोऽग्रत उपसृत्य बह्वतीते रात्रिकाल ओखीमठं प्राप्य प्रभातकालागमनं यावत् ससुखं प्रसुप्तः।

प्रत्यूषे ह्येव शारीरिकक्लेशमुपेक्ष्य सोऽग्रतः प्राचलत्। नातिदूरं गतस्य तस्य मनसि मठव्यवस्थां निरीक्षितुमौत्सुक्यमभूत्; मठं परावृत्य स्वामिमहाभागस्तत्र स्थितमन्दिरे ज्ञान-वैराग्यशून्यानां दम्भपरायणानामेव साधूनां सम्मर्दमपश्यत्। अपारसम्पद्युते तस्मिन् मठे मठाधीशानां जीवनप्रवाहोऽतीवैश्वर्यशील-आडम्बरपूर्णश्चासीत्। किञ्चित्कालमृषिवरस्तेषां जीवनप्रवाहस्य निरीक्षणं परीक्षणञ्चाकरोत्। ओखीमठस्य प्रमुखो दयानन्दस्य ब्रह्मचर्यदीप्तिम्, ज्ञानगुणगौरवगरिमाणञ्च निरीक्ष्यातितरां विमुग्धः सन्तुष्टश्च तं स्वशिष्यतां गृहीतुमनुरोधपरः प्रलोभनपाशमपि प्राक्षिपत् "दयानन्द! परिव्राजक इव परिभ्रमन् किमवाप्स्यसि? अस्मच्छिष्यतामभिगृह्य मठाधीशः सन् लक्षशः सम्पत्समुपभोगसुखं महन्तपदवीमधिष्ठितश्चापारप्रतिष्ठां मानसम्मानञ्च लभस्व" इति। परमृषिवरस्य वैराग्यभावो नहि सञ्चारिभावात्मकः; स हि सम्पूर्णजीवन-स्थितिमभिचिन्त्यैव परमैश्वर्यसम्भृतं स्वगृहं परित्यज्य वैराग्यपथपथिकोऽभूत्। योगाग्निना समिद्धं प्रदीप्तञ्चावर्तत तस्यात्मज्योतिः। नीरक्षीरवदसत्यसत्यमये प्रेयःश्रेयो विवेचने स समर्थः; अतो मठाधीशेन प्रक्षेपितमैश्वर्यपाशं परिहरन् सोऽब्रवीत्— "महन्तमहाभागाः! प्रभुपूजाप्रसाददम्भतः समर्जितामतिगर्व-वहामिमां वैभवयुतां भवत्सम्पदं धर्मार्जिता मे पितुः सम्पद् बहुगुणमतिशेते; यावत्तामेव विशालसम्पदं मृल्लोष्ठवत् परित्यज्याहमात्मश्रेयःसमर्जनाय परिभ्रमामि तावद् दम्भार्जितेयं ते भौतिकीसम्पत् कियन्मूल्यं बिभर्ति? यल्लक्ष्यप्रेरितोऽहं सकलसांसारिकसुखसमूहं, परमैश्वर्यपरिपूर्णं पितृगृहं परित्यज्य परिव्राजकोऽभवम्; नाहं युष्मासु तल्लक्ष्यज्ञानस्याचरणस्य च लेशमपि पश्यामि;

अतो नाहमत्र क्षणमपि स्थातुं समुत्सहे का कथा शिष्यभावस्य।" मठाधीशो दयानन्दस्य लक्ष्यम्; अनेकक्लेशपरम्परासहनप्राप्तव्यवस्तुनि जिज्ञासाभावञ्चा-पृच्छत्। "ब्रह्मविद्यां मोक्षपदस्थितिञ्चाहं ज्ञातुं प्राप्तुञ्च वाञ्छामि" इति ऋषिवरः प्रावोचत्। महन्तमहाभागश्च तस्य महात्यागं परमोच्चलक्ष्यञ्च श्रुत्वा प्रशंसमानस्तत्रैव किञ्चित् कालं स्थातुमाग्रहमकरोत्। परमृषिवरः सर्वमेव सारहीनं संवादं निरीक्ष्य तत्क्षणे मौनभावं भजन् आगामिनि प्रत्यूषे जोशीमठं प्रति प्रस्थितः।

जोशीमठे बहवः सत्यनिष्ठा महाराष्ट्रियसंन्यासिनो न्यवसन्, स्वामिमहा-भागोऽपि तेषां समीपे ह्येव स्वकीयासनमाससाद। तत्र हि स कतिपययोगि-जनानां सत्संगलाभमलभत। सम्प्राप्तकतिपयनवयोगरहस्यः। ऋषिवरस्तत्रस्थित-सत्साधुभिर्विद्वद्भिश्च परमार्थपरकवार्तालापपरायणो ऽतिष्ठत्। जोशीमठतः प्रस्थाय स बद्रीनारायणमठं प्राप्नोत्। तत्रत्य मुख्यमहन्तेन रावलमहाभागेन सह कतिचिद् दिनानि न्यवसत्। यदा कदा रावलमहाभागेन सह ऋषिवरस्य वेदविषयेषु दर्शनविषयेषु च वादविवादोऽपि समजायत। एकदा स्वामिप्रवरेण समीपस्थपर्वतेषु कस्यचित् श्रेष्ठयोगिनः स्थितिविषये पृष्टो रावलमहोदयः सखेदमवदत्; "नैतेषु दिवसेषु कश्चिद् योगिजनोऽत्र वर्तते परं मन्दिरदर्शनार्थं प्रायो योगिजनाः समापतन्ति" इति श्रूयते।

रावलमहादेयस्य कथनं निशम्य स्वामिमहाभागः समस्तेऽस्मिन् प्रान्ते विशेषतः पर्वतीयप्रदेशेषु च परिभ्रम्य योगिजनानामात्मविदां महापुरुषाणां चान्वेषणाय स्थिरसंकल्पमकरोत्। सञ्जाते ह्येव सूर्योदये स बद्रीनारायणतः प्रस्थाय पर्वतोपत्यकासंलग्नेन पथा परिचलन् अलखनन्दातीरमाजगाम। अत्र हि सघनश्वेतहिमवसनाः, स्फटिकमयीव विभासमानाः, गगनचुम्बिनीगिरिशिखाः दर्शकजनदृष्टिपथं परावर्तयन्त्य इव स्थिताः शोभमाना आसन्। अलखनन्दायाः सलिलप्रवाहः सरितान्तःस्थितशिलाभिः संघटनेनोच्छलन् फेनसमूहञ्चोद्गिरन् प्रगर्जन् चीत्कारञ्च कुर्वन्निव प्रबलवेगेनाधोऽन्वधावत्। एवं सर्वतः प्रसृतं प्रकृतेः स्वाभाविकं सौन्दर्यं निरीक्ष्यमाण ऋषिवरः सरित्स्रोतोऽभिमुखं प्रचलितः। अतिगहनो विषमश्च पन्थाः, अतोऽतिकष्टकरप्रयासपरः सोऽतिकठिनतयान्ततः सरितायाः स्रोतः सम्प्राप्नोत्। नाऽहमभिजानामि सर्वथा स्थानानीमानि, हिमाच्छादितजलप्रपातप्रच्छन्नाः पन्थानः, परस्परभिन्नाः पर्वतमालाश्चापि मेऽपरिचिताः, सर्वतः स्थितानि दृश्यमानगगनभेदिगिरिशिखराणि, अदृश्यतांगतः पुरः प्रचलन् पन्थाः, इति चिन्तयन्नृषिवरः किञ्चित्कालं किंकर्त्तव्यविमूढता-मास्थितः। अन्ततो मार्गान्वेष्णाय सोऽलखनन्दायाः पारे गन्तुं निरणैषीत्।

स्वकाये विरलवस्त्रो हि स्वामिप्रवरः; अतस्तस्य हिममयप्रदेशस्यातिशीतलः प्रवहमानपवनस्तीरमिव देहमभिभिन्दन् प्रावहत्। प्रतिक्षणं प्रवर्द्धमानशैत्यसहन-मसम्भवमिव प्रतीयते स्म। पिपासया शुष्कं मुखम्, शुष्कतांगत ओष्ठपुटे, कण्टकलग्न इव कण्ठः, प्रदीप्ता च क्षुधा सर्वमेवातिकष्टकरमासीत्। स हि क्षुधा शान्तये मुखे धृतं हिमखण्डमेकं दन्तैश्चचर्व; परं नहि तदुदराग्निशान्तये (शमनाय) अलमभूत्। तदैव सोऽति साहसेन सरितः पारे गन्तुमकाम्यत। तत्र च क्वचिद् गहनगम्भीरा, क्वचिच्चैकद्विहस्तदघ्ना, अष्टतो दशहस्तमितायताकारा-अलखनन्दा तीक्ष्णाग्रतिर्यक्लघुहिमखण्डैरावृता आसीत्। सरभसं सरितमुत्तीर्य-माणस्य संन्यासिप्रवरस्य तस्य नग्नपादयोः तीक्ष्णाग्रहिमखण्डानीमानि वारं वारमाघातमकुर्वन्। एतेन पादतले छिन्ने, अंगुलयो व्रणिताः, रक्तप्रवाहश्च प्रवाहितः, अंगप्रवाहितशैत्यवेगेनातितरामवसन्नयोरवरुद्धरक्तसञ्चारयोश्चरण-योस्तानि बृहद् व्रणान्यपि ऋषिवरो बहु कालं नाज्ञासीत्। सम्प्रति भूमिराकाशः पवनश्च सर्वमपि वातावरणं शैत्यमयं सत् स्वामिशरीरस्य स्वाभाविकमूष्माण-मप्यभ्यभूत्। तस्य काये शून्यताया हृदये चाचेतनायाः प्रसरः शनैः शनैः प्रसरितुमिव प्रावर्तत। शून्यावस्थायां तस्यां मूर्च्छितस्येव हिममये तस्मिन् जलप्रवाहे पतनोन्मुखस्य तस्यान्तःकरणे चैतन्यदीप्तिरदीव्यत्। स्वात्मानमवष्टभ्य सोऽचिन्तयत्; एकदाऽप्यत्र स्खलितः (पतितः) न पुनरात्मानमुत्थातुं प्रभविष्यामि; अत्रैवावसन्नः सरिद्गर्भे समावेक्ष्यामि।

ततोऽतिसाहसमाश्रित्य ऋषिवरोऽतीवसावधानः सन्नतिबलेन सरितो बहिर्निष्क्रम्यापरतीरमाससाद; तत्रावस्थितस्यापि तस्य स्थितिर्मृततुल्येवावर्तत; तथापि साहसमवलम्ब्य स स्वतनूपरिभागस्थवस्त्राणि समादाय पादयोर्जानु-पर्यन्तभागं समायोजयत्। तदा सोऽग्रगमने अशक्तः, शरीरसञ्चालनेप्यसमर्थोऽतीव-व्याकुलमना अवर्तत। तत्र स्थित एव स किञ्चित्साहाय्यं प्रतीक्षमाणः संकटसमाकुलात्स्थानात्तस्मान्निष्क्रम्य क्वचिदग्रे गन्तुमियेष। शून्ये एतादृशे शीतप्रधानप्रदेशे कस्यचिन्मानवसाहाय्यसम्भवस्याशापि दुराशामात्रमेवासीत्। निःसन्देहं स हि तत्र विवशः निःसहायः, अनभिज्ञो निराशश्चावर्तत; परं नोत्साहहीनः; अतो विस्फारित-(विकासित)-लोचनाभ्यामितस्ततो दृष्टिक्षेपम-करोत्। घनघटाटोपप्रच्छन्नायां, सूचीभेद्यतमसावृतायां, महाकालरूपायाममा-निशायां तस्यामकस्मात् प्रदीव्यन्तीं (प्रस्फुरन्तीं) विद्युल्लेखामिव स्वामिप्रवरः पुरःस्फुरन्तीं पर्वतीयमानवयुगल-(द्वय)-आकृतिमपश्यत्। आगन्तुकोभयभद्रपुरुषौ परमहंसमेकं दुःखाकुलं वीक्ष्याभिवादनपूर्वकं सादरं न्यवेदयताम् "भगवन्! शीतप्रताडितः क्षुत्पिपासाकुलश्च भवान् दृश्यते; पुनीतचरणपातेन गृहमावयोः पुनातु (पवित्रं करोतु); तत्र हि समस्तसुखजातम्, अबाधविश्रामं पुष्कलभोज-

नञ्च भवान् लप्स्यते'' इति। स्वामिनः क्लेशकथां निशम्य तौ भद्रपुरुषौ ''मा चिन्तय भगवन्! सिद्धपततीर्थस्थलमपि त्वामावां प्रापयिष्यावः'' इत्यकथयताम्। स्वामिप्रवरोऽग्रसरणे नितरामसमर्थः, अतः स तयोः साग्रहमपि साहाय्यमनभिनन्दन् सखेदमुवाच '' भद्रपुरुषौ ! पुरः प्रचलने नितरामशक्तोऽहं कृपापूर्णां भवतोः सहायतामिमां स्वीकर्तुं न शक्नोमि।'' भद्रगृहस्थौ तौ पुनरपि परमभक्तिभावेन साग्रहेण च सानुरोधमृषिवरं स्वगृहमानेतुं प्रार्थयताम्; परमतितरां शरीरसञ्चालनेऽप्यशक्तः स्वामिमहाभागस्तत्रमरणमेव श्रेयोऽभिमन्यमानो मौनभावं समाश्रयत्; तयोः कथनञ्च नाश्रृणोत्। अन्ततस्तौ पर्वतीयभद्रपुरुषौ सखेदं ततः प्रतिनिवर्तमानौ किञ्चित्कालानन्तरमेवोच्चपर्वतीयस्थलेभ्योऽधोऽवतरन्तौ दृष्टिपथमत्यवर्तयताम्।

किञ्चित्कालं तत्रैव विश्रम्य ऋषिवरस्य शरीरं स्वस्थं मनश्च प्रशान्तमभूत्; तदैव प्रचलन् स वसुधारातीर्थस्थानमवाप। तत्र च स्वल्पं विश्रम्य स ''मग्रम'' समीपवर्तिप्रदेशेषु परिभ्रमन् रात्रावष्टवादनसमये बद्रीनारायणमठमाससाद। स्वामिनो देहदशां निरीक्ष्य रावलप्रभृतिसहयोगिनश्चिन्तातुरा अभूवन्; विस्मितास्ते तद् दिवसपर्यन्तस्थितिं दुरवस्थायाश्च कारणमपृच्छन्। स्वामिप्रवरश्च सुहृज्जनान् तान् सिद्धजनदर्शनार्थसम्पादितां सर्वां संकटसंकुलयात्राकथामवर्णयत्। रावलप्रभृतिसुहृज्जनैस्तस्मै (स्वामिने) केचिद्भोज्यपदार्थाः प्रदत्ताः; यानुदरसात्कृत्वैव सोऽशक्तशरीरे नवशक्तिसञ्चारं निर्गतदेहसामर्थ्यञ्च पुनः प्रविष्टमिवान्वभूत्। भोजनादिकं विधाय स सम्पूर्णां रात्रिं ससुखं सुष्वाप। अन्यस्मिन्दिने सत्वरमेव प्रातरुत्थाय रावलमहोदयात्प्रस्थानादेशमवाप्य ससम्मानं परस्परमभिनन्द्य स्वामिप्रवरस्ततः पर्यव्रजत्। उत्तराखण्डप्रयाणात् परावर्तयन् स रामपुरं काशीपुरञ्चानुभ्रमन् द्रोणसागरमाजगाम; सम्पूर्णशरदृतुञ्चात्रैव व्यतीयाय। द्रोणसागरे निवसन् स एकदा हिमवतो हिममयप्रदेशे देहविसर्जनाय मनस्यचिन्तयत्। परमन्यस्मिन्नेव क्षणे ''परिपूर्णज्ञानवतैव देहो विसर्जनीयः'' इति धारणा सुनिश्चिता; अतः स्वामिमहाभागः पर्वतीयप्रदेशान् परित्यज्य समभूमिं विचरन् पूर्णज्ञानसम्पन्नं गुरुजनमन्विष्यमाणोऽग्रेऽसरत्।

## शवपरीक्षणम्

द्रोणसागरतो मुरादाबाद-सम्भल-गढमुक्तेश्वरादिस्थानेषु विचरन् स सुरसरितस्तटम् (गंगातटम्) आजगाम। तदा धर्मपुस्तकान्यतिरिच्य स्वामिनः पार्श्वे ''शिवसन्ध्या, हठयोगप्रदीपिका, योगबीजः, केशराणिसंगतिः'' इत्यादीनि पुस्तकान्यासन्। कतिपयपुस्तकेषु नाडीचक्रस्य विस्तृतवर्णनमासीत्। अतिभ्रान्तिमयोऽयं विषयः (नाडीचक्रम्)। पूर्णरूपेण न कदापि स्वामिप्रवरस्य बुद्धिगम्यः—

अभून्नाऽपि च स्मृतिपथमायातः। अस्य (नाडीचक्रस्य) सत्यतायां सदैव सन्दिह्यमानः स सामान्यसाधनैस्तत्संशयं निवारयितुमपि प्रयत्नमकरोत्; परं संशयोऽयं न खलु निवृत्तः; अपित्वनुदिनमवर्द्धत एव। गंगातीरं विचरन्नेकदा स संयोगवशात् सलिले प्रवहन्तं शवमेकं निरीक्ष्य शवपरीक्षणेन नाडीचक्रविषये सदैव स्थितं संशयं निवर्तयितुं मनसि विचारणामकरोत्। मनसि प्रस्फुरिते ह्येव विचारे पुस्तकानि सरितस्तटे निक्षिप्य स वस्त्राणि व्यवस्थाय गंगाप्रवाहेऽकूर्दत्प्रवहन्तं शवञ्च बहिरानयत्। समीपस्थितोपकरणेषु स्थितां तीक्ष्णछुरिकामादाय शवं विदीर्य प्रथमं हृदयस्थलं पृथगकरोत्। तदाकृतिस्वरूपप्रलम्बायताकारादीन् पुस्तकलिखितवर्णनेन सह समताम् (साम्यम्) चिरं निरैक्षत। एवमेव शिरोग्रीवादिप्रत्यङ्गस्य नाभिप्रभृतिचक्राणामपि परीक्षणमकरोत्, परं पुस्तकलिखिताङ्गचक्रवर्णनेन सह वास्तविकांगचक्राणां लेशतोऽपि साम्यं न ददर्श। तेन च परीक्षणेन स्वामिमहाभागस्तत्पुस्तकाङ्कितलेखवर्णनयोः काल्पनिकताविषये सुनिश्चयमध्यगच्छत्। तत् क्षणमेव तानि पुस्तकानि विदार्य शवेन सममेव गंगाप्रवाहे प्रावाहयत्। वेदोपनिषत्-पातञ्जलसांख्यशास्त्रव्यतिरिक्तानि समस्तानि ज्ञानविज्ञानयोगविषयेषु विलिखितानि पुस्तकानि मिथ्यारूपाणि भ्रान्तिकराण्येवेति निष्कर्षञ्चाप्नोत्। ततोऽनुगङ्गं विचरन् स १९१२तम संवत्सरसमाप्तौ फर्रुखाबादनगरमगच्छत्; ततश्च कानपुरं प्रस्थितः। १९१३तम संवत्सरस्य मासपञ्चकं कानपुरप्रयागयोरन्तर्वर्तिस्थानेषु विचरनाश्विनमासारम्भे काशीं (वाराणसीं) प्राप्नोत्। काशीतश्चाण्डालगढनगरस्थितदुर्गाकुण्डमन्दिरे दिनदशकमतिष्ठत्। तत्र हि ओदनभोज्यं सर्वथा परित्यज्य दुग्धमात्राहारः दिवानिशं योगविद्याध्ययनेऽभ्यासे च प्रलीनोऽभूत्।

## नर्मदास्रोतसोऽनुसन्धानम्

१९१३तम संवत्सरस्य कार्तिकमासे ऋषिवरो नर्मदास्रोतो निरीक्षितुं पुनरपि स्वयात्रां प्रारभत। अतिविषमः पर्वतीयः पन्थाः। स हि प्रचलन् कमप्यध्वनोऽभिज्ञानं न पप्रच्छ; मौनभावेन दक्षिणाभिमुखं प्रयाणपरो ह्येवाग्रतोऽगच्छत्। एवं प्रचलतश्च पथि महागहनं जनसञ्चारशून्यं वनं प्रावर्तत। परं विशेषनिरीक्षणेन सुदूरवर्तीनि कण्टकगुल्मस्थितानि कानिचिन्मलिनकुटीराणि दृष्टानि। क्षुत्पिपासाकुलश्च ऋषिवरः कुटीरमेकमागत्य तदधिपतिप्रदत्तं पयोऽधिगम्य पादोनक्रोशं गत एव मार्गलोपं ददर्श। तादृग्वनेषु-अवि-अजासञ्चरणसहजसुलभाः स्थाने स्थाने सर्वतः प्रसृता लघुपद्धतीरवलोक्य पद्धतिमेकामनुसृत्य प्रचलितश्च नातिदूरं गतो ह्येव गहनवने भ्रान्तपथोऽभूत्। बदरिकावृक्षबहुले, प्रलम्बघनघासावृतेऽस्मिन् वने ताः पंक्तयोऽपि प्रप्लुप्ताः। क्षणं तत्र स्थितः ऋषिवरः

''केन मार्गेण गन्तव्यम्'' इति चिन्तयन्नेव प्रबलवेगेन प्रधावमानं स्वाभिमुखमायान्तं कृष्णऋक्षमेकं ददर्श। स हि हिंसकपशुः प्रगर्जन् स्वमुखं विदार्य स्वामिनं स्वग्रासं कर्तुमतिवेगेनाग्रेऽसरत्। कतिचित्क्षणानि चकितो निष्क्रियश्च स्वामिमहाभागः स्वात्मानं तस्य ग्रासीभूतमिव पश्यन् तस्मै हिंसकपशवे स्वदण्डमदर्शयत्। स च (हिंसकपशुः) स्वामिदण्डं दृष्ट्वा एव ततः परावृत्तपादैरधावत्। हिंसकपशोर्गर्जनं श्रुत्वा स्वामिने दुग्धोपहर्तारः कुटीरवासिनः स्वस्वमृगया शुनः समादाय घटनास्थलं प्राययुः। तत्र च परमहंसं सकुशलमवलोक्य प्रहर्षिता न्यवेदयन् ''भगवन्! वनेऽस्मिन्नातिदूरं गता ह्येव भवन्तो घोरसंकटग्रस्ता भविष्यन्ति; अस्मिन् गहने गिरिवने सिंहव्याघ्रादयोऽतिक्रूरहिंसकपशवो मनुष्यं दृष्ट्वैव स्वग्रासं कुर्वन्ति; अतो भवन्तः स्वचरणपातेनास्मद् ग्रामं पवित्रीकुर्वन्तु; सेवाशुश्रूषावसरप्रदानेन चानुगृह्णन्तु; परं परमहितैषिणां तेषां वनवासिनां विनीतवचनानि श्रुत्वा ऋषिवरः कृतज्ञभावेनाब्रवीत्; भद्रमहाभागाः! न मदर्थे भवद्भिश्चिन्तातुरैर्भाव्यम्; नापि मत्कुशलक्षेमविषये विचिन्तनीयम्, परमप्रभोः प्रसादेन सदैवाहं सकुशलः सुरक्षितश्च प्रवसामि।

ग्रामवासिनश्च स्वामिनः सुस्थिरस्वभावं सुदृढनिश्चयञ्चावलोक्य तस्मै स्थूलतमं दण्डमेकमुपहृत्य तस्यापूर्वधैर्यं धन्यं वदन्तः (प्रशंसन्तः) परावृत्ताः। स्वामिप्रवरश्च तं दण्डं तत्रैव प्रक्षिप्य पुरः प्रचलन्-अतिक्रान्तस्वल्पपथ एकस्मिन् गहनकाननेऽवरुद्धः। अतिविकटविस्तीर्णं वनमिदमतिक्रमितुमृषिवरोऽपारकष्टपरम्परामसहत। वनस्य कण्टकाकीर्णगुल्मैस्तस्य तनुरतिशीर्णतां गता; कण्टकगुल्मेषु च संक्रान्तानि वस्त्राणि शकलीभूतानि। तीक्ष्णकण्टकावृत्तपरस्परसंलग्नगुल्मेषु तेषु सरलस्थिताकारेण तिर्यग्रूपेण च प्रचलनमसम्भवं निरीक्ष्य स्वामिप्रवरः कदाचिज्जानुभ्यामुपसर्पन् कदाचिच्चोदरभागेन पुरःसरन् मार्गमतिचक्राम। तस्य पादतले रक्तरञ्जिते; कण्टकसंलग्नदेहाच्च रक्तस्रावः प्रचलितः; कस्माच्चिद् देहभागात् मांसलघुखण्डानि चाप्युद्धृतानि, परं ध्रुवधारणाधनी दयानन्दः स्वीयानन्यसाहसेनाबाधोत्साहेन च सकलविघ्नबाधास्तिरस्कृत्यान्ततस्तद् वनदुर्गं विजित्य पारमगच्छत्। वनप्रदेशाद् बहिरागतः ऋषिवरः सर्वतः प्रसृतं घनान्धकारमपश्यत्। शरीरे व्रणानि बिभ्रत् सोऽर्धमृतमिव स्वात्मानमन्वभूत्। एतादृशीं कष्टपरम्परामनुभवन्नपि न हि स समुत्साहहीनो नाऽपि च पुरःप्रयाणप्रगतिमवरुरोध। घनान्धकारपूर्णायामपि निशायां स क्वचित्प्राप्यमार्गजनिताशया पुरः प्रवर्द्धमान एवासीत्। अतिक्रान्तस्वल्पपथश्च सर्वत्र प्रभूतपर्वतीयप्रोतुंगस्थलबहुलमतिभयावहं प्रदेशमेकमवाप्नोत्; तत्र च मानवनिवासचिह्नान्यपि ददर्श। किञ्चिदन्तरेणैव समागतपथिकजनान् लक्ष्यपथप्राप्तये साधुवादं वितरतीः स्वप्रकाशेन स्वागतमिव व्याहरतीः प्रज्वलितप्रदीप-

पंक्तीरपश्यत्। समीपतश्च स (ऋषिवरः)कानिचित्कुटीराणि तदनुवर्तिनीं जलधारां चावलोक्यैकस्य पार्श्ववर्तिनो वृक्षस्याधस्तान्निद्राङ्कं समाश्रयत्।

प्रत्यूषे ह्येव नित्यकृत्यादिभिर्निवृत्य सरित्सलिलेन देहस्थव्रणानि प्राक्षालयत्; हस्तपादादिकञ्च स्वच्छमकरोत्; दण्डमपि जलेनासिञ्चत्। ततः सन्ध्योपासनां निर्वर्तयितुमिच्छन्तमेव प्रभूतधेनुभिरजासमूहेन च परिवृतः कुटीरेभ्यो निष्क्रान्तो नरनारी-बालक-बालिकासमूहस्तमभिव्याप्नोत्। "भगवन्! कुतो भवान्? क्व च गन्तुं प्रवृत्तः?" इति वृद्धजन एकः स्वामिनमपृच्छत्। "काशीतोऽहमायातः, नर्मदास्रोतश्च निरीक्षितुं गच्छामि" इति स्वामिमहाभागस्तं समुदतरत्। एतावदभिधाय ऋषिवरः समाधिलीनो बभूव; तेऽपि च स्वस्थानं परावृत्ताः। अर्धहोरानन्तरमेव तज्जनमण्डलप्रधानपुरुषः पर्वतीयपुरुषयुगलेन समं स्वामिनं सम्प्राप्य स्वकुटीरेषु समागमनाय संप्रार्थयत्। परमृषिवरः प्रस्तरमूर्ति-पूजकांस्तानभिमन्यमानस्तत्कुटीरगमनं न्यषेधीत्। भोजनविषये पृष्टश्च प्रावोचत् "नाहमद्यतनदिवसेषु– अन्नादिभोजनं गृह्णामि, केवलं पय आहार व्रत एव" इति। श्रुत्वैतत्सहृदयसद्गृहस्थः स्वामिनः कमण्डलुं दुग्धेन प्रपूर्योपाहरत्। ऋषिवरश्च यथेच्छं दुग्धाहारमगृह्णात्। स च प्रधानपुरुषः स्वगृहं परावर्तयन् द्वावेव सहचारिणौ सम्पूर्णां रजनीं वह्निं प्रज्वाल्य परमहंससंरक्षणे नियोज्य स्वगृहं गतः। ऋषिवरश्च सुखनिर्भरां सुषुप्तिमुपलभ्य उषःकाले ह्येव समुत्थाय ब्रह्मसमाधितो निवृत्तः स्वयात्रापथमतिचक्राम।

एकदा शिवरामपाण्डेमहाभागेन सह वार्तालापप्रसंगे स्वयमेव स्वामिमहाभागः स्वीयपर्यटनकथामवर्णयत्; यत्कदाचिच्चतुष्पञ्च दिवसान् यावद् भोजनालाभेन सोऽतितरां बुभुक्षितो जातः; स हि न हि कमपि भोजनमयाचत इति तस्य व्रतम्। अस्यामेव क्षुधातुरावस्थायां कश्चिद् भद्रपुरुषः समागत्य तं भोजनं गृहीतुं प्रार्थयत्। ऋषिवरस्तस्य गृहमभिगम्य तदुपाहृतसक्तूनास्वाद्य पूर्णां तृप्तिमभजत्। तदनन्तरं गृहपतिः स्वस्नुषां प्रेताक्रान्तां निवेद्य प्रेतबहिष्करणाय स्वामिनं प्रार्थयत्। तेन सह गृहाभ्यन्तरेऽभिगतः ऋषिवरस्तस्य स्नुषां स्वीय-यष्टिकामदर्शयत्। गृहस्थेन विशेषोपचाराय प्रार्थितः, सः "अस्मद् यष्टिकां पश्यन्नेव प्रेतः पलायिष्यते" इति प्रत्युवाच; संवृत्तं चैतत्। गृहपतिपुत्रवधू-र्नीरोगतामभजत्। अतितरां कृतज्ञश्च गृहपतिर्बहुदिनानि यावदृषिवरस्य सेवां शुश्रूषाञ्च व्यदधात्।

तदनन्तरञ्च पर्यटन् स एकस्मिन् सन्ध्यासमये भूतप्रेतनिवासरूपेण प्रसिद्धं भूतभयाच्च सर्वदैव मानवसञ्चारशून्यं गृहमेकमध्यतिष्ठत्। भूतप्रेतभयाक्रान्तजनै-र्निवार्यमाणोऽपि स्वामिप्रवरस्तस्मिन्नेव गृहे निर्भयस्तां रात्रिं ससुखं व्यतीयाय।

अयं हि १९१३तम संवत्सरस्य कार्तिकमार्गशीर्षमासस्य वा समयः। अत्रैव स्वामिमहाभागस्य स्वलिखितमात्मचरितं समाप्तिमेति। एतदनन्तरं स किं व्यदधात्; क्व गतः; इति विषये किमपि वृत्तं नोपलभ्यते, परं निश्चितं निर्विवादं चैतत् यन्नर्मदास्रोतो निरीक्षितुमग्रगतो भीषणविघ्नबाधाः, विविधापदार्तिजालम्, संकटसमूहञ्च सहमानः सोऽसीमसाहसेनैकैकं पदक्रमं प्रवर्द्धमानः अग्रतो ह्येव गच्छन् बहुतरं दूरस्थमार्गमतिक्रम्य नूनं नर्मदास्रोतोऽमरकण्टकमधिगम्यैव व्यश्रमिष्यत्। अथच नर्मदास्रोतोऽवलोकनानन्तरं कार्तिक १९१३तम संवत्सरतः १९१७तम संवत्सरं यावद् ऋषिवरः किं कार्यविशेषं व्यदधात्, केषु केषु च स्थानविशेषेषु गतः; इति सर्वथाज्ञातं तिरोहितञ्चैव। विषयेऽस्मिन्-अग्रिमपरिच्छेद-प्रोक्ततथ्यानि समाहरतामस्माकं सुसम्मतमिदं यत्स्वामिप्रवरो वर्षेष्वेतेषु प्रथमस्वातन्त्र्यसंग्रामेऽतितरां स्वसक्रिययोगदानं प्रादात्।

## १८५७ वर्षस्य स्वातन्त्र्यसंग्रामो महर्षिदयानन्दश्च

"महर्षिदयानन्दो भारतवर्षस्य प्रथमस्वातन्त्र्यसंग्रामे सक्रियं भागं निरवहत्" इतिविषये श्रीपृथ्वीसिंहमहताविद्यालंकारमहोदयः 'हमारा राजस्थान' नामके स्वग्रन्थे सर्वप्रथमं विविधतथ्यानि प्राकाशयत्– यथा च—

१. १९१२तम संवत्सरे तदनु १८५५-५६तमे ईस्वीयवर्षे स्वामिदयानन्दो हिमवतोऽन्वेषणयात्रां व्यदधात्; अस्मिन् यात्राप्रसंगे च स श्रीशंकराचार्यसंस्थापित-ज्योतिर्मठम् (जोशीमठम्) अगच्छत्। स्वामिपूर्णानन्दशिष्यस्तत्रत्यविद्वान् मठाधीशः (प्रधानमहन्तः) दयानन्दं परमविद्वांसं स्वामिपूर्णानन्दमभिगम्य तत्राध्ययनप्रेरणां पत्रविशेषञ्चैकं प्रादात्। हिमालययात्रापूर्तिं विधाय गंगातटे परिभ्रमन् स्वामिप्रवरः श्रीपूर्णानन्दमभिगतः। संन्यासिप्रवरः पूर्णानन्दश्च तं निरदिशत् "दशोत्तरशतवर्षवयस्कोऽहं जरावस्थायामस्यां न ह्यध्यापनं कर्तुं प्रभविष्यामि; त्वञ्च मथुरायां मदीयशिष्यप्रवरं विरजानन्दं प्राप्नुहि" इति। १९१२तम संवत्सरान्तस्य घटनाक्रमोऽयम्; परं ज्ञानामृतपिपासुर्दयानन्दो वर्षपञ्चकसमयानन्तरमेव १९१७तम संवत्सरे विरजानन्दचरणयोः सम्प्राप्तः; यावच्च स १९१३तम संवत्सरारम्भत एवाध्ययनारम्भं कर्तुमशक्नोत्। १९१३तम संवत्सरेऽध्ययनविरामकारणञ्चैतदेव यत्तदा स्वामिप्रवरो राजनीतिकक्रान्तिकारिणो नानाजीधोन्दूपन्तमहाभागस्य कर्मभूमौ कानपुरसमीपे परिभ्रमणशीलोऽवर्तत। भाविनीभीषणक्रान्तिविषये स हि सुतरामभिज्ञ आसीत्। एतादृक् क्रान्तिप्रवाहे तदर्थपरिपूर्णसहयोगशीलस्य देशभक्तदयानन्दस्याध्ययनविरामः स्वाभाविक एव।

२. राष्ट्रियक्रान्तिविषयकजनजागरणे साधूनां संन्यासिनाञ्चा-भूतपूर्वसहयोगोऽवर्तत; स हि देशभक्तदयानन्दस्य कृते महत्प्रेरणास्रोतोऽभूत्।

३. दयानन्दः सप्त-अष्टमासेषु हिमालयस्य यात्रापूर्तिमकरोत्; यात्रायामस्यां मासत्रयं शिवपुरीस्थाने, मासद्वयाधिकञ्च सत्साधुवरगंगागिरिणा सह सम्मेलने केदारघाटे, जोशीमठस्थितविद्वद्भिः, संन्यासिभिः, योगिभिश्च सममपि कियत्समयो व्यतीतः; "एवं सर्वत्र कार्यक्षेत्रेषु प्रवेगशीलो दयानन्दः कानपुरसमीपे निष्प्रयोजनभ्रमणेनैव पञ्चवर्षाणि-अतिवक्ष्यति" इति न हि कस्यापि स्वीकरणीयो विषयः; ध्रुवं हि स जनसाधारणे जागृतिं स्वातन्त्र्यमन्त्रस्फूर्तिञ्च सम्भर्तुं सततप्रयासशील आसीत्।

४. १९३२तम संवत्सरेऽनेके भद्रपुरुषाः 'नानामहानुभावस्य सहयोगि-रूपेण स्वामिनं दयानन्दमभ्यचिन्वन् (अभिचिन्वन्ति स्म)। अपि चायं गौरांग-प्रभूणामुत्तेजनविषयको राष्ट्रविरोधिनां प्रचारविषयश्चजातः। तत्कालं यावत्स्वा-

तन्त्र्यसंग्रामस्य मात्राष्टादशवर्षाणि व्यतीतान्यासन्। स्वदेशे प्रथमस्वातन्त्र्यसंग्रामस्य प्रत्यक्षद्रष्टारो घटनाक्रमविषये पूर्णज्ञातारश्च जनाः पर्याप्तसंख्यायामवर्तन्त। महाराष्ट्रप्रभावपूर्णे मुम्बईनगरे नानामहाभागस्य यशोगाथाभिज्ञानवतां पुरुषाणां बाहुल्यमभविष्यत्; येषां मुखैरन्येऽपि तस्य वीरनायकस्य यशसोऽभिज्ञा अभविष्यन्।

५. ऋषिदयानन्दः १९१३तम संवत्सरस्य कार्तिकमासे नर्मदास्रोतो निरीक्षितुं चाण्डालगढतोऽभिप्रस्थित आसीत्; नर्मदास्रोतश्च स्थानात्तस्मात्-शतद्वय 'मील'-मितपरिमाणाधिकं नाभविष्यत्; दयानन्दसदृशप्रवेगशीलयुवजनकृते यात्रेयं पञ्चदशदिवसेभ्यो नाधिकातिक्रमणपरा; एवं स्थिते १९१३तम संवत्सरतः १९१७तम संवत्सरं यावत् पञ्चवर्षाणि स हि नर्मदातटे परिभ्रमणशील एव स्थित इति नहि केषां सामान्यमतिमतामपि विश्वासयोग्यम्।

६. १९३६-३७संवत्सरे महर्षिप्रवरः स्वजीवनविषयकं कमपि घटनाक्रममलिखत् स च घटनाक्रमः १९१४तम संवत्सरस्य प्रारम्भमेव संकेतयति; तदूर्ध्वं (तत्पश्चात्) त्रीणि वर्षाणि यावज्जीवन्नपि स न कियदपि स्वात्मकथाविषयमुद्धृतमकार्षीत्। नितरां समयाभाववताऽपि तेनात्यावश्यकं तु किञ्चिदुद्धरणीयमासीदेव। परिज्ञायतेऽनेन "आंगलशासने १९१४-१५वर्षीय प्रथमस्वातन्त्र्यसंग्रामस्य जनजागृतिकार्यलेखनं स्वामिप्रवरस्यानभीष्टमासीत्। अतएव स स्वात्मकथां तत्रैव विराममदात्।

७. पूनाप्रवचनप्रसंगेऽपि ऋषिवरः संवत् १९१४तः १९१६ पर्यन्तं स्वकृतकार्यविषयेषु पूर्णमौनतामभजत्।

८. सत्यार्थप्रकाशाङ्कितं १९१४तम संवत्सरे रणछोड़मन्दिरस्य मूर्तीनामाङ्गलभुशुण्डिभिः (शतघ्नीभिः) विखण्डनम्, वाघेरवीराणां शौर्यवर्णनञ्च ऋषिवरस्य तेन घटनाक्रमेण सह घनिष्ठसम्बन्धं नियोजयति यथा "यदा चतुर्दशवर्षोत्तरैकोनविंशतिशतमिते वैक्रमाब्दे (१९१४) शतघ्नीनां गोलकैरांगलजना मन्दिराणि मूर्तिगणञ्च व्यनाशयंस्तदा कुत्रागमन्मूर्तयः? प्रत्युत तदानीं वाघेरजातीयाः क्षत्रिया अतुलपराक्रमं प्रदर्श्य प्रायुध्यन्त प्रत्यर्थिगणञ्च व्यापादयन्; परं मूर्तिर्मक्षिकायाश्चरणमपि त्रोटयितुं नासीत्समर्था। ननु श्रीकृष्णसदृशः कोऽपि वीरोऽभविष्यत्तदैतेषां दर्पं व्यदलयिष्यदेते च कान्दिशीका पलायिष्यन्त"। विक्रमसंवत् १९१४तमं १८५७तमं क्राइष्टवर्षञ्च समो ह्येव समयः; सत्यार्थप्रकाशस्य पंक्तय इमा डिण्डिमघोषेण स्वामिदयानन्दस्य प्रथमस्वातन्त्र्यसंग्रामे सक्रियसहयोगमुद्घोषयन्ति। यतः कश्चित् प्रत्यक्षदर्शी प्रत्यक्षानुभवी वा महानुभाव एव एतादृशं प्रमाणितलेखं लिखितुं प्रभवति (उद्धर्तुं शक्नोति)।

९. "प्रथमस्वातन्त्र्यसंग्रामकाले आंगलजनाः सूर्योदयात्प्रागेव भ्रमणार्थमगमन्, साम्प्रतञ्च ते विलम्बेन जाग्रति" इति- एकस्मिन् प्रवचने ऋषिवरेण प्रोक्तमिदमुद्धरणं तस्याङ्गलजनानां दिनचर्याविषयकमभिज्ञानं पूर्णपरिज्ञानं प्रमाणञ्च प्रस्तौति।

१०. गुरुवरो विंरजानन्दोऽनेकधा स्वीयसुयोग्यतमशिष्यदयानन्देन सममेकान्तवार्तामकार्षीत्। गुरोरनेके प्रियशिष्या अपि तस्मादेकान्तवार्तालापाद् बहिष्कृता अभूवन्। विशेषावरोधेनानेन सुतरामभिज्ञायते यदुभयोर्गुरुशिष्ययोः स मन्त्रमय एकान्तवार्तालाप आंगलशासने विदलितस्य भारतराष्ट्रस्य स्वातन्त्र्यप्राप्तिविषयको ह्येव समभूत्। राष्ट्रस्वातन्त्र्यस्य पूर्णसमर्थको मुनिविरजानन्दो विषयेऽस्मिन्-अन्याननधिकारिणः शिष्यजनान् परिहरन् (परिवर्जयन्) दयानन्दमेव सुयोग्यपात्रं मन्यमानस्तेनैव सहैतादृशं वार्तालापं निरवहत्।

११. ऋषिदयानन्दस्य ग्रन्थेषु राष्ट्रस्वान्त्र्यस्येयमिच्छा प्रेरणा च प्रभूतरूपेण सम्भृता वर्तते। यथा च—

(क) "साम्प्रतं दैवदुर्विपाकादार्याणामालस्यप्रमादाभ्यां पारस्परिकविरोधाच्च कैंव कथाऽन्यदेशराज्यस्य, नास्त्यार्यावर्तेऽपि साम्प्रतमार्याणामखण्डमकुतोभयं स्वतन्त्रं स्वाधीनं राज्यम्। यत्किञ्चिदस्ति तदपि वैदेशिकैः पद्भिराक्रम्यते। केवलमल्पीयांसो राजानः स्वतन्त्राः। समागच्छत्सु दुर्दिनेषु देशवासिभिर्नानाविधानि दुःखानि ननु भुज्यन्ते। वैदेशिकेषु नितरां प्रजाः सुखयितुं यतमानेष्वपि स्वदेशोद्भवानामेव राज्यमनुत्तमं भवति सर्वतः। मतमतान्तराग्रहशून्यमात्मीयपरेषां पक्षपातविरहितं पितराविव सानुकम्पं प्रजासु न्याय-दया-संयुतमपि वैदेशिकानां राज्यं नास्ति पूर्णसुखप्रदम्" इति।

—सत्यार्थप्रकाशेऽष्टमसमुल्लासतः

(ख) हे प्रभो! त्वं हि वरुणनामाभिधत्से (अर्थात् वरुणो नाम वरः श्रेष्ठः, सर्वेभ्यः श्रेष्ठत्वाद् वरुणः परमेश्वरः इति) अतोऽस्मभ्यं वरराज्यं, वरविद्याम्, वरनीतिञ्च प्रदेहि (प्रयच्छ)।

—आर्याभिविनयः

१२. वैदिकधर्मप्रचारावसरे महर्षिः दयानन्दः क्षत्रियजनान् सदैव स्वराष्ट्रस्वातन्त्र्यस्य, स्वराष्ट्रभक्तेः, स्वराष्ट्रियवस्तूनां प्रयोगस्य च प्रेरणां प्रादात्। स्वयमपि च सदैव स्वदेशीयवस्तूनामेव प्रयोगमकार्षीत्, येन च तस्य स्वराष्ट्रं प्रति एकान्तनिष्ठाभक्तिश्च सुतरामभिव्यज्यते।

१३. देवर्षिदयानन्दस्य प्रवरशिष्यः श्रीश्यामजीकृष्णवर्मा राष्ट्रियस्वतन्त्रताया अपूर्वं ज्योतिः प्राज्वालयत्।

१४. महर्षिशिष्यश्रीकृष्णसिंहात्मजः केसरीसिंहोऽपि राष्ट्रियस्वातन्त्र्य-

क्षेत्रेऽतिमहत्त्वपूर्णं कार्यं व्यदधात्; तस्य नवयुवानः पुत्राः भ्रातरश्च सर्वे ह्येव राष्ट्रभक्त्यै स्वात्मबलिमदुः। स हि स्वयमपि क्षेत्रेऽस्मिन् संघर्षपरोऽभूत्। राजस्थान-प्रदेशे स्वातन्त्र्यज्योतिः प्रज्वालयन् सोऽनेकवर्षाणि बन्दीगृहयातनामसहत।

१५. आंगलशासनं महर्षेर्विचारधारां प्रति पूर्णतोऽभिज्ञमासीत्; तस्य गुप्तचरविभागश्च ऋषिवरस्य कार्यकलापेषु सततसावधानः कठोरदृष्टिक्षेप-माक्षिपन्नासीत्।

१६. केषाञ्चित् तत्सामयिकस्थितेरभिज्ञानां मतमिदम्; यन्महर्षये विषप्रदानमाङ्गलशासकानामेव भीषणषड्यन्त्रमयं कृत्यमासीत्।

१७. सर्वमिदं वस्तुजातं महर्षेर्देशभक्तिभावश्च १८५७वर्षस्य स्वातन्त्र्यसंग्रामे तस्य सक्रिययोगदानं विवृणुते। दयानन्दसदृशसुधारकः स्वराष्ट्रभक्तः, क्रान्तिकारी च तस्मात्स्वातन्त्र्यसंग्रामान्नहि पृथगवतिष्ठेत इति, नात्र शंकाकलंककणिकावकाशः। निःसंशयं दयानन्दः समुत्कटमोक्षाभिलाषी; परं मुमुक्षवोऽप्यष्टास्वेव यामेषु किं योगाभ्यासं विहाय नान्यत्किमप्यनुतिष्ठन्ति? मोक्षप्राप्तौ संलग्नोऽपि बन्दावैरागीमहाभाग आततायिभ्यः पाञ्चालप्रदेशं परिरक्षितुं नर्मदातटं विहाय पाञ्चालमायातः; ध्यानभक्तिपरायणोऽपि स प्रान्तीयशासकाय दिल्लीश्वराय च प्रबलातंकपर्यायोऽभूत्। एवं १९९४तमसंवत्सरापेक्षयाऽऽत्मज्ञान-योगाभ्यासयोः क्षेत्रेऽत्यग्रेसरोऽपि ऋषिवरो जीवनपर्यन्तं समाधिसाधनेन सममेव वेदभाष्यग्रन्थलेखनप्रचारशास्त्रार्थकार्येषु पर्याप्तसमयं वितरन्नपि त्रयस्त्रिंशद् वर्षाणां पूर्णयौवनावस्थायां तत्स्वातन्त्र्यक्रान्तेः कथं पृथगवस्थातुमशक्नोत् ''नगरं कानपुरं हि नाम न हि योगिनां विदुषां वा परिभ्रमणक्षेत्रम्, अपितु राजनीतिक-संघर्षस्थलं तत्'' तस्मिन् संघर्षपूर्णक्षेत्रे दयानन्दसदृशस्य योगिनो निरन्तरपरि-भ्रमणं सोद्देश्यमेवासीन्नहि तत्परिभ्रमणमात्रम्। क्रान्तियुद्धस्य सेनापत्यमपि देवर्षिर्दयानन्दः समर्हति; परमादर्शसंन्यासिना सता तेन कार्यमिदं न सम्पादितम्; अपितु जनसाधारणस्य जागरणकार्यरूपं संन्यासिप्रवरसुलभकर्तव्यं सः १९१३-१४तमसंवत्सरसमये सुतरां निरवहत्।

## गुरुचरणयोरुपस्थानम्

प्रथमस्वातन्त्र्यसंग्रामस्य ज्वाला प्रायः प्रशमिताऽऽसीत्, ततस्त्रीणि वर्षाणि व्यतीतानि। स्वामिपूर्णानन्दस्य विवरणाद् गुरुप्रवरविरजानन्दस्य पुण्यकीर्तिं ख्यातिं विद्वत्तां च प्रति दयानन्दः पूर्णतयाऽभिज्ञ आसीत्; अतः स तमुपस्थातुमतीवसमुत्सुको मथुरां प्रस्थितः, परं मार्गे हाथरसनगरमनुगच्छन् "मुरसाननगरे पण्डितेन केनचित् समं स्वामिनो विरजानन्दस्य शास्त्रार्थो भविता" इति वृत्तमधिगम्य स मुरसाननगरं प्रति परावृत्तः। तत्र गतश्च "शास्त्रार्थो वृत्तः" इत्यधिगम्य स श्रीविरजानन्दस्य प्रतिवादिनं सम्मिल्य तमेव विरजानन्दं प्रापयितुमनुरुरोध। पण्डितमहोदयेन सह वार्तालापप्रसंगे "स शास्त्रार्थे पराजितः" इत्यभिसंलक्ष्य दयानन्दस्तमनुशंसाभिरुत्तेजयन्नुवाच- "युनक्तु भवान् मया, पश्यावस्तावत् कीदृशस्तार्किको विरजानन्द इति।" परं पण्डितवर्योऽतिगाम्भीर्येण प्रत्यवदत्; विरजानन्दमहाभागो ह्यष्टाध्यायी-महाभाष्यग्रन्थयोरधिकारप्राप्तो विशिष्टो विद्वान्; नहि स तर्कोक्तिभिर्जेतुं शक्य इति। एवं प्रतिवादिपण्डितवर्यमुखेनापि विरजानन्दस्यागाधपाण्डित्यगाथां शृण्वन् दयानन्दो मथुरायां तस्य पुण्यदर्शनलाभाय संकल्पमकरोत्।

१९१७तमसंवत्सरे दयानन्दो मथुरां प्राप्तः। स हि षट्त्रिंशद् वर्षवयस्कः, सार्धत्रयहस्तपरिमाणोन्नतः, सन्तप्तस्वर्णाभस्वर्णिमगौरवर्णकायः, ब्रह्मचर्यसुल-भौजस्तेजो विभासमानः विविधतपोव्रतयोगसाधनैश्च परमकान्तिमयः, व्यायामेन-सुगठितसन्तुलिताङ्गः, सर्वजनाकर्षकव्यक्तित्वयुतो युवाऽसीत्। धृतकाषायवस्त्रः, कमण्डलुहस्तः, अपरहस्तसंलग्नस्थूलदण्डः, रुद्राक्षमालामण्डितग्रीवः, विभूति-विरचित भालस्थलः, कक्षे वस्त्रसञ्चित-कतिचित्पुस्तकानि समादाय युवा परिव्राज-कोऽयम् मथुरायां रंगेश्वरमहादेवमन्दिरे विरराज। व्यतीत्य च कतिचिद् दिनानि दण्डिनो विरजानन्दस्य सभां प्राप्तः। अध्यापनकालमतिरिच्य सर्वदैव द्वारावरोधो दण्डिनो विरजानन्दस्य सामान्य-नियमः। केवलं दर्शनार्थिभिः सम्मिलनं नहि तस्याभीष्टम्। केचन विद्याभिलाषिणः, शास्त्रज्ञानजिज्ञासवश्च समागच्छेयुश्चेत् स सदैव परमं हर्षोल्लासं प्रादर्शयत्। दयानन्दसमागनकालेऽपि द्वारमवरुद्ध पिनद्धमेवावर्तत। स हि सखटखटं शनैर्द्वारमुदतोलयत्। "कस्त्वम्?" इत्याभ्यन्तर-प्रश्ने दयानन्दः सविनयमवदत्; "भगवन्! कोऽहमिति" एवाभिज्ञातुं भवच्छरणं प्राप्तः। द्वारं साम्प्रतमपि पिनद्धमेव। "अप्यधीतं किञ्चित्" इति द्वितीयाभ्यन्तर-प्रश्नः। दयानन्दः सर्वमधीतं न्यवेदयत्। इतो यावन्मानवप्रणीतग्रन्थेषु यद्यत्त्वया-धीतमनार्षत्वेन परित्याज्यं तत्; विस्मर सर्वं, यावन्मानवप्रणीतग्रन्थप्रभावाः हृदयस्थले स्थास्यन्ति तावदार्षज्ञानप्रकाशस्ते हृदयपटलं प्रकाशयितुं न प्रभेक्ष्यति;

यदि च मानवप्रणीतग्रन्था अपि केचन पार्श्वस्थितास्तानपि यमुनायां विसर्जय; तदैवार्षज्ञानालोकेनालोकितहृदयो भविष्यसि; इति गुरुवरस्य प्रथम आदेशः।

सञ्चितपुस्तकप्रक्षेपणं विशेषतश्च तत्सम्प्राप्तिदुर्लभे विज्ञानसाधनविरहिते युगे विद्यार्थिजनायातिदुष्करं कृत्यम्, परं विलक्षणो दयानन्दः, पुस्तकानि यमुनायां प्रक्षिप्य गुरुचरणयोरुपस्थाय प्रावदत् ''भगवन्! पुस्तकानि यमुनायां प्रवाहितानि; पूर्वाधीतञ्च सर्वं विस्मृत्य हृदयपटलं स्वच्छीकृतम्। दण्डिनो द्वारमुन्मुक्तम्, दयानन्दश्च प्रवेशानुमतिमलभत। परं परीक्षैका समवशिष्टा। गुरुरुवाच, दयानन्द! परिव्राजकस्त्वम्, संन्यासिनश्च भोजनावासयोः स्थितिः सदैवास्थिरा; अतस्ते मदन्तेवासिरूपेणाध्ययनं न स्थिरं प्रतीयते। स्वल्पसंवादप्रसंगेनैव दयानन्दोऽभ्यजानात्; यस्य महामानवस्य सान्निध्यमद्याधिगतम्, वस्तुतो लोकोत्तरः सः, अद्यप्रभृति संप्राप्ताः सर्वेऽपि गुरव एकाङ्गिनस्तेषां शिक्षादीक्षाऽपि चैकाङ्गिनी; परमद्य पुरःस्थितो गुरुवरः सर्वविलक्षणः, लोकोत्तरः, सर्वाङ्गीण-ज्ञाननिधिश्च प्रतिभाति, अतः स सर्वसम्भवस्थितौ महागुरोरस्मात् शिक्षाग्रहणाय विश्वस्तमनसा निश्चैषीत्। अविलम्बकृतनिश्चयः स विनीतभावेन प्रत्युदतरत्। भगवन्! विषयेऽस्मिन् न भवता विचिन्तनीयं सर्वव्यवस्थामहं विधास्ये। सुसन्तुष्टो विरजानन्दो दयानन्दं स्वान्तेवासिरूपेण पर्यग्रहीत्। दुर्गाप्रसादक्षत्रियमहाभागः किञ्चित्कालं स्वामिनो भोजनव्यवस्थां व्यदधात्; ततश्च अमरलालनामधेय-गुजरातप्रान्तीयौदीच्यब्राह्मणेनैकेन समं स्वामिमहाभागस्य परिचयः सञ्जातः। ज्योतिषविद्यायां पारंगतः स ''जोशीबाबा'' इति पदवीं प्राप्य प्रतिष्ठित आसीत्। सिन्धियामहाराजश्च ज्योतिषविषये तस्य प्रगाढपाण्डित्यं परीक्ष्य तस्मै ग्रामद्वादशकं प्रायच्छत्। एतेनैव तस्य निर्वाहवृत्तिर्व्यवस्थिता। उदारचेता अमरलालः प्रतिदिनं विप्रशतकाय भोज्यपानं प्रादात्। अयमेव महानुभावः शिक्षासम्पूर्तिं यावत् स्वामिनमपि भोजनं गृहीतुं प्रार्थयत्। अतिशयश्रद्धाशीलः स स्वामिनो भोजन-ग्रहणानन्तरमेव स्वयमन्नमगृह्णात्। कुतश्चिन्निमन्त्रितोऽपि स्वामिने भोजनं निवेद्यैव स भोजनं गृहीतुमगच्छत्। अस्य विषये स्वामिप्रवरः स्वयमप्युदलिखत्– ''आहारादि-व्यवस्थयाऽहं श्री-अमरलालं प्रत्यतितरां कृतज्ञः, मदीयाहारचर्यां प्रति स एताव-त्सावधानो यत् मद्भोजनव्यवस्थानन्तरमेव स्वयं भोजनमगृह्णात्; वस्तुतः स ह्यन्वर्थो महात्मा; एतदनन्तरं स्वामिन आवासव्यवस्थाऽपि सुसम्पन्ना।

विश्रामघाटस्थितलक्ष्मीनारायणमन्दिरस्याधःस्थितकक्षायां लघुकक्षमेकं स्वामिने आवासाय प्रदत्तम्। मन्दिरस्य द्वारपार्श्वे स्थितं कक्षमिदमतिलघुतर-मपि-एकाकिनो निवासाय पर्याप्तम्, स्थितिर्दृश्यञ्चातीवमनोहरमासीत्। एकतो मन्दिरवातायनस्थितस्य दृष्टिपथं यमुनायाः सौन्दर्यमपरतश्च वनस्थलीप्रसृत-रमणीयता हृदयमाह्लादयतिस्म। अमरलालश्चासहायसंन्यासिनोऽस्य सहायतया

अमृतत्त्वमाप्नोत्; तदा कोऽभिज्ञो यत्संन्यासिप्रवरोऽयं वैदिकधर्मस्य पुनरुद्धारकः, आर्यजातेरुन्नायकश्च भविष्यतीति। अमरलालोऽपि नाज्ञासीद् यद्दयानन्दस्य परिपालनेन परिपोषणेन चायं न केवलं भारतवर्षमपितु सकलभूमण्डलस्थितं सद्धर्मशीलजनसमूहं संजीवयति।

सर्राफश्रीगोवर्द्धनलालः स्वामिने तैलार्थमाणकचतुष्टयमासिकं प्रादात्; येन रात्रौ प्रज्वलितदीपकेन स स्वपाठमस्मरत्। प्रस्तरविक्रेता श्रीहरिदेवश्च तस्मै रुप्यकद्वयं प्रतिमासं पयःपानाय प्रादात्। एवं परमपुण्यसञ्चये द्वयोरेतयोरपि भागोऽवर्तत। भोजनावासव्यवस्थानन्तरं दयानन्दस्याध्ययनं समारब्धम्। विरजानन्देऽपूर्वपाण्डित्यम्, असाधारणप्रतिभा, विस्मयावहास्मृतिश्च न्यवसन्। स हि सर्वसाधारणे ''व्याकरणसूर्य''-रूपेण प्रसिद्धः। आर्षग्रन्थाध्ययनं विना न यथार्थज्ञानोपलब्धिरिति तस्य ध्रुवधारणासीत्। पाणिनिविरचिताष्टाध्यायी ह्येवार्षग्रन्थरहस्यभेदने समर्था, पातञ्जलमहाभाष्यं विना च पाणिनेर्यथार्थज्ञानम-सम्भवमिति तस्य स्थिरो विश्वासः, अतएव स उभयोरेव ग्रन्थयोरनयोरध्ययना-ध्यापने स्थिरसंकल्पोऽवर्तत। स हि दयानन्दमप्यष्टाध्यायीं महाभाष्यञ्चाध्यापयितुं प्रवृत्तः।

इतो यावत्प्रशिक्षणाय विरजानन्दमनुप्राप्ताश्छात्रा उदयप्रकाशप्रभृति-द्विचतुष्कं विहाय प्रायः सर्वेऽपि अल्पवयसोऽपठिताः, स्वल्पपठिता वा समागच्छन्। केवलं दयानन्दो ह्येव न केवलं सुपठितोऽपितु योगनिष्णातो महामतिशीलश्चा-वर्तत। अतोऽनेकधा पाठपठनकाले प्रसंगे च सोऽनेकशंकाजालमतनोत्। गुरुवरश्च तत्सुतरां समदधात्। यदाकदागुरुशिष्ययोः शास्त्रार्थोऽपि प्रावर्तत। यतो महान् तार्किको गुरुवरोऽसाधारणवाक्पटुश्च शिष्यवरः; गुरुवरो ह्यनेकधा दयानन्दं ''कालजिह्वः, कुलक्करः'' इति पदवीद्वयं प्रादात्। यस्य जिह्वाऽसत्यखण्डने भ्रान्तिजालोच्छेदने च कालसमकार्यकरी स हि कालजिह्वः; यश्च कुलक्करः (भूनिखातस्थिरकाष्ठदण्डः– ''खूँटा'') इव सुस्थिरोऽविचलितश्च परपक्षिणः पराजेतुं प्रभवेत् स हि कुलक्करः। इति नामद्वयेनानेन दयानन्दमभिदधद् गुरुवरोऽतीवप्रसन्नतामन्वभवत्। दयानन्दश्चापि भाविनि जीवनक्षेत्रे क्रान्तदार्शिनो गुरुवरस्योपाधिद्वयं सर्वतः सार्थकमकरोत्।

दयानन्दो हि विरजानन्दविद्यालयेऽसाधारणश्छात्रः। गुरुवरः पाठशालां पाठप्रसंगं च विहाय छात्रजनैः समं न हि कमपि सम्बन्धं समायोजयत्, परं दयानन्देन सह पाठप्रसंगातिरिक्तं विषयान्तरमपि समालोचयन्नेकान्तवार्तालापं व्यदधात्। प्राणपणेन ज्ञाननिधिं वितरतो गुरुवरस्य बलवतीयं कामना; यन्मस्तिष्कमानसरःस्थितं सकलमपि ज्ञानरत्नराशिं शिष्यप्रवरदयानन्दस्य मस्तिष्क-

भाण्डारे परिबिभृयात्; एवमेव शिष्यप्रवरोऽपि महद्गुरोर्ज्ञाननिधेः सम्पूर्णरत्नराशिमधिगन्तुं प्रयत्नवानासीत्। एवमुभावेवादानप्रदाने संलग्नावास्ताम्। एकदा दयानन्दो नित्यनियमानुरूपं दूरे मथुरायाः शीतलपुनीतयमुनातटस्यैकान्तप्रदेशे ध्यानमग्नोऽभूत्। समाधिजागरणावशिष्टक्षणेष्वेव सरित्स्नाता महिला काचित् परमभक्तिभावेन तस्याचरणयोर्मस्तकं न्यदधात्। तामतिविनीतभावेन परिहरन्-ऋषिवरः सवस्त्र एव यमुनायां सचैलस्नानमकरोत्। स्नानानन्तरञ्च तत्रैव निर्जनप्रदेशे दिनत्रयं निराहारो वसन् चतुर्थदिवसे गुरुसभामुपस्थितः। इतश्च गुरुवरः स्वपट्टशिष्यस्याकारणानुपस्थितिं परिचिन्तयन्नतीवव्यग्रो व्याकुलश्च समभवत्। स हि सयत्नमन्वेषयन् तद्विषये न किमप्यभिज्ञानमाप्नोत्। क्रमशो दिनत्रये व्यतीते "अनिष्टशंकी खलु बन्धुजनः" इत्युक्तेरनुरूपं तस्य मनः क्लिष्टकल्पनाभिराक्रान्तमभवत् "निरन्तरं परमप्रभोराराधनेन स मनसा चिन्तितं स्वकर्तव्यधारणक्षमम्; स्वेच्छानुरूपं शिष्यप्रवरमेकं सम्प्राप्नोत्; सोऽपि सहसा विलुप्तः"। इत्येवं तेषु दिवसेषु मनसि विलपमानस्य विरजानन्दस्य मनोव्यथाया व्याकुलताया व्यग्रतायाश्चानुभूतिं कश्चिदेवंविधो भुक्तभोगी जनो ह्येवानुभवितुं प्राभवद् यस्य चिराभिलषितामूल्यनिधिर्लब्धोऽपि प्रणश्येत्।

चतुर्थदिवसे गुरुसभां प्राप्य दयानन्दो गुरुचरणौ स्पृशन्नभिवादनमकरोत्। शिष्यवरस्य देहं स्पृशन् तं कृशन्वानुभवन् गुरुप्रवरोऽपृच्छत् "दिवसेष्वेतेषु क्वस्थितोऽसि वत्स? कृशाङ्गश्च केन कारणेन प्रतीयसे?" इति। गुरुवरस्य स्नेहसिक्तजिज्ञासायामखण्डब्रह्मचर्यव्रती दयानन्दोऽथत इतिपर्यन्तां सर्वां कथामकथयत्। कतिपयक्षणपूर्वमेवात्यन्तव्यग्रो व्याकुलश्च वृद्धाचार्यः सहसा प्रफुल्लितमनाः शिष्यप्रवरमाकृष्य परिष्वज्य च "असहायान्धो यष्टिकामलभत" इति ससन्तोषमवदत्। दण्डिनो विरजानन्दस्य स्नानजलसम्भरणभोजननिर्माणादिव्यवस्थायां बहवो भृत्याः (कर्मकराः) सेवकाश्च संलग्ना आसन्। परमादर्शगुरुभक्तो दयानन्दस्तान् किञ्चित्कालार्थं सेवामुक्तानकरोत्। नियमपूर्वकं स हि गुरुकुटीरं स्वच्छीकुर्वन्, स्नानजलेन सह मध्यधारातः पेयजलं समानयंश्च गुरुसेवायां सततसावधानो बभूव। एवमनन्यभक्तिसेवाशुश्रूषाभिश्च स गुरुदेवस्य मनः स्ववशमकरोत्।

एकदाऽऽदेशपूर्णो विरजानन्दो दयानन्दस्योपरि यष्टिकाप्रहारमदात्; अनेन तस्य भुजोपरि गहनक्षतं जातम्; परं स्वपीडां विस्मृत्य दयानन्दो गुरुवरं प्रार्थयत्; "भगवन्! प्रस्तरसमो मे कठोरदेहः, कोमलौ च भवद्भुजौ; क्वचित्प्रहरणे क्लेशमवक्ष्यताम्; अतो न मयि प्रहर्तव्यम्" इत्यभिदधत् स गुरुदेवस्य कोमलकरौ समवाहयत् एवं भुजोपर्याजीवनस्थायि तत्क्षतं निरीक्ष्यमाण ऋषिवरः सदैव गुरुदेवस्योपकारणां स्मरणमकार्षीत्। परमकृपापूर्णो गुरुवरविरजानन्दो दिवानिशं

निःस्वार्थभावेन छात्रानध्यापयति स्म। पुनः पुनः पृष्टोऽपि स पौनःपुन्येन प्रशिक्षमाणो न कदापि खेदमन्वभूत्, परं दयानन्देन समं तस्य विलक्षणो व्यवहारः। एकदा दयानन्दस्य मेधैव तमवञ्चत्। श्रवणमात्रेणैव पाठस्मरणशीला तस्य कुशाग्रसमा स्मरणशक्तिरेकदाष्टाध्यायीस्थितां क्लिष्टप्रयोगसिद्धिमेकां व्यस्मरत्। बहुशः कृतप्रयत्नोऽपि सफलतामनधिगच्छन् स तां प्रयोगसिद्धिं पुनरध्यापयितुं गुरुवरं प्रार्थयत्; परं गुरुवरो न्यषेधीत्। पुनः पुनः प्रयतमानोऽपि सोऽकृतकार्यो गुरुचरणयोरुपस्थितः, परं गुरुवरः सरोषमवदत् "नाहं वारं वारं वस्त्वेकमध्यापयितुमत्र स्थितः, स्वयमेव स्मृत्वाऽत्रायाहि; स्मृते ह्येव प्राक्तनपाठे पाठान्तरं पाठयितुं शक्यम्; अस्मृतायां प्रयोगसिद्धौ स्वैरं यमुनायां प्राणविसर्जनं कुरु, नात्र प्रयोगस्मृतिं विनाऽऽगन्तव्यमिति"। दयानन्दसहाध्यायिनो गुरुवरस्य व्यवहारमिमं पश्यन्तस्तस्यव्यवहारपरिवर्तनमिदममन्यन्त; परमक्षुब्धो दयानन्दो गुरुवरस्यादेशमिममात्मकल्याणायैवोपाकल्पयत्।

श्व आत्मदायित्वगुरुतरभारवहननिर्णीतपात्रायात्मनिर्भरताप्रशिक्षणमपि गुरुवरस्यानिवार्यं कर्म। शिरोधार्यं गुरोरादेशं मन्यमानो दयानन्दस्तूष्णीमेव ततः प्राचलत्। परिचलंश्च मनसि प्रतिज्ञातवान् "प्रयोगसिद्धिस्मरणानन्तरमेव सम्प्रति गुरुचरणयोरुपस्थातव्यम्; अन्यथा यमुनायां प्राणविसर्जनमेव श्रेयः; **"कार्यं वा साधयेयं शरीरं वा पातयेयम्"** इति निश्चित्य स एकान्तयमुनातीरे तामेव प्रयोगसिद्धिमनुध्यायन् स्थितः। प्रयोगसिद्धिमेवानुचिन्तयतस्तस्योपरि योगनिद्रा प्रसृता। तस्यामेवास्थायां स मानसचक्षुर्भ्यामपश्यत्; यत्तामेव प्रयोगसिद्धिं कश्चिदानुपूर्वीतः समुपवर्णयंस्तं प्रशिक्षयति। प्रयोगसिद्धिः समाप्ता, भग्नायाञ्च योगनिद्रायां पुलकिततनुर्दयानन्दो गुरुचरणयोरुपस्थितः प्रयोगसिद्धिञ्च सम्पूर्णामुपावर्णयत्। गुरुवरः श्रुत्वैव हर्षपारावारे निमग्नः; तस्य मनोरथपूर्तिकरश्च सम्प्राप्त इति च स निश्चैषीत्।

एकदाऽपराधग्रस्तो दयानन्दो गुरुवरस्य कोपभाजनमभूत्। केवलं दर्शनार्थं समागतानामादर्शसंन्यासिरूपेण पूर्वाश्रमसम्बन्धिनाञ्च सर्वथा सम्मिलनपरिहरणं गुरुदरस्य स्थिरो नियमः। एकदा संयोगवशाद् विरजानन्दस्य जन्मग्रामवासी कश्चित् स्वजनस्तस्य कीर्तिमभिश्रुत्य दर्शनोत्सुको गुरुवरस्य शिष्याणामनुनयमकरोत्। दण्डिनो नियमपालनविषये कठोरतामनुभवन्तः सर्वेऽपि परिचितास्तस्य कामनापूर्तिं प्रत्यसमर्थतां प्रादर्शयन्। स हि दयानन्दं प्राप्य तदैव प्रार्थयत्; परमत्राप्यन्येषामिव स एवासमर्थभावः प्रदर्शितः। अभ्यागतश्च विनयातिशयं विदधत् सानुरोधप्रार्थनापरश्च दयानन्दस्य पादावभिगृह्य प्रोवाच "भगवन्! कामं मदर्थे गुरुवरस्याप्रसादं सहस्व परं दर्शनसौभाग्येनावश्यं मामनुगृह्णीस्व; तूष्णीमेवाहं दूरतः पुण्यदर्शनं विधाय परावर्तिष्ये; महांस्ते मय्युपकारो भविष्यतीति"।

दयालुस्वभावो दयानन्दस्तमात्मना समं गुरोरट्टालिकायां निनाय। अभ्यागतो हि कतिचित्क्षणानि मौनभावेन दण्डिनो दुर्लभदर्शनानन्दमनुभवन् दयानन्दस्य संकेतेन शनैः शनैः पश्चात्परावृत्तः। स्वामिप्रवरोऽपि तेन सममेव विश्रामघाटमभिगन्तुं ततः परावर्तत। मध्यसोपानमार्गे ह्येव मिलितं सहाध्यायिनमेकं दयानन्दः संकेतेन न्यवारयत्; परं स हि गुरुवरं विरजानन्दं न्यवेदयदेव। "गुरुवर! अद्य दयानन्देन समं को हि भवन्तमुपागत आसीत्? वेषभूषाभिश्च स हि पाञ्चालप्रान्तीयोऽभिगतः। "मौनभावेन कश्चिन्मामुपागत्य प्रतिनिवृत्तः" इत्यभिज्ञाय गुरुवरोऽतीव रोषमभजत्। स हि समागतं दयानन्दमतितरां निर्भर्त्सयन्नकथयत् "नेत्रहीनं मां मन्यमानेन त्वया प्रवञ्चनेयं विहिता, अपसरेतः, प्रवेशस्ते गुरुसभायां परिवर्जितः, ऋषिवरस्तत्क्षणमेव गुरुदेवस्य चरणावभिगृह्य क्षमाप्रार्थनामकरोत्, परं गुरुवरो न प्रासीदत्। ततः कतिपयदिवसेषु श्रीनयनसुखमहोदयेन विनयपूर्वकं दयानन्दस्य गुरुसभाप्रवेशनिषेधोऽपवाहितः।

पुनरेकदा दयानन्दस्य गुरुसभाप्रवेशो निषिद्धः। यथा चैकदा स गुरुकुटीरं सम्मार्ज्य कर्कटनिचयमेकतः संग्राह्य मार्जनीं प्रक्षिप्य कर्कटं प्रक्षेप्तुं वस्त्वन्तरान्वेषणपरोऽभूत्। तदैव संयोगवशात्तत्र परिभ्रमतो दण्डिमहाभागस्य पादः कर्कटोपरि निपपात। क्रुद्धश्च दण्डिवर्यो दयानन्दम् "अलसः, अनुद्यमी" इत्यादिविशेषणैराक्षिपन् पुनस्तस्य सभाप्रवेशं न्यषेधीत्। तदानीञ्च स्वामिनोऽध्ययनसम्पूर्तौ स्वल्प एव समयोऽवशिष्टः, अतः स श्रीनन्दनचोबे-नयनसुखमहोदयञ्चोपस्थाय प्रार्थयत्। "वस्तुतस्तु गुरुदेवो न प्रकुपितः, पुनरपि पूज्यवरेणावेशवशान्मे सभाप्रवेशो वर्जितः; शिक्षासम्पूर्तौ च मे स्वल्पसमयोऽवशिष्यते; अतो नाहं गुरुदेवस्य-अप्रीतिभाजनः सन् प्रयातुमिच्छामि" अत उभावेव युवां मेऽपराधं क्षामयितुमनुग्रहपरौ भवेतम्। उभाभ्यां सहैव दयानन्दो गुरुसेवामुपस्थाय हस्तद्वयेन गुरुचरणौ समीड्यापराधक्षमामयाचत' यदा कदा शिष्यजनेषु प्रकुपितोपि गुरुवरो विरजानन्दः प्रतप्तपयःक्षोभमिव क्षणिकमेवावेशमवहत्; वस्तुतो हि स स्वशिष्यवर्गं प्रति-अपारसहजप्रीतिपर आसीत्; अतः स हि सुतरां सन्तुष्टो दयानन्दस्य सभाप्रवेशमन्वमन्यत।

## ऋषिदयानन्दस्य-आदर्शगुरुदक्षिणा

पुरातनपरम्परानुरूपं शिक्षासम्पूर्तौ समावर्तनसंस्काररूपेण छात्राणामेको विशेषः संस्कारः समभवत्। अस्मिन्नवसरे शिष्यजनाः स्वस्वसमार्थ्यानुरूपं गुरुवराय गुरुदक्षिणां प्रायच्छन्। स्वामिदयानन्दस्यापि समावर्तनसंस्कारावसरः समायातः। "दण्डिनश्चरणयोः स्थितेन तेन किं किमधीतम्।" इति विवरणं तु साम्प्रतं नोपलभ्यते; परं निश्चितमेतद् यत्स गुरुचरणयोः स्थितोऽष्टाध्यायीं महाभाष्यञ्च

पूर्णतयाऽपठत्। सममेव वेदान्तादिदर्शनानां, उपनिषदां, निरुक्तादीनां विशेषस्थलानामपि गुरुमुखात् परिशीलनमकरोत्। पाठातिरिक्तमपि गुरुशिष्ययोर्विशेष एकान्तवार्तालापः समजायत। उभावेव वीतरागिणौ संसारत्यागिविरक्तसंन्यासिनावास्ताम्; अतो ध्रुवमेव न तयोः स सांसारिको वार्ताप्रसंगः, अपितु पूर्णतयाऽऽध्यात्मिकः, दार्शनिकः, राष्ट्रिस्थितिसमीक्षणमयो वा प्रायोऽभविष्यत्। विरजानन्दोऽध्यापनप्रसंगे प्रायशः स्वशिष्यजनानकथयत्— मया हि वारं वारं ये ज्योतिःस्फुलिङ्गा युष्मद्हृदयेषु सम्भृताः, कालप्रवाहेण प्रचण्डतां प्राप्तास्ते ज्योतिःस्फुलिङ्गाः समस्तराष्ट्रे प्रसृतानि मतमतान्तराणि भस्मसात् करिष्यन्ति। दयानन्दव्यतिरिक्तान्यशिष्यहृदयेषु सर्वथा प्रशमिता अपि ते स्फुलिङ्गा दयानन्दस्य हृदये वस्तुतः प्रचण्डज्वालारूपेण परिवर्तिताः।

आर्षग्रन्थाध्ययनेन कृतार्थो दयानन्दः स्वर्णरूपोऽपि दिव्यतामलभत। साम्प्रतं हि तस्य प्रतिगमनवेला। गुरुवरो विरजानन्दोऽतिशयेन लवंगसेवीति दयानन्दः सुतरामजानात्, अतः स गुरुदक्षिणार्थं कुतश्चित् किंचिन्मितान् लवंगानादाय गुरुचरणयोः समर्पयत्। गुरुचरणौ संस्पृश्य स सश्रद्धं प्रोवाच; गुरुदेव! असीमकृपापरायणेनात्रभवता यन्मे विद्यादानं प्रदत्तं तदर्थं हि प्रतिरोम मे भवते धन्यवादं वितरति; भगवन् ! साम्प्रतमयं विनीतशिष्यो देशाटनाय भवदनुज्ञां वाञ्छति।

सामान्यतो विरजानन्दः स्वशिष्यजनेभ्यो न हि कामपि गुरुदक्षिणामगृह्णात्। प्रायः शुभाशीर्भिरेव तान् समावर्तितानकरोत्, परमद्य गुरुवरस्य विलक्षणो व्यवहारः; स हि दयानन्दमपृच्छत्; "किमानीतवानसि वत्स?" गुरुवरस्यापूर्वजिज्ञासां परिज्ञाय म्लानमनाः शिष्यवर्गश्चकितः। ते हि स्वीयां गुरुदक्षिणां स्वल्पीयसीं सामान्याञ्च मन्यमानाः शङ्किता अचिन्तयन्। किमद्य वृत्तो गुरुदेवः? यश्च कदाचिद् दक्षिणारूपेण शिष्यजनेभ्यः कणमात्रमपि न स्व्यकरोत्; स ह्यकिञ्चनं कौपीनधारिणं संन्यासिनमेकं गुरुदक्षिणार्थं पृच्छति; इत्यसमञ्जसग्रस्तेष्वेव सकलसहाध्यायिषु दयानन्दो धीरगम्भीरभावेन प्रत्युदतरत्; देव! एते किञ्चिन्मिता लवंगाः। तेजस्विस्वरेण गुरुवरोऽपृच्छत्; इदमेव किं मे महत्परिश्रमस्य पारिश्रमिकम्? महागुरोरनेन परिवर्तितविलक्षणभावेन सर्वे स्तब्धाः। परमतीवप्रशान्तविनीतभावेन दयानन्दो न्यवेदयत्; भगवन्! अकिञ्चनोऽहं संन्यासी; लवङ्गा अप्येते भिक्षार्जिताः, गुरुदेव! विश्वसिहि; नाहं किमपि वस्तुजातं बिभर्मि; यच्च श्रीचरणयोः समर्पयितुं शक्नुयाम्। श्रुत्वैतदतीवस्नेहसिक्तस्वरेण गुरुवरोऽवदत्; "दयानन्द! किमहं त्वय्यविद्यमानं वस्तुजातं गुरुदक्षिणार्थं चिन्तयामि" इति विभावयसि? वत्स! तदेव वस्तु दक्षिणारूपेणापेक्षेऽहं यच्च त्वं सुतरां बिभर्षि।

श्रुत्वैतदादर्शशिष्यवरो महागुरोश्चरणयोः शिरसाभिवन्दन् सविनयमुवाच; गुरुदेव! सह मनसा तनुरियं श्रीचरणयोरर्पितं सर्वम्; समादिश देव; श्रीमुखान्निः-सृतमादेशं शिरसि सन्धार्याजीवनं परिपालयिष्यामि। स्वप्रियतमशिष्यतः प्रोत्साहनपूर्णवाक्यसमूहं शृण्वतो विरजानन्दस्य प्रतिरोम प्रहर्षनिर्भरमभूत्। तस्य हृदये शिष्यस्नेहस्य प्रबलस्रोतः प्रवाहितम्। स हि सह शुभाशीर्भिः स्वामिनमवदत्; वत्स! भारतवर्षे अज्ञानान्यायाभावग्रस्ता दीनहीनजना अनेकविधक्लेशान् सहन्ते, तानुद्धर। प्रचलितमतमतान्तरैः प्रसृतं कुरीतिजालं छिन्धि! आर्यजातेर्विकृतदशां सुचारुतां नय। आर्यसन्ततीनामुपकारं कुरु। आर्षशैलीं प्रचलितां विधाय प्रशिक्षणे वेदानां वैदिकग्रन्थानां च पठनपाठने लोकरुचिं जागृतां कुरु। गङ्गायमुनयोर्निरन्तरगतिशीलप्रवाह इव लोकहितकामनामुद्दिश्य सक्रियजीवनं जीव। प्रियपुत्र! इदमेव कार्यवस्तु गुरुदक्षिणायां मे प्रयच्छ; नाहं सांसारिकपदार्थं कञ्चिदभिवाञ्छामि।

गुरोरादेशं स्वीकृत्य दयानन्दः सगद्गदगिरोवाच; गुरुदेवो द्रक्ष्यति; यदयं प्रियशिष्यः कियता प्राणपणेन भवदादेशमनुपालयिष्यति। पुलकितगात्रो गुरुवरो नतमस्तकशिष्यप्रवरस्य शिरसि पुनर्वरदहस्तं निधाय भूयोभूयः शुभाशिषो वितरन्नुवाच; "सर्वत्र शुभमस्तु, शिवास्ते सन्तु पन्थानः; वत्स ! याहि, परमः प्रभुः सत्यशिवः सुखसम्पन्नतामनन्तसफलताञ्च त्वां वितरेत्, सफलमनोरथः सिद्धकामश्च त्वमनन्तयशः सम्प्राप्नुहि," इति। गुरुचरणौ प्रगाढं समीड्य दयानन्दः सरस्वती ततोऽनुज्ञामवाप्य विसृष्ट आगरानगरं प्रति प्रयाणपरो बभूव। विसृजन्तं शिष्यप्रवरं गुरुर्विरजानन्दोऽन्तिमादेशं प्रादात्; वत्स! सदैव स्मर्तव्यमेतद् यन्मानवरचितग्रन्थेषु परमप्रभोर्ऋषिमुनीनाञ्च विषये प्रायः सर्वमेव निन्दास्पदम्, यावच्च आर्षग्रन्थेषु नास्य दोषस्य लेशोऽपि विद्यते। आर्षानार्षग्रन्थानामिदमेव पृथगभिज्ञानम्; नेदं निकषं कदापि विस्मर्तव्यम्।

गुरुदेवस्य शुभाशिषोऽभिगृह्णन् दयानन्दो लोकोपकारे लोकोद्धारकार्ये च प्रवृत्तः। यदा कदा च स गुरुचरणयोरुपस्थाय सञ्जातशंकानिवारणमकरोत्। उतश्च गुरुवरोऽप्यतीवसमुत्सुकस्तस्य कार्यजातं निरैक्षत। एकदा ऋषिवरे मेरठनगरस्थिते " वत्स! नेतो यावत्ते धवलकीर्तिरस्मानुपागतेति" व्यग्रतापूर्ण उत्सुकतामयश्च गुरुवरस्य सन्देशोऽधिगतः। कियान् चिन्तामयो महागुरुः स्वधर्म-विषये स्वराष्ट्रविषये चेति स्मरणीयो विषयः।

एकदा सद्धर्मप्रचारार्थं प्रविचरन्नृषिवरो गुरुनगरीम् (मथुराम्) समागत्य विरराज। संयोगवशात्तस्यैकेन सहाध्यायिना श्रीयुगलकिशोरेण समं सम्मिलनम-भूत्। अभिवादनानन्तरमुभयोः शास्त्रार्थः प्रवृत्तः। दयानन्दः कण्ठीतिलकयोः प्रबल-

खण्डनमकरोत्। प्रतिवादी श्रीयुगलकिशोरस्तस्य युक्तिप्रमाणयोर्विरोधे युक्तिशून्यः प्रमाणप्रस्थापने चासमर्थो गुरुचरणयोर्विनिवेदनतर्जनां व्यदधात्। स्वैरं गुरुचरणयोः निवेदयेति प्रब्रुवन् दयानन्दश्च सानन्दो व्यहसत्। युगलकिशोरश्च गुरुवरं सम्प्राप्य प्रोवाच; "भगवन् ! दयानन्दं प्रशिक्षता भवता भुजगाय पयःपानमिव विहितम्।" स हि कण्ठीतिलकादिधर्मचिह्नान्यपि विगर्हयन् प्रचरति। श्रुत्वैतत् प्रहृष्टमना गुरुवरोऽपृच्छत्; वत्स! किं सत्यमिदं संवदसि? को हि त्वामकथयत्? युगलकिशोरः प्रत्यवदत्; कोऽन्यो वक्ष्यति, मया सह वार्तालापप्रसंगे स हि स्वयमेवैतानि धर्मलिङ्गानि समालोचयन् व्यगर्हयत्। परमोल्लसितो गुरुवरः प्रत्यवदत्; युगलकिशोर! एतच्छुभसंवादप्रदायिने तेऽनेकान् साधुवादान् वितरामि। "गुरुवरो धर्मलिङ्गालोचनं संश्रुत्य दयानन्दाय दुर्वचनैः शपिष्यति" इति मन्तव्यविरुद्धं गुरुदेवस्य प्रहर्षप्रकाशनं पश्यन् चकितः खिन्नश्च स गुरुवरमपृच्छत्; किमहमपि कण्ठीं भनज्मि तिलकञ्च परिमार्जयामि? "त्वयापि धृतानि मन्दतायाश्चिह्नान्येतानीति।" गुरुवरस्य परिप्रश्ने स तत्क्षणं कण्ठीं बभञ्ज (उत्तार्य प्राक्षिपत्) भालतिलकञ्च हस्तेन पर्यमार्जयत्। पुनश्च स गुरुवरमपृच्छत्; न भवता कदापि वयमेतदर्थमुपदिष्टाः। विरजानन्दः समुदतरत्। युष्मासु नैकमप्येतद्गुरुतमभारवहनक्षममहमपश्यम्।

सुविज्ञपरीक्षको हि गुरुर्विरजानन्दः। कः कस्मिन् कार्ये समुपयुक्तः इति स सुतरामजानात्। युगलकिशोरप्रभृतयस्तस्य सर्वेऽपि शिष्याः विद्वांसो बुद्धिमन्तश्चासन्; परं गृहकार्यजालग्रस्तास्ते गृहस्था गृहाश्रमसीमानमुल्लंघयितुमक्षमाः; अतो गुरुवरदृशा परिव्राजकदयानन्दव्यतिरिक्तो न हि कोऽपि तद् गुरुतमभारवहने समर्थ आसीत्, इति।

# कर्मक्षेत्रेऽवतरणम्

यथाहि प्राक्तनकाले लोकहितार्थं कालजयिमहायोगिमहात्मनोऽगस्त्यस्याश्रमाद् दिव्यास्त्रशस्त्राणि सन्धार्य श्रीरामो लोकमंगलार्थं रणक्षेत्रेऽवातरत्; तथैव महागुरुमहात्मनो विरजानन्दस्य कुटीरादात्मगृहीतश्रुतिशास्त्रालौकिकज्ञानज्योतिष्पुञ्जो दयानन्दो महर्षिर्मानवजगदात्मनः प्रकाशयितुं कर्मक्षेत्राभिमुखं प्रयातः। यथा च दिव्यदेवपुरुषश्रीकृष्णस्य प्रोत्साहनेन महावीरधनञ्जयस्य प्रतिधमनिशिरासु च वीररसभरितरक्तप्रवाहोऽधिक्षतः, तथैव विरजानन्दस्य वचनविद्युत्स्फुलिङ्गैर्दयानन्दस्य कायेऽपि कर्मशीलजीवनस्याकल्पितगतिरुदपद्यत। स हि मिथ्यामतमतान्तरजनितगहनाज्ञानसंग्राममये, ईर्ष्याद्विषधूम्रासारावरुद्धस्वस्थश्वासप्रवाहे, क्षुभितदृष्टिप्रसरे, निन्दनलाञ्छनपैशुन्यप्रभञ्जनरजःप्रसृते, बृहज्जनैरपि स्वार्थसाधनस्यैव सर्वाधिकमाहात्म्यमये, कर्मक्षेत्रे सुनिपुणप्रशिक्षितसेनानीवातिसाहसेन समवातरत्। परमार्थोपदेशपरहितसाधनरूप-वरुणास्त्रद्वयेन धर्मधारणरणरंगस्थले स्ववाग्वीरतां प्रदर्शयन्नृषिवरः साम्प्रदायिकसैनिकसमूहप्रसारितधूम्रधूलिप्रवाहोपशान्तये प्रवृत्तः।

१९२०तमसंवत्सरस्य वैशाखमासान्ते देवर्षिर्दयानन्द आगरानगरमुपागतः। उच्चन्यायालयस्य स्थितिकारणात्तदानीं नगरमिदमतीव शोभाभरमासीत्। ऋषिवरश्च यमुनातटे भैरवमन्दिरस्य पार्श्वे श्रीगल्लामलरूपचन्दाग्रवालमहोदयस्योपवनमध्यवसत्। उपवनस्थः साधुरेको दर्शनमात्रेणैव स्वामिप्रवरस्य श्रद्धाशीलभक्तजनोऽभूत्। स हि सर्वोच्चपत्रालयाधिकारिकार्यालये स्थितं रायबहादुरपण्डितसुन्दरलालमहोदयमन्याँश्चापि नगरवर्तिप्रमुखसद्गृहस्थान् समसूचयत् "उद्यानेऽस्मिन्नतिविशिष्टो विद्वानेक एतादृशो देवपुरुषः समागतो यस्य हि पुण्यदर्शनेनैव मानवः प्रशान्तिमधिगच्छति किं पुनरुपदेशश्रवणेन" एतेनानेके नगरवासिनः स्वामिनमुपागच्छन्; पण्डितसुन्दरलालोऽपि स्वामिनः पुण्यदर्शनेन परां तृप्तिमलभत।

तेष्वेव दिवसेषु कैलासपर्वतनामधेयः संन्यासीकश्चित्तदुपवनं समागत्य गीतायाः प्रवचनानि प्रवक्तुं प्रवृत्तः। महर्षिणा सह तस्यातीवसौहार्दभावः संवृत्तः। एकदा स्वामिकैलासपर्वतो गीताप्रवचनप्रसंगे "**सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज**" गीता १८/६६। अस्यश्लोकस्यार्थसंगतिं कर्तुं नापारयत्। भक्तजन एकोऽर्थसंगतिं विधातुं महर्षिं प्रार्थयत्, ऋषिवरः प्रत्युवाच, वस्तुतः श्लोकेऽस्मिन् "सर्वधर्मान्" इति समस्तपदे मध्याकारलोपः कृतः; येन सर्व-धर्मान् इत्यस्य सर्व-अधर्मान् इत्यर्थः कर्तव्यः। अर्थमिमं श्रुत्वा कैलासपर्वतसहिताः सर्वेऽपि भक्तजना धन्यं धन्यं वदन्तः परं सन्तुष्टा बभूवुः। कैलासस्वामी च स्वामिनं बहुप्रशंसन्-भक्तजनानुवाच "किमपि पठनग्रहणपराश्चेद् यूयम्, स्वामिनश्चरणयोरेवोपस्थिताः परिपठत। अनेन च ऋषिवरस्य कीर्तिकौमुदी सम्पूर्णनगरपरिसरे परिव्याप्ताभूत्;

सद्धर्मजिज्ञासूनां श्रेणयश्च महर्षिमुपस्थातुं प्रवृत्ताः।

कैलासस्वामी दिनदशकं तत्रास्थाय भरतपुरं प्रस्थितः। ऋषिवरश्च तत्रैव विरराज। एकदा रविवासरे श्रीसुन्दरलालः स्वामिनं न्यवेदयत्; भगवन्! साम्प्रतं हि संस्कृतभाषा मृतप्राया मन्यते, न व्यवहारवर्तिनी; केन कारणेन भवान् भाषायामस्यामतिगहंनपरिश्रमं व्यदधात्? ऋषिवरः प्रत्युदतरत्, परलोकसुधारिणीयं भाषा; अन्योऽपि कश्चित् स्वकल्याणं कामयेच्चेत्साहाय्यं करिष्ये। प्रत्युत्तरेण प्रभावितः श्रीसुन्दरलालः, श्रीबालमुकुन्दश्च स्वामिनः पार्श्वेऽष्टाध्यायीमध्येतुमारभेताम्।

**पञ्चदशी कथा**—लोकाग्रहेण कदाचिदृषिवरः पञ्चदशीकथां प्रारभत। कदाचित्कथाप्रसंगे "यदा कदा परमेश्वरोऽपि भ्रान्तिग्रस्तः" इति स्थलं वीक्ष्य ऋषिवरः स्थलमिममाक्षिपन् "यो हि भ्रान्तिग्रस्तो न हि स परमेश्वरः; न हि परमेश्वरः कदाचिद् भ्रान्तिमधिगच्छति; प्रसंगेनानेन भ्रममूलको मानवरचितश्च ग्रन्थ एष" इति प्रब्रुवन् पुस्तकं प्राक्षिपत्। पुनश्च बहुजनाग्रहेणापि न हि तत्पुस्तकमगृह्णात्।

**नेतीधोतीप्रक्रियया रोगनिवृत्तिः**— कदाचित् पण्डितसुन्दरलालस्य मस्तिष्कं सुगन्धदुर्गन्धज्ञानाग्रहणदोषग्रस्तमभूत्। ऋषिवरश्च नेतीधोतीन्योलीप्रभृतियौगिकक्रियाः विधिपूर्वकं प्रशिक्षमाणस्तं स्वस्थमस्तिष्कं पूर्णतो निर्दोषञ्च व्यद्धात्। अन्यानपि बहुजनान् स यौगिकक्रियाः प्राशिक्षत। आगरानगरे स्थितस्य स्वामिनः शरीरे स्फुटिकाः सञ्जाताः। स ह्येकदा कतिचिज्जनैः संगतो, यमुनाया राजघाटमनुप्राप्य तत्र वस्तीकर्मणा त्रिचतुर्वारं मूलद्वारेण जलमाकृष्य निरगमयत्। एवमुदरे पूर्णतो विशुद्धे स्नानानन्तरं स्वस्थानमवाप। तत्राहाररूपेण स केवलं द्विदलौदनमेवागृह्णात्। वस्तीक्रियां स्वामिप्रवरो नर्मदातटे विन्ध्याचलवासिना केनचिद् भग्नकर्णनाथस्वामिना सह कतिपयदिवसेषु स्थितोऽशिक्षत। अनयैव क्रियया तस्य शरीरस्थस्फुटिकाः प्रशान्ताः।

**प्रथमरचितसन्ध्या**— आगरानगरे निवसता स्वामिना सन्ध्यायाः पुस्तकमेकं सम्पादितम्। महाशयरूपलालश्च सार्धसहस्ररूप्यकव्ययेन सन्ध्यापुस्तकस्य त्रिंशत्सहस्रप्रतीनां मुद्रापणमकार्षीत्।

**मूर्तिपूजाखण्डनम्**— दिवसेष्वेतेषु ऋषिवरो मूर्तिपूजायाः खण्डनमकार्षीत्। परिणामत आगरावासिनौ चेतूलालकालिदासनामधेयपण्डितवर्यौ "वेदविरुद्धा खलु मूर्तिपूजा; परं गृहस्थावावामस्वाधीनावतस्तद्विरोधे न वक्तुं प्रभविष्यावः" इति वदन्तौ स्वामिना सह पूर्णसहमतौ। स्वामिनः सदुपदेशेन पण्डितसुन्दरलालोऽपि शिवप्रतिमापूजनमत्यजत्। आगरासमागतो मथुरावासी

पण्डितघासीरामश्चापि स्वामिसत्संगप्रभावितो मूर्तिपूजनं प्रत्यतीवास्थाहीनो बभूव। चतुःषष्ठियोगासनक्रियाभिज्ञो जितेन्द्रियः संयमी च कश्चिदपठितब्राह्मण आगरां सम्प्राप्तः; ऋषिवरस्तं वस्त्रप्रक्षालनादिकार्येषु नियुक्तमकरोत्; उल्लसितक्षणेषु तस्य योगासनप्रक्रियामपि पर्यैक्षत।

**अष्टादशहोरासमाधिः–** तेषु दिवसेषु ऋषिवंर उभयसन्ध्यावेलायां योगसाधनमकार्षीत्; कदाचिच्च कतिपयप्रहराणि यावद् ध्यानावस्थितोऽवर्तत। आगरावासिनस्तमष्टादशहोरापर्यन्तमपि समाधिस्थमपश्यन्। आगरायां स्वामिप्रवरो भागवतपुराणस्य तीव्रालोचकः, महाभारतस्य च समीक्षकोऽवर्तत। विषये कस्मिंश्चित् संजातसन्देहं पत्रव्यवहारेण स्वयमुपस्थाप्य वा गुरुदरेण निवारणमकारयत्।

**वेदान्वेषणाय धौलपुरगमनम्–** वर्षद्वयम्-आगरा-स्थितो महर्षिवरः वेदानां विषये विचारणामैच्छत्। परमत्र वेदेष्वनुपलब्धेषु स तदन्वेषणाय धौलपुरं प्रति प्रस्थितः; पञ्चदशदिवसांश्च तत्रास्थाय-आबूपर्वतमागच्छत्।

**ग्वालियर-आगमनम्–** ग्वालियरसमागते स्वामिनि तत्रत्य नृपतिः जियाजीरावसिन्धियामहाभागेन-अष्टोत्तरशतभागवतपुराणपाठायोजनं समारब्धमासीत्। १९२२तमसंवत्सरस्य माघशुक्लनवमीतः प्रारभ्य माघपूर्णिमायामनुष्ठानसम्पूर्तिः सुनिश्चिताऽऽसीत्। भागवतसप्ताहार्थं सुदूरवर्तिनः पण्डितवर्या निमन्त्रिता आसन्। महाराजश्च स्वकर्मचारिभिर्भागवतसप्ताहमाहात्म्यविषये महर्षिमपृच्छत्। "नहि कष्टक्लेशमन्तरा-एतादृक् कार्याणां किञ्चिदपि फलं सम्भवति; अविश्वासश्चेदनुष्ठायानुभवन्तु" इति महर्षिः समुदतरत्। श्रुत्वैतन् महाराजः प्रहस्योवाच; वीतरागः संन्यासी च स्वामिप्रवरो यथेच्छं वक्तुं प्रभवति; परं गृहस्थिभिरस्माभिः सर्वमेवैवंविधमनुष्ठेयं भवति। अन्ततो यदामहाराजो भागवतकथायां स्वामिप्रवरं न्यमन्त्रयत्तदा महर्षिणा सन्दिष्टम्; "गायत्रीपुरश्चरणमनुष्ठेयम्, न वयं भागवतसप्ताहे सम्मिलिता भविष्यामः"इति।

समस्तराज्ये प्रहर्षसागरोल्लासः समुल्लसितः, नगरञ्च सर्वं स्वच्छम्, सुसिक्तम्, सुसज्जितञ्च कृतम्; काशीकालिकाताप्रभृतिस्थानीयाः, दाक्षिणात्याः, अन्यान्यस्थानीयाश्च शास्त्रिशिरोमणयो निमन्त्रिताः समागच्छन् पार्श्ववर्तिराज्यवर्तिनः सुप्रतिष्ठितसज्जनाः, राजानो राजबन्धुवर्गश्च स्वस्ववेषभूषायां नगरं शोभाभरितमकुर्वन्। समग्रराज्यविभूतयश्च तत्रैकत्रिताः। उत्तुङ्गराजप्रासादतः समारभ्य गोपपर्णकुटीराण्यप्युत्सवमयान्यासन्। बाह्याभ्यन्तरमापण-विपणिकं सर्वमेव भागवतकथाचर्चितमासीत्। ऋषिवरश्चापि रामकुईस्थाने भागवतालोचनप्रवचनानि प्रारभत। अभयपरमहंसस्य तस्य प्रवचनेष्वपि भूयान् जनसम्मर्दः

एकत्रितोऽभवत्। महर्षेरभयभावो नगरनिवासिनोऽप्यभयानकरोत्। सर्वेऽपि सोत्साहा भागवतालोचनं श्रुत्वा परमहंसप्रवरस्य प्रकथनसत्यतामङ्गीकृतवन्तः। स्वामिना प्रतिव्याख्यानं पण्डितप्रवराः शास्त्रार्थाय समाहूताः, विज्ञापनैश्चापि निमन्त्रिताः, परमेतावद्विख्यातविद्वत्स्वपि नहि कश्चित् तदभिमुखागमनस्य साहसमकरोत्। दुर्भाग्यवशाद् रामकुईस्थानं विशूचिकारोगकारणेन रुदनपरिदेवनपरं बभूव, अतो महर्षिस्ततः समुत्थाय बाबाजी महोदस्योपवनं जगाम।

**करौलीनगरे**— १८६५ईस्वीयवर्षस्य मई-मासान्ते ऋषिवरो ग्वालियरतः करौली राज्यं प्राप्तः। अत्रत्य महाराजेन सह तस्य धार्मिकवार्तालापः प्रवृत्तः। पण्डितैश्च सममपि शास्त्रालापः समजनि। अत्र हि स वेदाभ्यासे विशेषरुचिं व्यधत्त। कतिचिन्मासान् सोऽत्र न्यवसत्।

**जयपुरागमनम्**— करौलीतः प्रस्थाय १९२२तमसंवत्सरस्याश्विनमासे तदनु १८६५ तमे ईस्वीयवर्षे जयपुरं प्राप्य ऋषिवरः श्रीरामकुमारनन्दराममोदीमहाभागस्योपवने स्वीयासनमाससाद। तत्रैव जयपुराधिपश्रीरामसिंहेन जोधपुरतः समानीतः श्रीश्रवणनाथशिष्यो लक्ष्मणनाथोऽपि व्यराजत। स हि श्रीब्रजनन्दस्य मन्दिरे ऋषिवरेण सह सम्भाष्य ''सकलश्रुतिशास्त्रनिष्णातोऽयं योगिप्रवरः'' इत्यजानात् प्रार्थयच्च; भगवन्! साम्प्रदायिकजनैरस्माकमेकः शास्त्रार्थो भविता; अतोऽस्मत्साहाय्यार्थं श्रीमद्भिरत्रैव स्थातव्यमिति। ''शास्त्रार्थे मत्साहाय्यं भवन्तोऽभिलषन्ति चेत् स्वमन्तव्यानुरूपमेवाहं सर्वमभिधास्ये'' इति प्रत्युत्तरन्नृषिवरः स्वावासं परावृत्तः।

**व्याकरणे प्रश्नोत्तराणि**— जयपुरे व्याकरणसम्बन्धिप्रश्नान् विलिख्य स्वामिप्रवरः पण्डितजनान् सम्प्रैषयत्; प्रत्युत्तरणे पण्डितजना दुर्वचनप्रयोगमेव पर्याप्तममन्यन्त। ऋषिवरश्च तत्प्रेषितलेखतोऽष्टदोषानुद्धृत्य श्रीहरिश्चन्द्रप्रभृतिभद्रपुरुषान् तत् पत्रं प्रैषयत्। ते हि महर्षिपक्षं पोषयन्तः पण्डितानां दुर्व्यवहारं निन्दितवन्तः। पण्डितजनेभ्यः स्वामिवर्यप्रेषितप्रश्नेषु निम्नोद्धृतं प्रश्नद्वमप्यासीत्—१. ''कल्म किं भवति? २. येन कर्मणा सर्वे धातवः सकर्मका भवन्ति किं तत् कर्म? इति च।

एकदा सम्मिलिताः सर्वेऽपि पण्डितवर्याः श्रीव्यासबक्षीराममहोदयमुपगम्य ''येन केनाऽपि प्रकारेण दयानन्दस्वामिना सह भवन्तोऽस्मच्छास्त्रार्थं विनियुञ्जन्तु'' इति प्रार्थयन्। पण्डितजनप्रेरणया श्रीव्यासमहोदयेन महर्षिप्रवरः प्रासादे निमन्त्रितः। सर्वेषु पण्डितेष्वपि तत्रैकत्रितेषु तेषामेकः 'पञ्चदशप्रश्नान्-अष्टविधदोषांश्च विलिख्य भवानेवास्मान् सम्प्रैषयत्?'' इति महर्षिमपृच्छत्। स्वामिनः स्वीकृतौ पण्डितवर्यो यदा कल्मशब्दस्य व्याख्यामकरोत्; ऋषिवरस्तुरन्तं

तदखण्डयत्। विस्मिताः पण्डिताः परिप्रश्नेन स्वामिप्रवरमेव कल्मशब्दस्य व्याख्यामपृच्छन्। "सर्वमेव परस्परकथनप्रकथनं लेखबद्धं स्यादिति पणं पण्डिता नाङ्गीकृतवन्तः। ततः स्वामिप्रवरः सुयोग्यतया कल्मशब्दस्य व्याख्यानं व्यदधात्। प्रायो मौनेष्वपि पण्डितेष्वेको मैथिलपण्डितः साक्षेपमवदत्। "क्व लिखितोऽयमर्थः? इति। महाभाष्यानुरूपं मदर्थवर्णनमिति स्वामिवरेण प्रोक्ते पण्डितवर्य उवाच? नहि महाभाष्यं व्याकरणम्" इति। स्वामिप्रवरेण साश्चर्यं "नहि महाभाष्यं व्याकरणमिति" लिखितरूपेण प्रदातुं पण्डितवर्यो विवशीकृतः। परं स हि "विसृजतु भवान् साम्प्रतमिदं भूयान् रात्रिकालो व्यतीतः, भवताऽपि नगराद् बहिरुपवने गन्तव्यम्, अवरुद्धानि नगरद्वाराणि भविष्यन्ति, कष्टपरम्परा च भविष्यति" इति बहुव्याजपुरस्सरं निष्क्रान्तः। ऋषिवरोऽपि समुत्तिष्ठन्नुवाच "विलक्षणेयं सभा; यत्र महाभाष्यमपि व्याकरणं न मन्यते, विचित्रबुद्धिनिधानश्चायं पण्डितवर्यो यो महाभाष्यमपि व्याकरणं न स्वीकरोति"

**जैनमुनिर्मौनमभजत्**– जैनमुनिरपि कश्चित्स्वामिना सह शास्त्रार्थमैच्छत्। स्वामिना सन्दिष्टम् "स्वैरं समागच्छन्तु, वार्तालापकृते सादरं प्रस्तुतोऽहम्।" जैनमुनिरपि समदिशत्; क्वचिद्गमनेनास्मन्नियमेषु व्यावधानं सम्भवति; अतः असमर्थोऽहं तत्रागन्तुम्; कुतश्चिद्गतागतसम्मिलनं चेत् धर्मचर्चाप्रसंगोऽपि सम्भविष्यति। स्वामिना पुनरपि सन्दिष्टम्; "तादृक् सम्मिलनसमये यथोचितं निर्णेष्यावस्ततो यावत् पत्राचारेणैव वार्तालापः स्यात्" एवमुक्तवता-ऋषिवरेण पन्चदश प्रश्ना जैनमुनये सम्प्रेषिताः। जैनमुनिस्तत्प्रश्नोत्तराणि नावगच्छत्। परं स हि स्वमतानुसारं प्रश्नाष्टकं विलिख्य स्वामिनं प्रेषयामास। स्वप्रश्नानां तुरन्तं युक्तियुक्तानि च समुत्तराणि सम्प्राप्य जैनमुनिर्मौनधारणमेव श्रेयोऽमन्यत।

सत्संगरुचिः, सत्साधुजनेषु श्रद्धाशीलः, अचरौलप्रशासकः ठाकुररणजीतसिंहो मित्रस्यैकस्य मुखेन महर्षेः प्रशंसां संश्रुत्य तस्य पुण्यदर्शनार्थं जयपुरं गतः, अचरौलनगरं च समागन्तुमृषिवरं प्रार्थयत्। वृषभशकटिमप्येकां सः महर्षिं समानेतुं सम्प्रैषयत्; परमृषिवरः पद्भ्यामेव तत्र सम्प्राप्तः। स्वामिनः सत्संगेन ठाकुरमहोदयोऽतिलाभान्वितोऽभूत्। तस्य हृदयग्रन्थय उन्मुक्ताः; भ्रान्तयो विनष्टाः; संशयाश्च विनिवृत्ताः; सद्ज्ञानमार्गोपलब्धिश्च समभवत्; मूर्तिपूजायामास्था च परिसमाप्ता। प्रारम्भिकदिनचतुष्टयं राजमन्दिरे ह्येव स्वामिप्रवरो व्यराजत। परमेकान्तवासिनस्तस्य विरक्तपरिव्राजकस्यादेशेन तत्कृते ठाकुरमहोदयः एकान्तप्रदेशे स्वच्छं पर्णकुटीरमेकं निरमापयत्। तत्र च ठाकुरमहोदयेन सहान्येऽप्यनेक सत्सङ्गिनो जनाः प्रतिदिनं महर्षिमुपातिष्ठन्। ऋषिवरश्च तान् मनुस्मृतिगीतोपनिषदादिग्रन्थानां विविधप्रकरणानि प्रवाचयन् कृतार्थनकरोत्। विद्यार्थिनोऽपि बहवो महर्षिमुपगम्य ब्रह्मचर्यव्रताद्युपदेशमगृह्णन्।

एकदा ठाकुरमहोदयस्य कार्यकर्ता श्रीहीरालालकायस्थः सुरापानमत्तो महर्षिपर्णकुटीरसमीपस्थमार्गेण गच्छन् ''ठाकुरमहोदयेन संपूजितोऽयं मुनिवरः'' इति च ध्यायन् तत्पुण्यदर्शनार्थं गतः कृताभिवादनश्च विनीतभावेन भक्तश्रेणीषूपविष्टो धर्मोपदेशमशृणोत्। महर्षेः कथायाञ्च तदा मनुस्मृतेः प्रायश्चित्ताध्यायः प्रवृत्तः; यस्मिन् गोवधस्वर्णस्त्येयसुरापानादिपातकानां भ॥वनिग्रहात्मकं प्रतिफलमुपवर्णितमासीत्। महर्षेरतिप्रभावपूर्णं तत्प्रवचनं संश्रुत्य हीरालालः पापभयप्रकम्पितहृदयो रोमाञ्चितः पूर्वकृतकर्मसु पश्चात्तापाश्रूणि विमुञ्चन्-अवशिष्टजीवने स्वदुराचरणपरित्यागस्य दृढव्रतमकरोत्। ततः प्रभृति स सायन्तनभ्रमण-अवसरे प्रतिदिनमेव ऋषिवरमुपातिष्ठत्। स्वामिमहाभागश्च चतुर्मासं यावत्तत्र स्थितः प्रतिदिनं गीतोपनिषदां प्रवचनानि प्रकुर्वन् प्रतिमापूजनञ्च विखण्डयनन्तरात्मन्येव ध्यानस्थितिं प्राशिक्षत। भागवतखण्डने च तत्र स पत्रमप्येकं मुद्रापयत्।

**शैववैष्णवशास्त्रार्थसमरे प्रयाणम्**— जयपुरे तेषु दिवसेषु शैववैष्णवानां विवादः प्रचलितः। महाराजरामसिंहः शैववैष्णवमतानुयायिनोः शास्त्रार्थस्य व्यवस्थामकरोत्। सम्प्रदायद्वयस्य सन्तमहन्तप्रवराः पण्डितवर्याश्च तत्र (जयपुरे) एकत्रिता अभूवन्। शैवसम्प्रदायसेनानी श्रीलक्ष्मणनाथः शास्त्रार्थसमरस्य सूत्रधार आसीत्। तस्मिन् स्थिते प्रबला अपि शैवमतानुयायिनो व्यासबक्षीरामप्रभृतयः शैवपण्डिताः स्वविजयं विनिश्चितुं महर्षिदयानन्दमस्य साम्प्रदायिकसंग्रामस्य सेनापतिं विधातुमैच्छन्। महर्षिदयानन्दो वैष्णवप्राचार्यप्रवरैः सह शास्त्रार्थसंग्रामे समवातरत्। वैष्णवसम्प्रदायस्य पण्डितप्रवरः श्रीहरिश्चन्द्रः प्रतिपक्षिरूपेणावर्तत। ''वैष्णवसम्प्रदायो नवीनः, काल्पनिकः, निर्मूलः, आचारविचारशून्यश्चेति'' महर्षिणा स्थापनीयमासीत्। ऋषिवरो वैष्णवसम्प्रदायपुस्तकानामुद्धरणानि प्रस्तुत्य सम्प्रदायस्यास्य समालोचनामकरोत्। तदैकतो वैष्णवाः पराजयेन लज्जाभिभूता अभूवन्; अपरतश्च शैवशिविरे हर्षोल्लासपारावारः प्रवृद्धः। शैवमतविजयेन प्रभाविता लोकाः संघशः शैवमतमगृह्णन्। रुद्राक्षमाला कण्ठीस्थाने विभूषिताः। महाराज-रामसिंहोऽपि शैवसम्प्रदायमङ्गीकृतवान्। राजकीयाश्वानां गजानां च ग्रीवा अपि रुद्राक्षमालाभिर्विभूषिता अभूवन्।

वैष्णवसम्प्रदायदिग्गजस्य पराजयेन दशस्वपि दिक्षु स्वामिनः कीर्तिचन्द्रिका प्रकाशिता। पण्डितवर्गश्च तस्य पाण्डित्येन प्रभावितः। एवं सार्धमासचतुष्टयमृषिवरो जयपुरे न्यवसत्। पाठकैः स्मर्तव्यंयत् स्वामिमहाभागो वैष्णवसम्प्रदायं पराजित्य शैवमतस्य स्थापनामकरोत्। इतो यावत् स स्वयमपि रुद्राक्षमालां भस्मचयञ्च समधारयत्; परं न स प्रतिमापूजनसमर्थनमकरोत्। नात्र किमप्युपलब्धसाक्ष्यं यत्तस्य शिवप्रतिमापूजनं प्रमाणयेत्। कतिमासान् यावत् शिवमन्दिरेषु

स्थितोऽपि स न क्वचित्-शिवलिङ्गोपरि जलसेचनं व्यधात्; न चापि दण्डवत् स्थितो मस्तकमनमत्। तदापि स केवलं श्रुतिज्ञाननिर्भरो ह्येव स्वभक्तजनान् सन्ध्यां गायत्रीञ्चैवोपादिशत्।

**पुष्करमहामेलके प्रयाणम्**— जयपुरतः प्रस्थाय दूदू-किशनगढ़प्रभृति-स्थानेषु परिभ्रमन्नृषिवरः १९२२तमसंवत्सरस्य चैत्रकृष्णैकादश्यां पुष्करं सम्प्राप्तः तत्र च ब्रह्मणो मन्दिरे स्वीयासनं संस्थाप्य प्रस्तरादिप्रतिमापूजनस्य प्रबलखण्डनमकरोत्। उत्तेजिता बहवो ब्राह्मणा शास्त्रार्थकृते तमनुप्राप्ताः; परं तत्र गता न केऽपि स्वामिना सह विवदितुं साहसमकुर्वन्। तदा ते श्रीव्यंकट-शास्त्रिणं शास्त्रार्थकृते प्रार्थयन्। व्यंकटशास्त्रिणा पूर्वं स्वीकृत्यापि पश्चात् शास्त्रार्थकृते निषिद्धम्। तदा स्वामिमहाभागः स्वयमेव व्यंकटशास्त्रिणमुपागच्छत्। तदानीं त्रिचतुःशतब्राह्मणास्तत्रैकत्रिता आसन्। भागवतपुराणञ्च वादविवाद-विषयो विनिश्चितः। शास्त्रिमहोदयो भागवतस्य मण्डनमकरोत्, परं स्वामिप्रवरः प्रबलतमयुक्तिप्रमाणैस्तथा भागवतस्य खण्डनमकरोत्; यत् परिणामे व्यंकटशास्त्रि-महोदयो भागवतविषयतोऽपसरणमेव श्रेयोऽमन्यत्। तदा हि स शब्दस्यैकस्य शुद्धाशुद्धौ विवादमकरोत्। स्वामिमहाभागस्तं शब्दं दैवासुरः शास्त्रिमहोदयश्च 'देवासुरः' इत्यकथयत्। अन्ततः "विशिष्टो विद्वान्नृषिवरः" इति ब्रुवन् स स्वामिनः पक्षमेवाङ्गीकृतवान्। शास्त्रिणा सह व्याकरणविषयेऽपि विवादं कुर्वन् स्वामिप्रवरो विजयश्रियमलभत।

शास्त्रिवरो महर्षेर्ज्ञानं तर्कशक्तिञ्च बहुशः प्रशंसन् निजाघोरी (स्पृश्यास्पृश्य-भक्ष्याभक्ष्यादिनिरपेक्षी) गुरुणा सहापि स्वामिनः साक्षात्कारमकारयत्। अघोरीगुरु-श्चातीवहृष्टपुष्टः प्रलम्बप्रसृताकार आसीत्। स हि स्वपार्श्वसमागतान् प्रस्तरखण्डैः प्राहरत्, दुर्वचनानि च प्रावदत्। चितासञ्चितमृतकदेहांश्चाभक्षयत् परं संस्कृत-भाषायाः प्रबुद्धप्रज्ञाता आसीत्। योगिदयानन्दश्चिरं तेन सह संलापमकरोत्। संलापान्ते च स सर्वाभिमुखं संस्कृतभाषायामवदत्; "पूर्णतः सत्यं दयानन्दस्य कथनं नानेन सह विवादो व्यर्थकलहश्च कर्तव्यः" इति। तानेव शब्दान् श्रीव्यंकटशास्त्री सर्वोपस्थितजनान् संश्रावयन्नार्यभाषायामकथयत्। "पूर्णतः सत्याश्रितो दयानन्दस्य स्वामिनः पक्षः, अतो नानेन सह विवादो व्यर्थकलहश्च कर्तव्यः" इति। श्रुत्वैतदुदासीनः सर्वोऽपि ब्राह्मणवर्गस्ततोऽगच्छत्। तस्मिन्नेव स्वल्पसम्मिलने श्रीव्यंकटशास्त्रिणः स्वामिमहाभागेन सहैतावान् सख्यभावः सम्पन्नः यत्स स्वामिनमवदत् "यदा कदापि शास्त्रार्थप्रसंगे मत्साहाय्यमपेक्षितं भवेत्, भवदादेशेनाविलम्बमुपस्थास्यामीति।

पुष्करमेलकसमारोहेऽतितरामुत्साहप्रसारः। स्वामिमहाभागश्चापि प्रबलवेगेन

कुरीतिविखण्डने प्रवृत्तो येन च सम्पूर्णमेलकेऽतीवासमञ्जसभावप्रसारः। दयानन्द-वाग्वायुवेगैरतितरां विक्षुब्धः साम्प्रदायिकसागरः संशयतरंगतरंगायितोऽभवत्। तस्योपदेशवचनैः प्रभावितो लोकवर्गः कण्ठीजालमुत्तार्य ब्रह्मणो मन्दिरस्य पार्श्वे स्थिरनिचयमकरोत्। धर्मवित्रस्तो ब्राह्मणवर्गः पुनरपि व्यंकटशास्त्रिणमुपागच्छत्। परं सोऽपि प्रत्यवदत् "निरर्थको विवादः, स हि सत्यमेव सर्वं प्रब्रवीति, परं राज्याश्रयेणैव तस्य सत्यप्रवाहः प्रचलिष्यति" इति।

एकदा स्वामिप्रवरो नानूरामनामधेयं प्रतिष्ठितपण्डितमेकं ग्रीवागृहीतकण्ठीमभिलक्ष्य "पण्डितवर्य्य! किमनेन गलेसन्धारितावैदिकचिह्नेन लाभः? परिहरतु भवानवैदिकं धर्मलिङ्गमिदम्" इति प्रोवाच। तेनोत्तरितम्— "यदि युष्मासु न कोऽप्यब्राह्मणः संन्यासदीक्षां व्रजेत्साम्प्रतमेवाहं कण्ठीं परित्यज्य प्रक्षिपामि" श्रुत्वैतत् खिन्नः स्वामिप्रवरोऽवदत्—किमहं कर्तुं प्रभवेयम्; सर्वोऽप्याकाशस्तिमिराच्छन्नः; मम सुस्थिरसम्मतौ च न कोऽपि विद्वद्ब्राह्मणेतरः संन्यासदीक्षाग्रहणेऽधिकृतः।

ब्रह्मणो मन्दिरस्य महन्तो भद्रपुरुषः श्रीमानपुरीमहाभागः प्रथमवारं यदा मूर्तिभोगानन्तरं तत्पयः स्वामिने पातुं समर्पयत्तदा "नाहं प्रस्तरपूजोच्छिष्टं पयः पातुं समीहे" इति ब्रुवता स्वामिना तदस्वीकृतम्। अनेन रुष्टः श्रीमानपुरी पुनर्दुग्धप्रदानमवारयत्, परं सत्यविवेचनेन सत्वरमेव सन्तुष्टः श्रीमानपुरी स्वामिप्रवरस्य सहायकः परमसुहृच्च सम्पन्नः। यदाकदा हास्यविनोदप्रसंगे स्वामिमहाभागः पुरीमहोदयमकथयत् "पुरीमहाभागाः! सार्धद्वयमनमितामूर्तिरियं भवता पारसमणिरूपेण सम्प्राप्ता, अतोऽनेन (पारसमणिना) यथेच्छं स्वर्णसिद्धिं विधाय साधुसंन्यासिनां मोदकादिसमर्पणेन समर्चना विधेया; नास्य धनस्य धूर्तभाण्डजनानां कृते कुत्सितोऽपव्ययः कर्तव्यः" इति। बलशाली सुदृढांगश्च महन्तो मानपुरी स्वामिप्रवराणां साहाय्यार्थं सदैव सन्नद्धोऽवर्तत।

एकदा शास्त्रार्थकृते संघशः स्थिता बहवो ब्राह्मणाः स्वामिनं समाह्वयन्; सदैव सन्नद्धः स्वामिप्रवरः सत्वरमेव तत्र प्रयातः। अचिरमेवास्तव्यस्ताः पण्डितप्रवराः शास्त्रार्थे निग्रहस्थानं गता न किमपि प्रभाषितुमशक्नुवन्। एतदन्तरैव केचन दण्डधरा धूर्तजनास्तत्र समागत्य स्वामिनमवाच्यवादानब्रुवन्। संघर्षं संयोजयत्स्वेव तेषु श्रीमानपुरी तत्र समागत्य सर्वांस्तान् निर्भर्त्सयन् निरगमयत्। तदैव शतशो जनैः स्वकण्ठतः कण्ठीः समुत्तार्य पुष्करसरोवरे प्रक्षिताः।

रामानुजानुयायिनोऽपि स्वामिना शास्त्रार्थकृते समाहूताः, परं नहि ते साहसमयुञ्जन्। ऋषिवरश्च रामानुजसम्प्रदायिनां भ्रममूलकविचारान् विखण्डयन्नकथयत्– "तप्ततनुः स्वर्गं गच्छति" इति श्लोकमेव न समीचीनं, मन्तव्यमपिचेत्

"शम-दम-जप-तपःस्वाध्यायादितपश्चर्याभिः प्रतप्तः (परिशुद्धः, तेजः-पुञ्जभूतः) स्वर्गं गच्छति (सुखातिशयं प्राप्नोति) इति तस्य समीचीनार्थो भवितव्यः। तप्तशब्दस्य बह्निदग्ध इत्यर्थो भ्रान्तिमूलक एव।

पण्डाभिधेयस्तीर्थध्वांक्षः कश्चित्समागत्य "संन्यासिनां पुरोहितोऽहम्, पूर्वमपि कतिपयसंन्यासिनः श्लोकानिं निर्माय मह्यमदुः; भवतापि प्रदेयानि श्लोकानि कानिचित्" इति स्वामिनमुवाच। प्रहस्य ऋषिवरः "अरे! त्वमस्माकमपि पौरोहित्यमभिवाञ्छसि? इति ब्रुवन् स्वनिर्मितश्लोकप्रदानस्थाने तस्मै सद्धर्मोपदेशं प्रादात्, येन च स स्वकण्ठीमवतार्य प्राक्षिपत्। तेष्वेव दिवसेषु कश्चिद् द्रविड़संन्यासी चन्द्रघाटस्थानं सम्प्राप्य विरराज। स हि पुराणकथाः कारयन् ब्रह्मभोजान् समायोजयत्। तेन सह शास्त्रार्थं संयोजयितुं द्विशतब्राह्मणास्तत्र स्वामिमहाभागं समानयन्, परं द्रविड़संन्यासी सम्मुखं नापतत्।

श्रीशिवदयालनामधेयः पूजारिः कश्चिद् ब्रह्माणमपूजयत्। पूजावसरे दुन्दुभताडनझांझवादनादिपूजाप्रक्रियासु च "शिवदयाल! किं कदाचिदयं देवस्ते त्वया सह संवदते? को लाभश्चर्मताडनेन, धातुशकलवादनेन च"इत्यादि-विविधप्रश्नैर्हास्यवचनैश्च ऋषिवरस्तमुद्बोधयन्नुपादिशत्। प्रभोर्नामधेयं पृच्छन्तं तं स्वामिप्रवरः "सच्चिदानन्दः" इति नाम तद् विवरणञ्च प्रादात्। स्वामिन उपदेशेन स कण्ठीम्, प्रतिमापूजनम्, प्रतिघाटं याचनादिपण्डावृत्तिमप्यत्यजत्।

एकदा वृद्धा काचिद् ब्रह्मणो मन्दिरे प्रतिमापूजनं विधाय परावर्तयन्ती स्वामिनो दर्शनार्थमुपागता। "कुतः समागच्छसि मातः?" इति स्वामिना पृष्टे "ब्रह्मणो दर्शनपूजनं विधाय निवृत्ताऽस्मि" इति सा प्रत्यवदत्। "ब्रह्मदेवः सदुपदेशं किमपि प्रादात्?" इति पुनः पृष्टे वृद्धयोक्तम्, आम्, वितरित उपदेशः" इति शृण्वन्नेव स्वामिप्रवर आसनादुत्थाय वृद्धया समं ब्रह्मणो मन्दिरमुपस्थाय वृद्धामुवाच; मातः! मत्सन्मुखमुपदेशप्रवचनाय मूर्तिं प्रार्थय। प्रहसन्ती वृद्धा प्रोवाच; महायशः स्वामिवर्य! भवदभिमुखं जीवन्तोऽपि सर्वे विद्वांसो मौनं भजन्ते किं पुनरियं जडप्रतिमा; यश्च किञ्चित् प्रवदति स हि भवत्पृष्ठतो-ह्येव वक्तुमुत्सहते।

श्रेष्ठिवरः कश्चिदेकदा मन्दिरनिर्माणाय स्वामिनं सम्मतिमयाचत। स्वामिमहाभागो गम्भीरभावेन समुदतरत्; श्रेष्ठिवर्य! स्वपरसर्वकल्याणकरे-अन्यस्मिन् कस्मिंश्चिद् धर्मकार्ये धनव्ययं कुरु, किमनेन जडपूजास्थानविस्तारेण। स्वामिनः सत्परामर्शेण स मन्दिरनिर्माणकार्यमत्यजत्। ऋषिवरः प्रायोऽब्रवीद् वस्तुतो विभिन्नाचार्यप्रवराणां नामतः प्रचलितानि स्तोत्राण्येतानि स्वार्थान्ध-पण्डितजनैस्तेषां नामभिर्विख्यापितानि; भागवतोऽपि नहि व्यासकृतोऽपितु

बोपदेवेन विरचितः। स हि पुरोहितपण्डादीन् परामर्शयत्; सद्धर्मप्रचारप्रसाराय लेशतोऽपि नहि वृत्तिहानिर्विचारणीया; सद्धर्मसंरक्षितुः सर्वेश्वरस्य प्रसादेन मधुकरीक्षीरादिप्रारब्धजन्यसुखभोगाः सद्धर्मप्रचारक्षेत्रेऽपि बाहुल्येन समुपलप्स्यन्ते। अत्रैव दुराग्रहग्रस्तेन रङ्गाचार्यशिष्येणाऽपि केनचित् स्वामिप्रवरेण सह गीतायाः श्लोक एकस्मिन् वार्तालापः कृतः परं दुराग्रहकारणात् स हि कमपि सदुपदेशलाभं लब्धुं न प्राभवत्। एवं महर्षेः क्षमासन्तोषशान्तिसरलतादिसद्गुणानां सर्वैरेव सत्साधुभिर्यशोगानं कृतम्। तस्य विद्वत्तायाः प्रभावश्च सकलोऽपि सुधिवर्गः सममन्यत। अस्य देवपुरुषस्य विजयनाददुन्दुभिश्च पुष्करतो मरुभूमिं यावत् सुदूरप्रदेशेष्वपि गुञ्जायामानाऽभवत्। अनेकैः भद्रपुरुषैः स्वामिमहाभागः स्वस्व-नगरेषु ससम्मानं निमन्त्रितः।

**अजमेरनगरेऽवस्थानम्—** द्वाविंशतिदिनानि पुष्करप्रवासं विधाय ऋषिवरः अजमेरनगरमभिप्राप्तस्तत्र श्रीवंशीलालमहोदयस्योपवने विरराज। सत्वरमेव सर्वस्मिन् नगरे "मूर्तिपूजनादिविषये शंकासमाधानप्राप्तये समागन्तव्यम्" इति विषयकाणि विज्ञापनपत्राणि भित्तिसंलग्नीकृतानि। केचनेतस्ततो विषयकं वार्तालापमकुर्वन् परं नहि कश्चिदभिमुखमायातः। अजमेरस्थितौ स्वामिप्रवरस्य पादरी राबिन्सन—ग्रे—शूलब्रेडप्रभृतिभिः सह वेद-सृष्टिक्रम-जीवादिविषयेषु दिनत्रयं संवादः प्रचलितः। चत्वारो दिवसाः, ईसा-महाभागस्येश्वरत्वम्, मरणान्तरपुनर्जीवनम्, गगनारोहणम्, आदिविषयेषु-ऋषिवरेण विहितप्रश्नानां पादरीमहाशयाः किमपि समाधानं कर्तुं नाशक्नुवन्। पादरीजनानां मौनभावे करतालं ददतो बालकाः स्वामिना प्रतिषिद्धाः। शास्त्रार्थप्रसंगे पादरीजनाः तथाकथितं वेदमन्त्रमेकं निर्दिशन्तः किमपि पाठमपठन्; परमुद्धरण-संकेतं पृष्टा निरुत्तरा बभूवुः। पुनरागामिनि दिवसे ते न समायाताः। ततः केन-चिदाक्षेपेणाप्रसन्नः पादरीशूलब्रेडमहाभागः स्वामिनमुवाच "एवं निर्बाधं वदन्तो भवन्तः कदाचित् कारागारं सेविष्यन्ते" इति। गम्भीरभावेन प्रहसन् परिव्राजक-प्रवरोऽवदत् "सत्यप्रचारप्रसारार्थं कारावासगमनमपि नैव लज्जास्पदम्, धर्मपथारुढोऽहमेतादृग्विषयेषु पूर्णतोऽभयमात्मानमनुभवामि; प्रतिपक्षिणः षड्यन्त्रपरा यदि स्वप्रभावेण विपज्जालमपि निपातयिष्यन्ति तां क्लेशपरम्परामपि स्वस्थचेतसा सहमानोऽहं तेषां कृते मंगलकामनां कामयमानो ह्येव स्थास्यामि" पादरीमहोदय! नाहं लोकभयप्रदर्शनात् सत्यकथनं परित्यक्तुं शक्नोमि; महाभाग ईसा अपि लोकैः शूलमारोपितो ह्येव।

एकदा मुख्यपादरीराबिन्सनमहोदयेनामन्त्रित ऋषिवरो यदा तं सम्मिलितुमगात्; तदा शिष्टाचारानन्तरं पादरीमहोदयोऽपृच्छत् ब्रह्मदेवः स्वसुतया बलात्कारमकरोत्" किमस्य समाधानं भवान् प्रस्तौति? मुनिवरस्तुरन्तं

समुदतरत् "आलंकारिकोऽयं प्रसंगो वेदेभ्योऽधिकृत्य पुराणेषु मानवीकरणेन प्रस्तुत:; वस्तुतो नैष भौतिको बलात्कारोऽपितु राष्ट्राध्यक्षस्य स्वीयाधीनसमितिभ्यो बलात् स्वेच्छाचारानुवर्तनानुष्ठानम्, तदेव पुराणेषु मानवीकरणेन वर्णित आलंकारिकप्रसंग:"। अथवा ब्रह्मा नामधेय: कश्चिदृषिवरोऽपि कल्प्यते चेत्तदाऽप्यनेके जना: समाननामधारिणो भवन्ति; नात्र किमपि प्रमाणं यदृषिर्ब्रह्मैव एवंविधकुकृत्यमन्वतिष्ठदिति, महर्षिर्ब्रह्मा ह्यतीवाचारशुचिरवर्तत। स्वामिन: प्रकथनेन पादरीमहोदयोऽतितरां सन्तुष्ट: स्वहस्तलिखितं प्रमाणपत्रमप्येकं प्रादात्। "स्वामी दयानन्द: सरस्वती विशिष्टो वैदिकविद्वान्, नाहमनेन सममन्यं वैद्रिक-विद्वांसमाजीवनमपश्यम्; विरला ह्येव भुवि-एतादृशा देवपुरुषा:, सर्वोऽप्यस्य सम्पर्केण सद्धर्मलाभमेवार्जयिष्यति; अत: सर्वैरेवानेन सह ससम्मानमाचरणी-यम्" इति।

**कर्नलब्रुकमहोदयेन सह गोरक्षाविषये वार्तालाप:**— प्रधानाङ्गलशासक-(वायसराय) महाभागस्य सहकर्मी कर्नलब्रुकमहोदयो गैरिकवस्त्रधारिभिरति-तरामुद्वेगपर आसीत्। स कदाचित् श्रीवंशीलालस्योद्यानं प्राप्त: स्वामिनं निरीक्ष्य शिरो वस्त्रमुत्तार्य सम्मानं प्रदर्शयन् तदभिमुखं प्रयात:। परस्परसम्मानप्रदर्शनान-न्तरमुभावेव परस्पराभिमुखं वृसीस्थितौ चिरं वार्तालापमकुरुताम्। स्वामिन: सम्भाषणेन प्रभावित: शासकसहकर्मिमहोदयोऽन्यस्मिन् दिने मुनिवरं स्वभवने समामन्त्रयत्। तत्प्रेषितयानमारुह्य स्वामिप्रवर: सेवकरामस्वरूपेण सह तद् भवनं जगाम। पादोनहोरां यावद् गोरक्षाविषये वार्तालाप: प्रावर्तत। यदा कर्नलमहोदयो गोरक्षाया लाभान् गोहत्याया हानीश्च सुतरामङ्गीकृतवान्, तदा स्वामिप्रवरस्त-मनुरुरोध "गोरक्षाविषयो भवताऽभिमतोऽतो भवता स्वप्रयत्नेन गोहत्यायां प्रतिबन्ध: प्रवर्तनीय:" इति। कर्नलमहोदयो न्यवेदयत्; महाभागा:! गोहत्याप्रतिबन्धो न मदधिकारक्षेत्रे समापतति परमहं पत्रमेकं भवते प्रयच्छामि, येन च भवान् प्रधानशासनाधिकारिणं सम्मिलितुं प्रभविष्यति। पत्रञ्चावलोक्यान्येऽपि राजकर्मचारिण: ससम्मानं भवन्तं मिलिष्यन्ति।" पत्रमादाय ऋषिवर: स्वावासं परावर्तत। कर्नलब्रुकमहोदयो जयपुराधीशमपि पत्रमेकमलिखत् "स्वनगरे समागतेनाप्येकेनापूर्वपण्डितेन सह भवता संलापो नानुष्ठित इति खेदमयो विषय:"। पत्रमवलोक्यातिपश्चातापपरो महाराज: स्वामिन: पुण्यदर्शनार्थमतीव प्रयत्नशीलोऽभवत्।

**महात्मद्वयस्याहं परीक्षणम्**—एकदा श्यामलवर्णौ युवकतपस्विनौ द्वौ स्वामिमहाभागं सम्मिलितुमागच्छताम्। ससम्मानं स्वामिप्रवरस्तावुभावुपावेशयत्। संस्कृतं विहाय नेतरभाषायां तौ हि वार्तालापमकुरुताम्। किञ्चित्समयं योगचर्चां चर्चन्तौ प्रचलनपरौ चावदताम्। ऋषिवर! "पूर्णपरितृप्तौ पूर्णप्रशान्तौ चावाम्"

इति। प्रहस्य ऋषिवरोऽवदत्; महात्मवर्य्यौ! साम्प्रतमपि भवतोरहं (कार-) विजयोऽवशिष्टः; अतो न पूर्णतृप्तिः प्रशान्तिश्च। सर्वथा हि जित आवाभ्यामहंकार इति तौ प्रावदताम्। गृहाभ्यन्तरान्निर्गतयोरेव तपस्विनोरुभयोः स्वामिनः संकेतेन केनचिद् ब्रह्मचारिणा ताभ्यां सह कलहः समारब्धः। कलहोऽयमेतावान् प्रवृद्धो यद् ब्रह्मचारी तपस्विद्वयञ्च परस्परं हस्ताहस्ति केशाकेशि भवन्तो देहेनान्योऽन्यस्मिन् गुम्फन्तश्चेतरेतरं धरणीसात् कर्तुं प्रायतन्त। कोलाहलं संश्रुत्य स्वामिना सहिताः सर्वेऽप्याभ्यन्तरस्थिता लोकाः बहिरागच्छन्। तांश्च पृथक्शश्चक्रुः। स्वामिमहाभागश्च ततस्तौ तपस्विनौ-आभ्यन्तरं समानीय-उदबोधयत्; उक्तमासीन्मया परं न भवद्भ्यामङ्गीकृतम्; परीक्षणेन सिद्धं यन्न भवतोरहंभावः प्रशान्तः। मुनिभिर्विशेषतोऽभ्यासिभिश्चाभिमानं सर्वथा परिहरणीयम्। उभावेव तपस्विनौ क्षमां याचमानौ ''नमो नारायण'' शब्देनाभिवादयन्तौ निर्गतौ; वारद्वयं तौ स्वामिनः पुण्यदर्शनार्थं समागतौ।

**रामस्नेहिनः शास्त्रार्थस्थलतोऽभिद्रुताः—** दिवसेष्वेतेषु-अजमेरनगरे रामस्नेहिसम्प्रदायिनां मुख्यमहन्तोऽभ्यागच्छत्। स्वामिप्रवरेण शास्त्रार्थकृते तेषां समाह्वानं कृतम्। तैरुक्तम् ''नास्माकं सह भवता शास्त्रार्थसम्भवः; यतो न वयं कस्यचिदपि स्थानमभिगच्छामः, अस्मत्स्थानं चेत् कश्चिदन्यः समागच्छेन्न चापि वयं स्वोच्चासनादुत्थाय तस्याभ्युत्थानादिसम्मानं कुर्मः।'' परिज्ञायेदं स्वामिप्रवरेण सन्दिष्टम्; नाहमभ्युत्थानं सम्मानं वा कामये। ससुखमचलभावेन स्वोच्चासने स्थिता ह्येव भवन्तः शास्त्रार्थं कुर्युः। यदा हि महन्तमहोदयः पर्यजानात्, ''मानसम्माननिरपेक्षोऽयं साधुवरः शास्त्रार्थकृते समागन्तुमुत्सुक एव'' तदा स प्रगटशब्देषु न्यषेधीत्। ''भगवन्! वयं हि रामरामेति जपन्तः ससुखं सम्प्राप्तभोजनादिकमनुष्ठाय समयमतिवाहयामः, न वयं शास्त्रार्थविषये किमपि जानीमः'' इति। तदा हि रामस्नेहिसम्प्रदायविषये कतिपयप्रश्नान् विलिख्य ऋषिवरो महन्तमहोदयं सम्प्रैषयत्, ''आगामिनि श्वः प्रत्युत्तरं प्रदास्यामः'' इत्यभिधाय महन्तमहोदयः पत्रमरक्षत्; परमन्यस्मिन् दिने प्रत्यूषे ह्येव स हि स्वसाजसम्भारं समानीय प्रयातः।

**न स्त्रीजनानुपदिशामः—** एकदा महिलानां वर्गः स्वामिनमुपागच्छत्। ''कुतः समागता मातरः?''इति स्वामिना पृष्टास्ता ऊचुः; ''साधुजनानुपास्य समागताः स्मः'' इति। ''किमर्थमत्रभवत्यो भवत्यस्तत्र प्राप्ता आसन्?'' ''आदिष्टाश्चेद् भवन्तमुपस्थास्यामः'' इति ताभिरुत्तरितम्। ''किमर्थमिति प्रश्ने—उपदेशार्थमिति प्रत्युत्तरे च ऋषिवरः प्रोवाच– सदुपदेशो ह्येवापेक्षितश्चेद् भवतीभिः स्वपतिमहोदया अस्मानुपस्थातव्याः, ते हि सदुपदेशं गृह्णन्तो युष्मानप्युपदेक्ष्यन्ति, न वयं स्त्रीजनानुपदिशामः'' इति। श्रुत्वैतत्ताः परावृत्ता न च

पुनरायाताः। अत्रापि बहवो जनाः कंठीः समवतार्य प्राक्षिपन्। सावरस्थानीयः ठाकुरमहोदयश्चापि सदुपदेशं संश्रुत्य सुप्रभावितः सन् परावर्तितः।

**एकाकी भवन्नपि पर्याप्तः (प्रपूर्णः)**– स्वामिनः कतिचिद् भक्तजनास्तम्-अजमेरतः किसनगढस्थानं समानीय सुखसागरतीरे प्रावासयन्। अत्रत्यः सुयोग्य-पण्डितवर्यः श्रीकृष्णबल्लभजोशी श्रीमहेशदास ओसवालश्च मुनिवरस्य परमसुहृदौ संवृत्तौ। महेशदासश्च स्वामिनः सम्मानपूर्णमातिथ्यमप्यकरोत्। किशनगढनरेशश्च बल्लभकुलसेवकोऽवर्तत। स हि स्वामिमहाभागं भागवतस्य तीव्रालोचकं संश्रुत्य तस्य प्रचारकार्ये व्यवधानं कर्तुमनेकपण्डितवर्यैः सह ठाकुरगोपालसिंहमपि प्राहिणोत्। ऋषिवरो मानवान्तर्मर्मज्ञदृशा तेषां भावानभ्यजानात्। शौचस्नानादितो निवृत्य विभूतिसिक्ततनुः स एकस्मिन् काष्ठासने विरराज, तं च मानवमण्डलं तत्रागमनकारणमपृच्छत्। तदैव कश्चिद् ब्राह्मणः कतिचित्पत्राणि समादाय इतस्ततः कृत्वा स्वामिनोऽभिमुखं समस्थापयत्। "स्वयमेव पटतु भवान्" इति महर्षिणा सन्दिष्टे सोऽपठत्। "बल्लभसम्प्रदाय एव श्रेयान् सर्वोत्तमश्चेति" श्रुत्वैतदृषिवर-स्तस्य खण्डनमकरोत्। सयुक्तिप्रमाणप्रत्युत्तरानभिज्ञास्ते संघर्षपरायणा अभूवन्। स्वकाष्ठासनादुत्थाय स्वामिमहाभागेनोक्तम्—एकाकिनं मामभिज्ञाय नाग्रे सरणीयम्; केवलोऽप्यहं सर्वेषामेव युष्माकं मानमर्दने समर्थः। शास्त्रार्थे शस्त्रार्थे वा-उभय-त्रैवाहं सन्नद्धः; सुसज्जितश्च युष्मन्मानमर्दनाय, इति तदैव श्रीमालीवंशीयत्रिंशत् चत्वारिंशत् संख्यामिताश्च ब्राह्मणा ऋषिवरस्य साहाय्यार्थमुपस्थिताः। ते च कलह-प्रियास्तान् दृष्ट्वैव परास्ताः।

किशनगढतो दूदू-बागरुप्रभृतिनगरेषु लोकानुपदिशन् स्वामिमहाभागो जयपुरमायातः; अचरौलप्रशासक-ठाकुररणजीतसिंहस्योद्याने च विरराज। जयपुराधिपतये तस्य शुभागमनसन्देशः सम्प्रेषितः। अनेकधा निमन्त्रितः स्वामिप्रवरो यदा राजप्रासादं प्राप्नोत् तदा जयपुराधीशोऽन्तःपुरं प्रविष्टोऽभूत्। अशिष्टाचरणेनानेन कुपितो मुनिवरः स्वावासं परावृत्तः, न च पुनरनेकप्रयासैरपि राजप्रासादमगच्छत्।

**अस्माभिर्हासोल्लासायोपदिष्टम्**— जयपुरतः प्रस्थानावसरे प्रेमाश्रुवर्षिणो भावविह्वलाननेकभक्तप्रवरान् निरीक्ष्य मुनिवरो विनोदभावेन तानुद्‌बोधयन्नुवाच, न मनसा भावविह्वलैर्भाव्यम्, अस्माभिः सर्वमेव हासोल्लोसायैवोपदिष्टं न प्ररोदितुं किमपि। १९२३तमसंवत्सरस्य कार्तिककृष्णनवम्यां स्वामिमहाभाग आगरानगरमागतः; मौखिकोपदेशेन सह स "भागवतखण्डनम्" नामाष्टपृष्ठमितं पुस्तकमप्येकं विलिख्य तस्य सहस्रशः प्रतीस्तत्र वितरितवान्। सहस्रशश्च हरद्वार-वर्तिकुम्भमेलके वितरितुं मथुरागमनपरायणः सहैवानयत्।

**गुरुशिष्ययोरन्तिमं सम्मिलनम्** —पञ्चछात्रैः सह निजगुरुचरणशरणप्राप्तः ऋषिवरो विनम्रभावेन गुरुचरणयोरभिवादनमकरोत्। स्वर्णमुद्रामेकां मलमलवस्त्र-कदम्बञ्च एकं गुरुचरणयोरर्पयत्। "भागवतखण्डनम्" नाम पुस्तकस्य परिचयमपि प्रादात्। गुरुवरः स्वकृपापात्रं सुयोग्यतमं विजयिनं शिष्यप्रवरं सम्मिलन्नतीवहर्ष-मन्वभवत्, शिरसि वरदहस्तं निधाय भूरिभूरिशुभाशिषो व्यतरत्। हर्षोत्कर्षेण तस्य हृदयमुल्लसितम्; स्वारोपितसुवृक्षे फलितान्यभिवाञ्छितसुफलानि, सिद्धिपरञ्च स्वीयोद्देश्यं दर्शं दर्शं स परमसन्तुष्टोऽभूत्। कतिचिद् दिनानि गुरुसेवायां स्थितः स्वामिमहाभागः सन्देहास्पदविषयाणां समाधानं शास्त्रीयतत्त्वरहस्यांश्चागृहीत्। पुनः कुम्भमेलकं समीपागतमभिलक्ष्य तत्र गन्तुं गुरुदेवानुमतिं प्रार्थयत्। गुरोरादेशञ्चोपलभ्यातिविनीतभावेन गुरुचरणावभिवन्दमानः स विसृष्टः। इदमेव आदर्शगुरुवरशिष्य प्रवरयोश्चान्तिमं सम्मिलनम्।

मथुरातः प्रस्थायैकेन ब्रह्मचारिणा संयुतः स्वामिप्रवरो मेरठनगरे एकस्मिन् देवीमन्दिरे स्वीयासनमाससाद। तेषु दिवसेषु स शालवस्त्रपरिधानं, चरणतल-कञ्चुकम्, गले स्फटिकमालाञ्चाधारयत्। तत्र हि गंगारामनामधेयेन प्रतिष्ठितभद्र-पुरुषेण केनचित्तस्य साक्षात्कारोऽभवत्।

**कामवासनापरिहरणोपायाः**—एकदा गंगारामेण पृष्टः स्वामिमहाभागः कामवासनायाः सुरक्षोपायानवर्णयत्। कामवासनां जेतुमिच्छन्मानवो विधानमिद-माचरेत्—

एकान्तस्थानं सेवेत; नृत्यादिदृश्यं पूर्णतः परिहरेत्; अनुचितस्वरूपशब्द-वस्तूनां दर्शनश्रवणस्मरणानि च वर्जयेत्; स्त्रीजनान् न निरीक्षेत; नियमितजीवनं व्यतीयात्; (नियमितजीवनचर्यामाचरेत्)। साधनैरेतैः कामवासना मन्दतां गच्छति। वासनातृप्तिं प्रति प्रयतमानो मानवः सदैवासफलतां लभते यतः कामः कामाना-मुपभोगेन न कदापि प्रशाम्यति, अपितु भूयोभूयोऽभिवर्धते ह्येव; अतो विषयवासनायाश्चिन्तनमपि परिहरेत्। जितेन्द्रियैर्भवितुमभिलाषिभिर्दिवानिशं प्रणवजपानुष्ठानं विधेयम्। रात्रौ जपानुष्ठानं कुर्वत आलस्यं प्रवर्धेत चेद् होराद्वयं गाढनिद्रामधिगम्य पुनरुत्थितः पूर्ववत् पवित्रप्रणवजपमारभेत्। बहुस्वापेन स्वप्नाधिक्यम्, यच्च जितेन्द्रियमानवकृतेऽनिष्टकरम्। प्रत्यूषे ज्योतिष्मती-(मालकांगनी)-नामोषधि-विशेषस्य पञ्च बीजानि गृह्णीयात्। एवं जपादिसाधनैः कामवासना विजेतुं शक्या।

**पाखण्डखाण्डिनीपताका**— हरद्वारकुम्भमेलकं समस्तार्यावर्तदेशेऽनुपमम्; अत्र हि सत्साधवः, त्यागितपस्विनः, चतुर्वर्णगृहस्थजनाश्च लक्षश एकत्रिता भवन्ति। स्वोद्देश्यघोषणाय स्वामिप्रवरोऽवसरमेनमत्यनुकूलममन्यत, अतः स हि कुम्भसंक्रान्तेरेकमासपूर्वमेव १९२३तमसंवत्सरस्य फाल्गुनशुक्लसप्तम्यां हरद्वारं

प्राप्नोत्। तत्र च 'भीमगोडा' स्थानस्योपरि सप्तसरोवरे व्रजमेकं कतिपयपर्णकुटीश्च निर्मायावसत्। अत्रैव ऋषिवरः पताकामेकामारोपयत्, यस्यां "पाखण्डखाण्डिनीपताका" इत्यङ्कितमासीत्।

प्रतिदिनं मेलके सदुपदेशं कुर्वन् स पौराणिकमतस्य खण्डनं तस्मिन् बृहत्स्थले वैदिकधर्मस्य च प्रचारमकरोत्। पोपलीलायाः सघनवने समालोचनायाः कठोरकुठाराघातान् कुर्वन् पौराणिककथानां तन्माहात्म्यस्य च कोमलललितलतिकासु तीव्रतमं खण्डनकुठारप्रहारमकरोत्। स्वामिन आश्रमे समुत्तोलितमनुपमं ध्वजं निरीक्ष्य शतशो जना आभ्यन्तर्गताः स्वामिनो मन्तव्यमङ्गीकृतवन्तः। इतो यावत् न कस्यचित्संन्यासिजनस्य मुखान्मूर्तिपूजनखण्डनम्, मृतकश्राद्धतर्पणादिनिराकरणम्, अवताराणां, पुराणोपपुराणानाम्, पर्वस्नानमाहात्म्यस्य च मिथ्यात्वमभिश्रुतमासीत्। अतो बहूनां कृते नवदृश्यमिदं विस्मयावहम्, बहवश्च कलिकालं विनिन्दन्तस्तं पण्डितसंन्यासिनम् "नास्तिकम्" प्रावदन्। पण्डितवर्याः साधवश्च स्वामिनो मन्तव्यविरुद्धं व्याख्यानमपि प्रारभन्त। बहवश्च दुर्वचनानि प्रयुञ्जन्तः सीमानमलङ्घयन्। ब्राह्मणाः साधवश्च शास्त्रार्थकृते स्वामिनः कुटीरंगता द्वैकप्रश्नोत्तरेण ह्येव निरुत्तरतामभजन्। संस्कृतज्ञः स्वामी महानन्दः प्रथमवारं स्वामिनः पार्श्वे वेदसंहितानां दर्शनमकरोत्।

काशीस्थः सुप्रसिद्धपण्डितो विशुद्धानन्द एकदा "**ब्राह्मणोऽस्य मुखमासीद् बाहूराजन्यः कृतः । ऊरू तदस्य यद् वैश्यः पदभ्यां शूद्रो अजायत** इतिवेद-(**ऋग्वेद**– १०–९०–१२ **यजुः०**– ३१–११ **अथर्व०**– १९–६–६)मन्त्रस्य "ब्राह्मणा ब्रह्मणो मुखात्, क्षत्रिया बाहूभ्यामजायन्त वैश्या ऊरूभागात् शूद्राश्च पद्भ्यामजायन्त (समुत्पन्नाः), इत्यर्थमकरोत् (इत्यर्थं विहितवान्)। महर्षिप्रवरश्च विशुद्धानन्दस्य अर्थानाक्षिपन् श्रोतृवर्गमुद्बोधयत्– परमप्रभोर्वेदविहितव्यवस्थया चतुर्वर्णयुक्ते मानवसमाजे "ब्राह्मणा मुखस्थानीयाः पञ्चेन्द्रियज्ञानधृतमुखसमा ज्ञानप्रधानाः, क्षत्रियाश्च बलधृतबाहुस्थानीया बलप्रधानाः, वैश्या हि सर्वभुक्तभोजनजातरसरक्तादिवितरकोदरस्थानीयाः सर्वमानववर्गाय भौतिकभोज्यवितरणप्रधानाः (प्रदातारः) एवं शूद्राश्च सर्वत्रगतिकर्तृचरण-(पद्)-समानाः स्वसेवया सर्वसमाजमसुविधापरिहरणेन प्रगतिप्रदातारो विहिताः" इत्येतावदस्य वेदमन्त्रस्य रहस्यम्।

**सर्वमेधयज्ञः**–तस्मिन् महामेलके महर्षिप्रवरेणानेकानि प्रवचनानि व्याहृतानि; शास्त्रार्थेऽनेके प्रतिवादिनः पराजिताः; शतशो जिज्ञासवः समुद्बोधिताः, भागवतखण्डनस्य सहस्रशः पुस्तकानि वितरितानि। तस्य देवपुरुषस्य पाखण्डखण्डिनीपताका सदुपदेशाश्च बहुशो जनानाकर्षितानकुर्वन्, परमस्मिन्नेव मेलके तेन स्पष्टतोऽनुभूतं यत्; जनवर्गोऽज्ञानतमोमग्नः, विद्वांसश्च

स्वार्थान्धा धर्मव्याजेन मुग्धजनप्रवञ्चनपराः, साधवश्च गृहिभ्योऽपि निकृष्टतमाः, धर्मो हि नाम बाह्याडम्बरमात्रावशेषः। सर्वां स्थितिमिमां निरीक्ष्य ऋषिवरो निरणैषीत्, नहि सामान्यसाधुजनानामिव निर्वाहः।

साम्प्रतं मयापि विशेषं तपस्तप्तव्यम्, तपसा च विशेषशक्तिः समर्जनीयेति। इत्थं मनस्विविचारतरंगतरंगायितेन मनसा एकदा प्रवचनावसरे सगद्गदम् "सर्वं वै पूर्णं स्वाहा" इति प्रब्रुवन् समुत्थितः। स्वीयवस्त्रपुस्तके धनादिकञ्च सर्वमपि तत्रैव वितरितमकरोत्। महाभाष्यपुस्तकप्रतिम्, स्वर्णमुद्रामेकाम्, मलमलवस्त्रकदम्बञ्चैकं गुरुचरणयोर्मथुरां सम्प्रैषयत्। तदा सर्वमेधयज्ञं सम्पादयन्तं स्वामिनमभीक्ष्य स्वामिकैलासपर्वतोऽपृच्छत्; भगवन्! किमिदम्? ऋषिवरः समुदतरत्—यावन्न स्वल्पा आवश्यकतास्तावन्नहि पूर्णस्वातन्त्र्यम्; न च प्रयोजनसिद्धिरपि भवितुं शक्या। सर्वमतमतान्तरानुयायिनां विरुद्धमहं सुस्पष्टं निर्देष्टुमिच्छामि; एतदर्थञ्च परमावश्यको निर्द्वन्द्वभावः; नहि निर्द्वन्द्वभावेन विना शक्यमिदम्।

## शक्तिसञ्चयः – पुनश्च कर्मक्षेत्रेऽवतरणम्

परित्यज्य समग्रपुस्तकादिवस्तुजातं कौपीनमात्रपरिधानधरो विभूतिप्रलिप्त-तनुर्ऋषिवरो मौनावलम्बी बभूव। प्रवचनवादविवादयोः का कथा वाग्व्यापारमपि परिहरन् स स्वकुटीरकोणे ह्येव पर्यतिष्ठत्। गगनघनगम्भीरवाङ्नादेन सकल-मठानां प्रतिवादिमल्लसम्मर्दस्थलानाञ्च प्रकम्पयिता सर्वसम्प्रदायिनामान्दोलयिता च स वाग्वीरकेसरी स्वराष्ट्रवासिनामकर्मण्यतया मौनभावेन प्रशान्तोऽभवत्। सर्वमेव वाग्व्यापारं निरुन्धन् स्वकुटीरमेव बहुमन्यमानः समयमत्यवाहयत्, परं "**वदन् ब्रह्मावदतो वनीयान्**" ऋ० १०।११७।७ अर्थाद् विद्वानुपदेष्टा अवदतः श्रेयानिति पाठपठनशीलो दयानन्दसदृशो वाग्वीरः कथं स्थिररूपेण मौनावलम्बनं कर्तुमशक्नोत्। एकदा स्वामिनः कुटीरमनुगच्छतः कस्यचित् "**भागवतं निगम-तरोर्गलितं फलम्**" अर्थात् श्रुतिशास्त्रपादपेषु फलितं फलमिदं भागवतमपि वेदवत् श्रेष्ठतमम्" इति ध्वनिं श्रुत्वैव-असत्यसम्मानं सत्यहननञ्चासहमान ऋषिवरो मौनव्रतं विहाय भागवतखण्डनं प्रारभत। तदैवैतदपि तेन सुनिश्चितम्; यत्परमेश्वरस्य गुरुवरस्य च कृपया श्रुतिशास्त्रपरिशीलनेन यो ज्ञानराशिरर्जितस्तं धर्मप्रचारेण लोकहितानुष्ठानेन च सफलतां नयामीति।

"देवगिरा ह्येव वार्तालापं कुर्वन् किञ्चित्कालं गंगातीरे परिभ्रमामि" एवं निश्चित्य स हृषीकेशं गतः; तत्र च पञ्च षट् दिनानि समास्थाय परावृत्तो हरद्वारं कनखलं चानुभ्रमन् लण्ढौरास्थले समागत्य विरराज। अत्र हि दिनत्रयं निराहारो ह्येवातिष्ठत्। ततोऽतिक्षुधातुरश्च कृषकायैकस्मै बुभुक्षासंकेतमकरोत्। स च श्रद्धापूर्वकं वृन्ताक-(बैंगन)-फलत्रयं स्वामिनमुपाहरत्। यैश्च स देवपुरुषः स्वक्षुधानिवृत्तिमकरोत्। इतश्च प्रस्थाय स शुक्रतालं परीक्षितगढञ्चानुभ्रमन् गढमुक्तेश्वरं सम्प्राप्य पञ्चदशदिनानि न्यवसत्। तेषु दिवसेषु स्वामिमहाभागो नाविकस्यैकस्यानुकुटीरं बालुकानिकरे ह्येव व्यराजत। स्वसमीपोपासिनश्च संस्कृत-भाषायामेव सदुपदेशं प्रादात्। कतिपयपण्डितजनैश्चाप्यत्र वार्तालापः समजनि। अत्रापि ऋषिवरो दिनत्रयं निराहारो ह्येव स्थितः। चतुर्थेऽहनि यावन्नाविकः स्वभोजनमलभत, तावत् "परमहंसोऽयं त्रिदिवसतोऽत्रैव निराहारो वर्तते, नानेन कश्चिदन्नमभियाचितो न चापि केनचिदस्मै-अन्नादिकमुपाहृतम्, अतः पूर्णतो निराहारोऽयमिति मत्वा तस्मै स्वभोजनतोऽर्धमधुकरीमयच्छत्, याञ्च स्वामिप्रवरोऽग्रहीत्।

**रामघाटस्थाने**– गंगातीरमनुभ्रमन् स (यतिवरः) कर्णवासमागच्छत्। तत्र च गंगासेतुसमासीनं भव्याकृतिं परमहंसं निरीक्ष्य तत्तेजोभिः समाकृष्टं भक्तिविह्वलं छात्रयुगलमेकं तस्य देहं गंगारजोभिरभ्यसिञ्चत्। ऋषिवरश्च तौ–

उपनिषदोऽष्टाध्यायीं मनुस्मृतिञ्चाध्येतुमुपादिशत्। दिवसेष्वेतेषु स कमण्डलुमपि पर्यत्यजत्। कौपीनञ्चाप्येकमेव बिभ्रत्। स तमेव स्नानानन्तरं शुष्कं विधाय साधनाध्यानसमाप्तौ पर्यधारयत्। इतः प्रस्थाय यतिवरः फर्रुखाबादस्थितविश्रान्त-घाटमनुप्राप्तस्तत्र दिनत्रयं स्थितः। तत्र हि "भगवन्! गंगासूर्यश्च किं वस्तुजातम्?" इति पण्डितमणिलालस्य प्रश्ने ऋषिवरः "जडपदार्थद्वयमेव" इति समुदतरत्। फर्रुखाबादतो मुनिवरः 'चासी' स्थानमागतः। अत्र च नन्दरामाभिधेयचक्राङ्कित-ब्राह्मणेन केनचित् स्वपाखण्डजालं विस्तारितमासीत्। स स्वामिनः समागमनं तस्यागाधपाण्डित्यञ्च श्रुत्वा सरिताया अपरपारमगच्छत्। एतेनैव तस्य भ्रान्तिजालं परिज्ञाय तत्रत्य जाटनिवासिनो वैरागिभावस्य दीक्षां नागृह्णन्। ऋषिवरश्च तत्र पञ्चदशदिवसपर्यन्तं वेदोपदेशस्यामृतवर्षामकरोत्।

चासीतः प्रस्थाय भ्रमणशीलो मुनिवरो रामघाटं समागत्य-एकस्मिन् पर्णकुटीरे न्यवसत्। अत्रैकदा स्वसेवायामुपस्थितेन पण्डितटीकाराममहाभागेन समं प्रश्नोत्तररूपेण निम्नाङ्कितो वार्तालापप्रसंगः प्रचलितः।

स्वामिप्रवरः – महाभाग! किं जातीयो भवान्?

पण्डितः – ब्राह्मणोऽस्मि भगवन्!

स्वामी – स्मरसि सन्ध्योपासनाम्?

पण्डितः – नहि भगवन्! गायत्रीं स्मरामि।

स्वामी – श्रावय गायत्री-मन्त्रम्।

पण्डितः – कस्यचिदप्यभिमुखं गायत्रीपाठो गुरुवरेण निषिद्धः।

स्वामी – भद्र! संन्यासिनो ब्राह्मणानामपि गुरवो भवन्ति, अतस्तदभिमुखं गायत्री-मन्त्रपाठे न दोषः। स्वामिनो वचनं प्रमाणयन् पण्डितमहोदयो गायत्रीमन्त्रम-श्रावयत्। तस्य मुखाद् गायत्रीमन्त्रस्य शुद्धोच्चारणं श्रुत्वा मुनिवरोऽतितरां प्रमुदितः। तञ्च प्रोत्साहयन् सन्ध्योपासनादिकर्मसु तस्याभिरुचिं च प्रवर्धयन् स्वहस्तेन सम्पूर्ण-सन्ध्यामन्त्रान् विलिख्य प्रायच्छत्।

ऋषिवरस्य सत्संगेन टीकारामपण्डितवर्यस्य सर्वसन्देहा निवृत्ताः। सदुपदेशप्रभावेण तेन विष्णुसहस्रनाम-गंगालहरीप्रभृतिसमस्तस्तोत्रपुस्तकानि गंगायां विसर्जितानि। ठाकुरप्रस्तरमूर्तयश्चापि सरितायां प्रवाहिताः। अन्ये चाप्यनेके पण्डितवर्याः शतशो भद्रपुरुषाश्च प्रतिदिनं चतुर्वादनसमये सदुपदेशग्रहणाय समागन्तुं प्रवृत्ताः, मुनिवरस्य विद्याबलञ्च प्राशंसन्। असीमश्रद्धाविह्वलो गोस्वामी शम्भुगिरिश्च तुलसीदलैः समं प्रतिदिनं समागत्य महर्षिमेव शालिग्रामं मन्यमानस्तस्मै तुलसीपत्राणि समर्पयत्। स्वामिनः सदुपदेशैरतितरां प्रभावितः

पण्डितटीकारामस्तु स्वपौरोहित्यकर्मतोऽपि विरक्तिमभजत्। स हि कर्णवासं प्राप्य ठाकुरगोपालसिंहादिसकलयजमानवर्गमेकत्रीकृत्य समुदबोधयत्। अत्र हि रामघाटस्थाने श्रुतिशास्त्राणामतिविशिष्टो विद्वान् महात्मा मुनिवरो ह्येको विराजते। पूर्णविश्वस्तोऽहमभवं तस्य सत्संगेन, यत् कण्ठीतिलकादि-धर्मलिङ्गान्यवैदिकानि। न च श्रुतिषु सर्वशक्तिमतः सर्वेश्वरस्य स्थाने क्वापि जडमूर्तेः पूजाया विधानम्। पुराणतीर्थव्रतमाहात्म्यादिसर्वमेव कल्पितं दम्भजालम्। ब्राह्मणक्षत्रियवैश्यवर्णत्रयकृते गायत्रीसमुपासनमेव श्रेयः। मम मनसः सर्वे सन्देहाः निवृत्ताः, अतो नैवाहमद्यप्रभृतियुष्मन्निर्मितमन्दिरे मूर्तिपूजनं विधास्ये। परामृशामि च भवद्भ्योऽपि; यदात्मकल्याण-(यदात्मोन्नति)-मिच्छन्तो भवन्तोऽपि मुनिवरस्य पुण्यदर्शनेन सदुपदेशेन च सर्वसन्देहनिवृत्तिपूर्वकं यज्ञोपवीतं सन्धारयन्तो मूर्तिपूजाद्यवैदिककर्माणि परित्यजन्तु।

**कर्णवासेऽवस्थानम्**– स्वपुरोहितस्य नवसन्देशं श्रुत्वा सर्वेऽपि ठाकुरजनाः स्वामिप्रवरं कर्णवासे निमन्त्रयितुं प्रयत्नपरा अभूवन्। उतश्च स्वयमेव परिभ्रमन् मुनिवरोऽपि कर्णवासं सम्प्राप्य नागाबाबामठाग्रवर्तिवृक्षस्याधस्तात् स्वीयासनमास-साद। मुनिवरस्यागमनं शृण्वन्तः ठाकुरधर्मसिंहप्रभृतयः श्रीचरणयोरुपस्थिताः। तान् यज्ञोपवीतविरहितान् निरीक्ष्य ऋषिवरः सखेदमुवाच–अहो पण्डितपुरोहिता-नां मिथ्याचारः, यन्मुखागतश्मश्रुसंयुतानपि यजमानान् यज्ञोपवीतेन विभूषितान् न विदधति। एतैरेवाधर्माचरणैर्देशोऽयमनुदिनमधोगतिं गच्छति।

**पण्डित-अम्बादत्तेन समं शास्त्रार्थः**– महर्षेर्भव्याकृतिं दर्शं दर्शं तस्य दिव्योपदेशांश्च शृण्वन् क्षत्रियवर्गो भद्रजनवर्गश्च परां तृप्तिं सन्तुष्टिञ्चाभजत्। सदुपदेशैश्च मुनिवरस्य कीर्तिचन्द्रिका सर्वेष्वपि समीपवर्तिग्राम्यप्रदेशेषु प्रसृता। समीपस्थस्थानेभ्यो मुनिवरस्य पुण्यदर्शनार्थं शतशो भद्रपुरुषाः संघशः सम्भूय समागन्तुं प्रवृत्ताः। तत्रत्य भगवान्दासो नाम कश्चित् पण्डितः महर्षेः प्रसृतां कीर्तिकौमुदीं संवर्धमानां लोकप्रियताञ्च नासहत। सोऽचिन्तयत् "शास्त्रार्थे पराजित्यैव मार्गकण्टकोऽयं दयानन्दो दूरीकर्तुं शक्यः" इति, अतः स हि संस्कृतभाषाभिज्ञम्-अनूपशहरनिवासिनम्– अम्बादत्तनामधेयं पण्डितवर्यमेकं स्वामिना समं शास्त्रार्थकृते समुपास्थापयत्। पण्डितवरेण समं शास्त्रार्थः संवृत्तः, परिणामतः शास्त्रार्थे पराजितोऽपि सत्यनिष्ठपण्डितप्रवरस्तत्रैव बृहत्सभायां मुक्तकण्ठेनोदघोषयत् "ऋषिवरस्य प्रकथनं सर्वं सत्यनिष्ठम्, मूर्तिपूजनं हि वेदविरुद्धं परित्याज्यं च" इति। अम्बादत्तपण्डितवरस्य पराजयेन स्वामिनः कीर्तिकौमुदी पुनरतितरां प्रसृता। शतशो भद्रपुरुषाश्च परमश्रद्धया तमुपातिष्ठन्। तैश्च शालिग्राममूर्तयो गङ्गायां प्रवाहिताः; कण्ठीजालानि च भग्नानि।

**अस्मद् भाग्यं सहलग्नम्**– कर्णवासतः प्रस्थाय मुनिवरः–

अनूपशहरनगरे वेतसागारनिकटे कुटीरमेकं सुशोभितवान्। तदा हि स किमपि रुग्णो जातः। परं वेतसागारस्वामिनो गौरीशंकरस्यौषधोपचारेण स्वास्थ्यमलभत। बूँदीनरेशस्य गुरुवरो वैरागी रामदासश्चाप्यत्रैव व्यराजत। एकदा स्वामिमहाभागो यदा नगरस्यापरपार्श्वे निवसितुकामो गमनोन्मुखोऽभूत्तदा श्रीरामदासोऽवदत्; भगवन्! साम्प्रतं सम्पूर्णनगरे भागवतकथायाः प्रवाहोऽतिसमारोहेण प्रवर्तते; भवांश्च भागवतस्यातितीव्रालोचकः, अतो भोजनप्राप्तिरपि कदाचित्सुलभा न स्यात्-इति विचिन्तनीयम्। विहस्य मुनिवरोऽवदत्; नैष चिन्ताविषयः; सहलग्नमस्मद् भाग्यम्।

**मल्लनवलजंगः परमभक्तो जातः**— ततः स्वामिमहाभागो नर्मदेश्वर-मन्दिरसमीपे सतीमढीमायातः। तत्रैवानतिदूरे मल्लनवलजंगस्य व्यायामस्थल-मासीत्। नवलजंगोऽतिसुशीलः संयमशीलो बलवांश्चावर्तत। एका तस्य ब्रह्मचारिणी भगिनी चापि तत्रैव व्यराजत। द्वावेव भगिनीभ्रातरौ सलिलसन्तरणे चैतावत्परं निपुणावास्ताम्, यद्वर्षर्तौ प्रवृद्धमानामपि गंगां तीर्त्वैव पारमगच्छताम्। ऋषिवरस्य व्यक्तित्वगौरवेणागाधपाण्डित्येन च प्रभावितो नवलजंगः श्रीचरणयोः समर्पित-भक्तप्रवरो जातः। स हि प्रतिदिनं गङ्गारजः समानीय चन्दनवच्च संपिष्य मुनिवरस्य देहमभ्यसेचयत्। एकदा मदिरापानोन्मत्ताः केचिद् वाममार्गिणिः "दयानन्द! बहिरायाहि; वारुणीपानेन शुद्धं त्वां कुर्मः" इत्यनर्गलमपशब्दजालञ्च वदन्तः स्वामिनमुपाजग्मुः। देवस्वभावो दयानन्दः "दण्डप्रहारयोग्या इमे दुष्टजना भद्रजनवन्न व्यवहर्तव्याः" इति विचिन्त्य नवलजंगमाहूय तेषां वारुणीम-दावतारणायादिदेश। स्वामिन आदेशेन मदमत्तकरिषु केसरीव नवलजंगस्तेषु समापतत्। नवलजंगं दृष्ट्वैव भयेन प्रकम्पमानास्ते प्रपलायिताः।

**नाहं जगदिदं कारागारे प्रक्षेप्तुमागतः**— अनूपशहरनगरे ब्राह्मणः कश्चिदेकदा स्वामिनमुपस्थाय सविनयं ताम्बूलपत्रमेकं सेवायामुपाहरत्। सहजभावतो मुनिवरेण तत्पत्रं स्वमुखे धृतम्, परं तच्चर्वणरसं स्पृष्ट्वैव "विषसंपृक्तमिदमिति सोऽजानात्। विषदायिनं न किमप्याक्षिपन् स गंगापारेऽगच्छत्। तत्र च बस्तीकर्मणा न्यौलीकर्मणा च देहाद् विषप्रभावं दूरीकृत्य स्वासनं विरराज। महर्षेः परमभक्तस्तत्रत्योपमण्डलारक्षी (तहसीलदार) श्री सैयदमोहम्मदमहोदयो घटनामिमामभिज्ञाय मुनिवरं प्रति अगाधश्रद्धाभावेन तं दुष्टात्मानं कारागारे न्यक्षिपत्।

स्वकार्येण प्रमुदितश्चोपमण्डलाधिकारिमहोदयः स्वामिनमुपातिष्ठत्, परं पराङ्मुखमुपेक्षाशीलञ्च स्वामिनं निरीक्ष्य सोऽतितरामाश्चर्यचकितोऽभूत् पृष्टेऽप्रसन्नतायाः कारणे मुनिवरोऽवदत्, "कश्चिद् ब्राह्मणो भवता मदर्थे

कारागारे निक्षिप्तः'' इति श्रुतम्। नाहं जगदिदं बन्दिगृहे प्रक्षेप्तुमागतोऽस्मि, अपि तु सम्पूर्णमानववर्गं बन्दिगृहान्मोचनमेव मे लक्ष्यम्। यदि दुर्जनः कश्चित् स्वीयदुष्टतां न जहाति कथं वयं स्वसौजन्यं जहाम। शब्दानिमान् संश्रुत्य-उपमण्डलाधिकारिमहोदयो रोमाञ्चितोऽभवत्। न हि सोऽद्यावध्येतादृशं क्षमावतारमपश्यत्। स हि मुनिवरं प्रणम्य तुरन्तमेव तं ब्राह्मणं बन्दिगृहादमुञ्चत्। अनूपशहरतो विभिन्नस्थानेषु परिभ्रमन् मुनिवरः चासी नगरमुपागतः। यत्रापि सोऽगच्छत् तत्रैव विशालमानवसमूह एकत्रितोऽभूत्। स च निर्भयतया धर्मोपदेशं वितरन् जडमूर्तिपूजनतीर्थस्थलमाहात्म्यादिकञ्च खण्डयन् विरराज।

**ऋषिदयानन्दस्य बलपरीक्षणम्**— बुलन्दशहरमण्डलस्य-जहांगीराबाद-निवासी व्यायामशीलमल्लः श्रीओंकारदासः स्वामिनः सदुपदेशान् संश्रुत्य तस्य समर्पितभक्तप्रवरोऽभूत्। एकदा स्वामिनः शारीरिकबलं परीक्षितुकामः स महात्मनश्चरणसंवाहनाज्ञामयाचत। मुनिवरः प्रहस्य प्रावदत्। संवाहितावेव चरणावस्मदीयाविति नायासावकाशः, परं परमाग्रही स यदा ऋषिवरस्य चरणसंवाहने प्रवृत्तस्तदा ''लोहनिर्मिताविव स्वामिनश्चरणाविति'' अन्वभूत्। पूर्णबलप्रयोगेणापि तस्यांगुलयश्चरणत्वचि नान्तर्निहिताः। अन्ततः सोऽतितरां प्रस्वेदपरो विरराम।

**अवतारणमपि यज्ञोपवीतस्य शक्यम्**— श्रीगंगाप्रसादपण्डितश्चापि ऋषिवरस्य परमभक्तोऽभूत्। स हि स्वामिन उपदेशेनानेकभद्रजनान् यज्ञोपवीतधारणाय गायत्रीमहामन्त्रजपार्थञ्च सम्प्रैरयत्। ''मया हि बहुशो जना यज्ञोपवीतेन सुशोभिता'' इत्येकदागत्य स स्वामिनमुवाच। श्रुत्वैतन्मुनिवरोऽति-प्रमुदितः, परं तदैव प्रश्नमप्यकरोत् ''सर्वेभ्यो यज्ञोपवीतं प्रयच्छस्येव, अवतारयसि वाऽपि कस्यचिदिति'' चकितः पण्डितप्रवरोऽपृच्छत्; भगवन्! किमवतारणमपि यज्ञोपवीतस्य समुचितम्? मुनिवरोऽवदत्, आम, अधर्मशीलस्य यज्ञोपवीतम-वतारणीयमेव।

**चपेटिकया नवीनवेदान्तखण्डनम्**— खन्दोईग्रामवासी जाटछतरसिंहो नवीनवेदान्तमतावलम्बी अवर्तत नवीनवेदान्तविषये स्वामिमहाभागेन समं वार्तालापप्रसंगे स एकदा तस्य प्रबलयुक्तिभिर्निरुरतां भजन्नुवाच ''भगवन्! यथेष्टं भवान् ब्रवीतु; परं सत्यमिदं यज्जगदिदं मिथ्यारूपमेव। मुनिवरस्तस्मै किमपि प्रत्युत्तरमप्रयच्छन्— अग्रत उपसृत्य तस्य मुखे चपेटामेकां प्रददौ। क्रुद्धो जाटमहोदयः ''नैतद् भवद्विधज्ञानिने देवपुरुषाय शोभास्पदं यन्मतभेदेनाप्रसन्नः प्रतिवादिनो मुखे चपेटां प्रदेयात्'' इति स्वामिनं प्रोवाच। विहस्य मुनिवरेण प्रोक्तम् ''चौधरीमहाभाग! यावत्सर्वमेव जगन्मिथ्याजालम्; ब्रह्मणश्च व्यतिरिक्तं

न हि किञ्चिद् वस्तुजातं तावत्को हि स यो युष्मन्मुखे चपेटां प्राददत्? सद्युक्तिमुपेक्षमाणो जाटछतरसिंहश्चपेटाप्रहारयुक्त्या सम्मतो जातः। तस्य ज्ञानचक्षुषी समुन्मीलिते। मुनिवरस्य चरणौ संगृह्य सगद्गदमुवाच; देव! भवतोन्मीलिते मे ज्ञानचक्षुषी।

**तूलशोधकाय सदुपदेशः—** श्रद्धाप्रेमप्रपूर्णस्तूलशोधकः कश्चित् स्वामिनः सदुपदेशान् श्रोतुमागच्छत्; स हि सविनयं न्यवेदयत्, भगवन्! मत्सदृशाज्ञानग्रस्तजीवात्मनोऽपि समुद्धाराय कञ्चिदुपायं भवानुपदिशतु, इति। परमदयालुर्मुनिवरस्तस्मै "ओ३म्" पदजपादेशं प्रददौ। उपादिशच्च सर्वत्र कार्यव्यवहारेऽर्थशुचिः सत्यनिष्ठश्च भव। यावत्तूलं कश्चित्प्रदेयात्तावत्परिमाणमेव परावर्तय, मनसा सर्वेषां शुभं चिन्तय, अनेनैव कल्याणं ते भविष्यति।

अनूपशहरनिवासी नापितः 'उमेदा' नामकोऽपि हृदयमन्दिरे मुनिवरस्य महिमानमन्वभूत्। एकदा भक्तिविह्वलः स भोजनस्थालीं सज्जीकृत्य (प्रपूर्य) मुनिवरं न्यवेदयत्। भक्तप्रवरेण प्रदत्तभोजनं मुनिवरस्तत्र सभायामेव भोक्तुमारभत। तत्र स्थिताः प्रायः पञ्चविंशतिब्राह्मणाः (जन्मतः स्वात्मनो ब्राह्मणम्मन्याः) "छिः छिः" शब्देन घृणामभिव्यञ्जन्तोऽब्रुवन्; भगवन्! नापितस्येयं मधुकरी, कथं भवान् भुनक्ति? प्रहस्य मुनिमहाराजोऽवदत्; नहि नापितस्य अपितु गोधूमचूर्णस्येयं मधुकरी, अतोऽवश्यं श्रद्धया प्रदत्तेयमुपभोज्या।

एकदा भद्रजनः कश्चित् स्वहस्तं प्रदर्शयन् मुनिवरमपृच्छत्, "ब्रूहि भगवन्! किं किं मत्करे वर्तते?" ऋषिप्रवरं उवाच; अस्थिचर्मरक्तव्यतिरिक्तं नान्यत्किमपि युष्मत्करेऽस्ति। जन्मपत्रप्रसंगे पृष्टो महाभाग उवाच, किन्नाम जन्मपत्रम्, कर्मपत्रं विवेचनीयम्; कर्मविधिश्चेत् क्वचित्संगृहीतः स मन्तव्यः; कल्पितमेव सर्वमन्यत्; इति जानीहि।

१९२४तमसंवत्सरस्य मार्गशीर्षमासे स्वामिप्रवरः पद्मासनस्थो रामघाटस्थाने गंगातटे व्यराजत। प्रातर्दशवादनतः सन्ध्यासमयं यावत् स सर्वां देहगतिम्, अंगेषु सर्वविधस्पन्दनम्, वाग्व्यापारमपि चावरुन्धन्-एकासनस्थो ह्येव पर्यतिष्ठत्। तस्य ब्रह्मतेजसाकृष्टः पुरातनमूर्तिपूजको ब्रह्मचारी क्षेमकरणमहोदयस्तत्रानुप्राप्तः। गलेहस्तयोश्च रुद्राक्षमालाधरः, मस्तकत्रिपुण्ड-तिलकः, चन्दनचर्चितसर्वदेहांगः, रसनोपरि स्वीयेष्टदेवनाम बिभ्रदयमसाधारणो मूर्ति-(प्रस्तरमूर्ति)-पूजको "यस्य पूज्यमूर्तीनां भारमर्धमन-(विंशति-किलोग्राम)-मितमासीत्"। यत्र कुत्रापि पूजार्थं गच्छन् स्वपूज्यप्रस्तरमूर्तीश्च पृष्ठोपरि निधायानैषीत्। अयं प्रत्यूषतो ह्येव समाधिलीनं स्वामिमहाभागं पूर्णतो निराहारमुपकल्पयन् "**ध्यानावस्थिततद्गतेन मनसा पश्यन्ति यं योगिनः**" इति

पदस्य गायनमकरोत्। स्वामिमहाभागश्च समाधितो जाग्रत्स्मयमानो हुङ्कारमकरोत्। तत उत्थाय च तस्यानुरोधेन वनखण्डीश्वरमहादेवमन्दिरं जगाम। यत्र च श्रीरामचन्द्रमहोदयस्तस्यातिथ्यमकरोत्। प्रातरेव लोका अजानन्; नायं साधारणः परिव्राजकः कश्चित्; अपि तु मूर्तिपूजनावतारवादतीर्थव्रतमाहात्म्या दिपौराणिक-प्रपञ्चानां खण्डयिता, पुराणेषु प्रसिद्धतमभागवतपुराणस्य च समालोचको देवर्षिर्दयानन्दः।

एतेष्वेव दिवसेषु वाममार्गी संन्यासी कृष्णानन्दोऽपि तत्रातिष्ठत्। बहुशो ब्राह्मणाः सम्भूय तमनुप्राप्ताः, प्रार्थयंश्च; महाभाग! शास्त्रार्थे दयानन्दं पराजित्य हिन्दूधर्मं परिरक्ष। किञ्चिन्ननुनचानन्तरं कृष्णानन्दः शास्त्रार्थकृते समायातः। दिनत्रयं शास्त्रार्थः प्रचलितः। एकदा कश्चिज्जनः शास्त्रार्थसमये श्रीकृष्णानन्दं महादेवप्रतिमोपरि जलाभिषेकायानुज्ञामयाचत। स्वामिमहाभागो मध्यान्तरे ह्येवोवाच "नायं देवाधिदेवो महादेवः; प्रस्तरखण्डमात्रमेव" अनेनोद्विग्नः कृष्णांनन्दः साकारवादावलम्बनमकरोत्। ऋषिवरश्च धाराप्रवाहेण संस्कृतभाषां भाषमाणो निराकारसिद्धान्तमधिकृत्य वेदोपनिषत्प्रमाणप्रवाहमुपास्थापयत्। प्रतिप्रमाणप्रदाने विवशः कृष्णानन्दो जनाभिमुखम् **"यदा यदा हि धर्मस्य ग्लानिर्भवति भारत"** इत्यादि गीताश्लोकमपठत्। गम्भीरगिरा प्रगर्जन् महर्षिप्रवरोऽवदत् "मया समं विवदन् भवान् माभेवाभिमुखं ब्रवीतु" परं परिव्राजकः कृष्णानन्दस्तु विचारशून्योऽसमञ्जसग्रस्तश्च मुखफेनधरो विवशः स्थितो न किमपि वक्तुं प्राभवत्। पुनः कथमपि स्वीयबौद्धिकलज्जां परिरक्षन् स तर्कशास्त्रमवलम्ब्य स्वामिमहाभागं लक्षणस्य लक्षणं पप्रच्छ। ऋषिवरः प्रत्युदतरत्; लक्ष्यस्यैव लक्षणं भवति; यथा न हि कारणस्य किमपि कारणं तथैव न हि लक्षणस्यापि किञ्चिल्लक्षणम्। पूज्यस्य पूज्यः पेषणस्य च पेषणं न भवितुं शक्यम्। कृष्णानन्दस्थितिं निरीक्ष्य लोकवर्गो जहास। स च सभास्थलात् प्रयातः। शास्त्रार्थेनानेन महर्षेः सदुपदेशेन च प्रभावितोऽसामान्यप्रस्तरपूजकः क्षेमकरणः स्वीयसकलपूज्यप्रस्तरप्रतिमा गंगायां विससर्ज। तमनुकुर्वन्तश्च पण्डितबालमुकुन्द-प्रभृतयोऽपि कृत्रिमजडदेवभारं शिरसावतार्य प्राक्षिपन्। सर्वे च ते मनोमन्दिरे विराजमानस्य सर्वव्यापकप्रभोरेवोपासनां कर्तुमारभन्त।

रामघाटस्थितमानवसमूहमुद्बोध्य मुनिवरो बेलोननगरे आसनमाससाद। अत्राप्युपागतान् जिज्ञासुजनान् सन्ध्यां गायत्रीञ्चैवोपादिशत्। पण्डितइन्द्रमणि-महाभागो बहुशो गायत्रीप्रतीर्विलिख्य स्वामिनः सेवायामुपास्थापयत्। आगन्तुकेभ्यो गायत्रीप्रतिं प्रयच्छन्मुनिवरः प्रतेरधस्तात् एकसहस्राङ्कं विलिख्य प्राददत्; यच्च सहस्रवारं गायत्रीजपस्य निर्देशरूपेणाभवत्। एवं प्रायः पञ्चाशज्जना मुनिवरस्य करकमलाभ्यां गायत्रीप्रतीरगृह्णन्। एकदा पण्डितवरः कश्चित्-श्रीरामकृष्ण-

योर्भगवदवतारविषये प्रश्नमकरोत्। स्वामिप्रवरश्च प्रत्युदतरत्, नेमाविश्वरावतारौ, अपितु प्रबलप्रतापसम्पन्नशासकवरावभूताम्। न कदापि सर्वशक्तिमान् प्रभुरवतार-धारणं करोति, अवतारधारणस्यावश्यकतां वाऽनुभवति। एकदा "दण्डवत्" पदेन कश्चित् स्वामिनोऽभिवादनमकरोत्; मुनिवरो विहस्योवाच "भवानेव दण्डवत् विराजताम्" इति।

**हीरावल्लभेन समं शास्त्रार्थः—** दिनत्रयचतुष्कमत्रास्थाय मुनिवरः पुनः कर्णवासमाजगाम। अत्र हि पूर्वपराजितोऽम्बादत्तपण्डितवरः स्वपराजयं परिमार्ष्टुं हीरावल्लभं पण्डितवरं शास्त्रार्थकृते समुपास्थापयत्। अयं (हीरावल्लभः) हि स्वाराध्यदेवप्रस्तरप्रतिमाः सुशोभितसुन्दरसिंहासन एकस्मिन् सज्जीकृत्य महता समारोहेण समायातः। शास्त्रार्थप्रवृत्तेः प्रागेव पण्डितवरो दयानन्दहस्तेनै-वेष्टदेवप्रतिमाभोगविधिं निर्वर्त्य शास्त्रार्थतो विरामं विधास्यामीति प्रत्यजानात्। षड्दिनानि यावत् शास्त्रार्थः प्रचलितः। अन्तिमे (षष्ठे) दिवसे पण्डितवरो वाचा कर्मणा च स्वीयपराजयमङ्गीकृतवान्। स हि पूर्णसभायामेवोदघोषयत् "स्वामिमहाभागस्य प्रकथनं सर्वतः सत्यं प्रामाणिकञ्च; मुनिवरस्य विद्यावैभवमगाधम्, शास्त्रानुशीलनञ्चापरिमितम्" इति। एवं प्रबुद्धश्च पण्डितमहोदयः सकलप्रस्तरप्रतिमा गंगायां विससर्ज; सिंहासने च तासां स्थाने वेदसंहिताः संस्थापयामास। सभायां प्रायो द्विसहस्रजनसम्मर्दो व्यराजत (समुपस्थितः)। पण्डितवर्यस्य सत्यनिष्ठां न्यायप्रियतां च पश्यन् मुनिवरः सगद्गदंमुक्तकण्ठेन तं प्रसशंस। निष्पक्षजनसमूहोऽपि पण्डितप्रवराय हृदयेन साधुवादं व्यतरत्।

स्वामिनः शास्त्रार्थविजयेनानेन ठाकुरजनानामतितरामुत्साहोऽवर्द्धत। ते च यज्ञोपवीतग्रहणाय सुस्थिरं संकल्प्य तद्ग्रहणविधिविधानम्, कर्तव्यकर्मजातञ्च स्वामिनमपृच्छन्। स्वामिमहाभागश्च तान् सर्वं विधिमुपावर्णयत्। प्रवृद्धायुषां कृते प्रायश्चित्तो विनिश्चितः। एवम्— अनूपशहर-दानपुर-अहमदगढ-रामघाट—जहांगीराबाद-कर्णवासादिनगराणां निवासिनः पण्डितवरा गायत्रीजपानुष्ठान-मारभन्त। गायत्रीपुरश्चरणमिदमर्धशुक्लपक्षे ह्येव परिसमाप्तम्। ततश्च स्वामिनः पर्णकुटीरे बृहद्हवनयज्ञः समायोजितः। यज्ञेऽस्मिन् कर्णवासीयपण्डिता ह्येव होतार उद्गातारः ऋत्विजश्चाभूवन्। तदनन्तरञ्च स्वामिमहाभागः ठाकुरटीकारा-मस्यानुजम्, गोपालसिंह-भूमिसिंह-प्रभृति दश द्वादश वा क्षत्रिययुवजनान् यज्ञोपवीतेन दीक्षितान् विधाय गायत्रीमुपादिशत्। यज्ञसम्पूर्तौ सर्वोपस्थितजनेषु यज्ञशेषश्च वितरितः। जपयज्ञानुष्ठातारश्च पण्डितवरा दक्षिणाप्रदानेन सत्कृताः सन्तुष्टीकृताश्च। ठाकुरमहानुभावैरनुष्ठितयज्ञस्य चर्चा कर्णवासपार्श्ववर्तिप्रदेशेषु सर्वत्रैव प्रसृता। सर्वत्रैवास्य शुभयज्ञकर्मणो यशोगानमभूत्। अनेन यज्ञकर्मणा

प्रभावितश्च ब्राह्मणक्षत्रियवैश्यवर्गः संघशः सम्भूय जाह्नवीतटे स्वामिनमुपस्थाय तस्य करकमलाभ्यां यज्ञोपवीतमग्रहीत्। ठाकुरसमूहे नवीनोऽयं समारम्भः, कर्णवासठाकुरवर्गश्चातिप्रतिष्ठितः। अतो राजपूत-(राजपुत्र)-समूहे यज्ञोपवीतस्य सुप्रसारः सञ्जातः। प्रायो द्विशतक्रोशतः समागता राजपुत्राः मुनिवरस्य करकमलाभ्यां यज्ञोपवीतं गृह्णन्तो धन्यानात्मनोऽमन्यन्त। गंगास्नानाय समागता अपि राजपुत्रा ऋषिवरस्य वैदिकधर्मदीक्षाया गायत्री-उपदेशस्य चापि माहात्म्यमभ्यगच्छन्। चत्वारिंशत् पञ्चाशद्वा संख्यामितान् गंगातीरे पंक्तिबद्धस्थितान् राजपुत्रान् मुनिवरो यज्ञोपवीतप्रदानपूर्वकं गायत्रीमुपादिशत्।

**स्त्रीभ्यो गायत्री जपाधिकारः–** तत्रैव ठाकुरगोपालसिंहस्य ज्येष्ठपितृव्यपत्नी नवतिवर्षीया वृद्धा बालविधवा ठकुरानी हंसाऽपि व्यराजत। पञ्चषड्ग्रामस्वामिनी सत्यपि सा भोजनरूपेण केवलं मुद्गद्विदलेन यवमधुकरीमेवागृह्णात्। स्वयं पाकिनी सा सर्वठाकुरपरिवारेष्वतीवश्रद्धास्पदासीत्। सर्ववयस्काः ठाकुरसुताः स्नुषाश्च तां सम्मानयन्त्यो "माँ" पदेन सम्बोधयन्त्यश्चाभ्यनन्दयन्। यदा– एकैकशः कृत्वा सर्वे ह्येव ठाकुरजनाः ऋषिवरस्यानुयायिनो जातास्तदा सापि महर्षेः पुण्यदर्शनाभिलाषमकरोत्। ठाकुरगोपालसिंहस्य प्रार्थनया महर्षिस्तां दर्शनार्थमनुमेने। मुनिवरमुपागता वृद्धाऽतिशयश्रद्धाभावेन शिरो भूमौ निधाय प्रणाममकरोत्। ततश्च हस्ताञ्जलिं बद्ध्वा स्वकल्याणपथमपृच्छत्। स्वामिमहाभागश्च तां जडप्रस्तरप्रतिमापूजनं विहातुं गायत्रीजपं च कर्तुं निरदिशत्। गायत्रीमन्त्रेण सममेव "ओ३म्" जप कर्मणोऽपि दीक्षामदात्। चिरकालतः प्रथमोऽयमवसरो यदा दयालुर्दयानन्दो महिलामेकां गायत्रीजपाधिकारं प्रादात्। कृतकृत्या सदुपदेशेन कृतार्था च देवी हंसा स्वगृहं परावर्तत।

१९२४तमसंवत्सरस्थ माघमासस्यामावास्यायां सूर्यग्रहणावसरे सहस्रशो जनाः कर्णवासे स्नानार्थमागच्छन्। मुनिवरोऽपि मुग्धजनानुपदेष्टुमवसरमिममुपयुक्तममन्यत। तस्य कीर्तिचन्द्रिका पूर्वमेव सुदूरं यावत्प्रसृताऽसीत्, अतो दर्शनार्थिनः संघशः समागच्छन्तो विविधप्रश्नान् पृच्छन्तः संशयजालं त्यजन्तश्चोपदेशश्रवणानन्तरं धन्यं धन्यमवदन्। स्वामिवरश्च वसेन्दुवृक्षाधःस्थितो धर्मकर्मणोराचारविचारयोश्चोपदेशमकरोत्। गप्पाष्टकं खण्डयन् स शतशो जनान् गायत्रीमन्त्रमुपादिशत्।

**सूर्यग्रहणावसरे भोजनग्रहणविचारः–** सूर्यग्रहणावसरे कर्णवासमागतो डिबाईनगरनिवासी श्रीशिवदयालः "सूर्यग्रहणवेलायां भोजनं ग्राह्यं न वेति" स्वामिनमपृच्छत्। यथा बुभुक्षायां सत्यां भोजनं ग्राह्यम्" इति महाभागः समुदतरत्।

**यज्ञोपवीतमहत्त्वम्–** पुनश्च श्रीशिवदयालो यज्ञोपवीतविषयेऽपृच्छत्;

''भगवन्! को यज्ञोपवीतधारणाधिकारी? कोऽस्य धारणे गुणः? अधारणे च को दोषः? इति। स्वामिप्रवरः प्रत्युदतरत् ब्राह्मणक्षत्रियवैश्यबाला यज्ञोपवीताधिकारिणः; यज्ञोपवीतविहीनो वेदोक्तयज्ञकर्मणामनुष्ठानेऽनधिकारी। यज्ञसूत्रमिदमार्याणां धार्मिकचिह्नं कर्तव्यचिह्नञ्चेति।

**मण्डलाधिकारिमहोदयः—** एकदाबुलन्दशहरमण्डलाधिकारिमहोदयः कर्णवासं प्राप्तः। श्रुतपूर्वमुनिवरकीर्तिः स कर्णवासेऽपि तस्य यशोगाथामशृणोत्; तस्य परमहंसस्य तत्रैव स्थितिश्चाजानात्, तदा स पुण्यदर्शनार्थं मुनिकुटीरमागतः। मुनिमहाभागश्च कुटीराभ्यन्तरे ज्ञानध्यानमग्नोऽवर्तत। कुटीरतो दूरस्थित एवाधिकारिमहोदयो दर्शनाभ्यनुज्ञार्थं सेवकमेकं प्राहिणोत्। ''नहि साम्प्रतमवकाशः'' इति मुनिवरोऽवदत्। अधिकारिमहाभागः पुनरपि ''कदावकाशो भविता'' इति प्रश्नं न्यवेदयत्। परिप्रश्ने स्वामिमहाभागोऽधिकारिणोऽवकाशवेलामपृच्छत्। चतुर्होरानन्तरं सर्वथैव पूर्णोऽवकाश इत्यधिकारिमहोदयस्य प्रत्युत्तरेण स (मुनिवरः) कुटीराद् बहिराजगाम। मण्डलाधिकारिणं सम्मिल्य शिष्टाचारानन्तरं स तस्मै वेदमन्त्रैर्मनुस्मृतिश्लोकोद्धरणैश्च राजधर्मानुपदिशन्नुवाच महाभाग! यो हि भद्रजनः परिवारमेकमपि बिभर्ति तस्यापि शिरसि महान् कार्यभारः; दिवानिशमितस्ततः प्रधावति! रात्रावपि कदाचिज्जागरणं करोति। न हि शिरःकण्डूयनस्याप्यवकाशं लभते। पुनर्यस्य भवतः स्कन्धयोः सहस्रशो जनानां व्यवस्थाभारो दुःखदलितदीनजनसंकटनिवारणधर्मधुरिसंयुक्तस्य भवतश्चतुर्होरानन्तरं सर्वथैव पूर्णोऽवकाश इति श्रुत्वातीवाहं विस्मितः। महर्षेः स्पष्टवचनानि स्वीकृत्य कृतज्ञः प्रसन्नश्च मण्डलाधिकारी परावर्तत।

**विनैव शास्त्रार्थं पण्डितवर्गः पराजितः—** अहमदगढवासी पण्डितकमलनयनः, अलीगढवासी पण्डितसुखदेवश्च स्वीयपञ्चदशतो विंशति-यावत् सहयोगिभिः समं कांश्चिदतिक्लिष्टप्रश्नान् पृष्टुं स्वामिनमुपागच्छताम्, क्वचिद्गतं महर्षिप्रवरं प्रतीक्षमाणास्तेऽचिरादेव समागतं तमभ्युत्थानपूर्वकमभिवादनमकुर्वन्। ऋषिवरस्तृणासन उपविश्य किञ्चित्कालं ध्यानावस्थितोऽभूत्। पुनश्च लोचन उन्मिल्यागन्तुकान् वारम्वारं पृष्टव्यप्रश्नान् पृष्टुमादिदेश, परं नहि कस्यापि मुखात् शब्दमात्रमपि प्रस्फुटितम्। तदा स्वामिमहाभागस्तान् धर्ममुपादिशत्। ते हि धर्मोपदेशं शृण्वन्तः, सत्यं सत्यमिति वदन्तश्च ततः परावृत्ताः। परावर्तमानास्ते मार्गे परस्परमवदन् ''न जाने काऽद्भुतशक्तिरस्मिन् दयानन्देऽवस्थिता यन्नहि कोऽप्यस्मास्वस्याभिमुखं शब्दमात्रमपि वक्तुमशक्नोत् का कथा प्रश्नपरिप्रश्नस्य'' इति।

**अस्त्येयव्रती दयानन्दः—** पण्डितः श्रीनन्दकिशोर-उपाध्यायः कदाचित्

मुनिवरस्य पुण्यदर्शनार्थं गन्तुं प्रवृत्तः। मार्गस्थ क्षेत्रे– एकस्मिन् श्यामवर्ण-सेमफलिका निरीक्ष्य स फलिकाः काश्चिदभिगृह्य स्वामिनमुपाहरत्, परं महर्षिरवदत् "नन्दकिशोर! चौर्येण संग्रहीताः फलिका ह्येता न वयं गृह्णीमः"। श्रुत्वैतत् श्रीनन्दकिशोरः समुद्विग्नोऽपृच्छत्– भगवन्! कस्य चौर्यमहमाचरम्? विहस्य महामना अवदत् "सत्यतः ब्रूहि किं क्षेत्रस्वामिसमाज्ञया गृहीताः फलिका ह्येताः?" पण्डितवरोऽनेनातिलज्जितः स्वकर्मणः पश्चात्तापं समाचरत्।

**द्वन्द्वातीतो दयानन्दः–** शीतोष्णादिद्वन्द्वातीतो दयानन्दः। स हि नापि शैत्यं न चाप्यूष्माणमन्वभूत्। एकदा प्रचलितातितीव्रपश्चिमपवने गहनशीतमये माघमासस्य प्रातःकाले पूर्ववत् पद्मासनस्थो मुनिवरो धर्मोपदेशे प्रवृत्त आसीत्। तस्य शरीरे स्वरे वा न कोऽपि प्रकम्पः, नापि शीतप्रभावः। यावच्च श्रोतारः तूलोर्णादिनिर्मितोष्णपरिधानानि, 'रजाई'-कम्बलाद्युपधानानि च दधतोऽपि शैत्यातिशयेन स्वदेहेष्वेव संकुचिता आसन्। तेषां देहेषु प्रबलप्रकम्पः, नासाक्षिषु च श्लेष्माश्रुबिन्दवः, दन्तेषु कटकटशब्दः, हस्तपादेषु च शीतजन्यशून्यत्वमासीत्। तदैव ठाकुरगोपालसिंहोऽपृच्छत् "भगवन्! अस्माकं शरीरेषु घोरशीतजन्यः प्रबलप्रकम्पः; परं न भवतो देहे महाशीतस्यास्य कश्चिदपि प्रभावो लक्ष्यते; किमत्र कारणम्? महर्षिर्विहस्य प्रोवाच, ब्रह्मचर्यं योगाभ्यासश्चैवात्र कारणम्। ठाकुरमहोदयोऽवदत्; कथं वयं जानीमः? तदैव ब्रह्मचारी परिव्राजकः स्वहस्तांगुष्ठे जानुनोर्निधाय अतिबलेन पर्यदाम्यद् येन समस्तेऽपि शरीरे स्वेदविन्दवः प्रसृताः। चकिताः सर्वे श्रोतारः स्वामिनो योगबलं प्रशंसन्तः पूर्णविश्वस्ता बभूवुः।

**योरोपियनमहानुभावद्वयेन रात्रौ साक्षात्कारः–** शुक्लपक्षस्य शीतांशुर्विमलव्योम्नि चन्द्रिकावितानमतनोत्। सर्वत्रैव गहनशीतसाम्राज्यम्। उपरिष्टाच्चन्द्रोऽतिशीतप्रसरमवर्षत्; अधस्ताच्च गङ्गारजोऽतिशीतसम्भृत-मासीत्। एतादृशीशीतनिशायां दयानन्दो महर्षिः कर्णवासस्य गंगातटे सिकतासु पद्मासने समाधिस्थोऽवर्तत। तदैवाखेटाय द्वावांगलाधिकारिणौ तत्रागच्छताम्। एको बदायूँमण्डलाधिकारी, अपरश्च तन्मित्रं पादरी महोदयः कश्चिदासीत्। तौ च गंगायाः शीतलसिकतासु कौपीनमात्रधारिणं समाधिस्थसंन्यासिनं वीक्ष्य आश्चर्यचकितौ चिरमेकदृशाऽपश्यताम्। उन्मीलितलोचने मुनिवरे मण्डलाधि-कारिमहोदयः साश्चर्यमापृच्छत् "भगवन्! सरितस्तटे शीतलसिकतासु निशायां कौपीनमात्रधारी भवान् कथमेतादृशे शीतकालेऽवतिष्ठत इत्यावयोराश्चर्यमयो– विषयः; किन्न भवान् शीतक्लेशमनुभवति? स्वामिनि वक्तुं प्रवृत्ते ह्येव तत्पादरीमित्रमब्रवीत्; अण्डामिषादिपौष्टिकपदार्थाशनेन परिपुष्टा ह्येते कथं शीतक्लेशमनुभविष्यन्ति। तदैव विहस्य ऋषिवरोऽवदत्– मधुकरी द्विदलाशिनो

वयं कियतः पौष्टिकपदार्थानशितुं प्राप्नुमः, बह्वधिकं चेत् पयःपानं किञ्चित् शक्यम्। भवन्तो ह्येव-अण्डामिषादिपौष्टिकपदार्थान् भुञ्जन्ति, सुरापानञ्च सेवन्ते। यदि चाण्डामिषादि-अशने ह्येव शीतक्लेशबाधाऽबाधा सुनिर्भरा तदा वस्त्राणि विहाय क्षणमात्रं सिकतासु मया समं विराजताम्। महर्षिवचनेन लज्जितः पादरीमहोदयो विषयान्तरेण शीताप्रभावस्य कारणमपृच्छत्। महर्षिरुवाच; महोदय! अभ्यासो ह्यस्य कारणम्; सदैवानावृतमपि भवतो मुखं न खलु शैत्यमनुभवति; अतएव न साम्प्रतमपि भवान् मुखापिधानमावश्यकं मन्यते। मण्डलाधिकारिणावरुद्धः पादरी नान्यत्किमप्युवाच। तौ चाभिवादनं कृत्वा स्वमार्गं गतौ।

भ्रमणशीलो मुनिमहाभागो गढियाघाटस्थाने सुशोभितोऽभूत्। १९२५तम-संवत्सरे चैत्रमासस्यायं समयः। सोरोंनगरे गोस्वामी बलदेवगिरिरतितरां प्रतिष्ठित आसीत्। स्वामिनः कीर्तिकौमुदीं कर्णयोः परिपूरयन् स तत्पुण्यदर्शनोत्सुकोऽवर्तत। समीपागमनवृत्तमभिज्ञाय स नारायणचक्राङ्कितपण्डितवरैः समं स्वस्थान-अम्बागढतो मुनिवरस्य स्थानमुपगतः। वार्तालापप्रसंगे चक्राङ्कितः कतिपयक्षणेष्वेव निरुत्तरो जातः। गोस्वामी च ऋषिवरस्य विचारशैलीविद्यातपस्तेजोभिरतितरां प्रभावितः प्रतिदिनं सेवायामुपस्थितोऽभवत्। मासपर्यन्तञ्च स्वामिनः भावपूर्ण-मातिथ्यमकार्षीत्।

एकदा स्वामिकैलासपर्वतो गढियाघाटस्थाने समागच्छत्। तं वीक्ष्य स्वामिमहाभागस्तस्य कुटीरमागतो विहस्य चाब्रवीत्। एतावान् बृहत्कैलास-पर्वतोऽस्मिन् स्वल्पीयसि कुटीरे कथं समाविष्टः? कैलासपर्वतः स्वामिनं स्वसमीपासने समुपावेशयत्। हरद्वारत्यागानन्तरं वृत्तञ्चापृच्छत्। वृत्तमुपवर्णयन् मुनिवरोऽवदत्; कैलासपर्वतमहाभाग! रामानुजबल्लभादिसाम्प्रदायिकमतानि वैदिकधर्मकर्मणोःरीतिनीती पूर्णतो व्यनाशयन्। मतानामेषां विखण्डने मया समं भवान् संयुनक्तु। स्वामिकैलासपर्वतः समुदतरत्—अत्युत्तमोऽयं भवतां विचारः संकल्पश्च मतानामेषां खण्डनमावश्यकम्; सर्वथाऽहं समं भवता सहयोगार्थं प्रस्तुतः। परमेतत्कृते मे वस्तुद्वयं भवता स्वीकरणीयमास्ते। भवता हि मूर्तिपूजायाः खण्डनम्, पुराणालोचनञ्च परित्याज्यम्। स्वामिप्रवरः प्रत्यवदत्; महात्मन्! मूर्तिपूजापुराणानि चैव सम्प्रदायानामेषामाधारभूमिः। तेषां खण्डनेन विना-आर्षग्रन्थानां समादरो न भवितुं शक्यः। परिव्राजको भवान्, अतो निर्भयेन सता लोकेषु सत्यप्रचारप्रसारः कर्तव्यः, परं भीरुस्वभावो वराहमन्दिरतो बहुलार्थागमपरश्च कैलासपर्वतो महर्षिणा समं सहयोगं कर्तुं नापारयत्।

**सोरोंनगरे स्थितिः—** गोस्वामिबलदेवगिर्याग्रहेण मुनिवरः सोरोंनगरमा-

गत्य तदीय अम्बागढस्थाने ह्येव विराजमानोऽभवत्। स्वामिनः शुभागमनवृत्तम-भिज्ञायानेके भद्रपुरुषाः संघशः सम्भूय तत्पुण्यदर्शनार्थमागन्तुं प्रवृत्ताः। बहवश्च-क्राङ्किता अपि वादविवादार्थमाययुः; परमर्धघटिकामात्रमपि तत्समक्षं स्थातुं नाशक्नुवन्। अनेन प्रभावितश्चक्राङ्कितो गोविन्दरामपण्डितवरः स्वमतं परित्यज्य स्वामिनः शिक्षामग्रहीत्।

**शिष्यतां गतोऽङ्गदः शास्त्री—** सोरोंसमीपस्थ बदरियाग्रामवासी पण्डितोऽङ्गदरामशास्त्री संस्कृतभाषायाः विद्वद्धुरन्धरो व्याकरणे निष्णातश्चावर्तत। विशिष्टविद्वांसोऽपि तेन समं शास्त्रार्थं कर्तुमुत्साहं नायुञ्जन्। स हि शालिग्राम-प्रस्तरपूजको भागवतकथावाचकश्चासीत्। स्वामिनः प्रशंसां शृण्वन् सोऽपि शास्त्रार्था-भिलाषुको महर्षिमुपागच्छत्। मूर्तिपूजाविषये विचारः प्रचलितः। ऋषिवरः प्रबल-युक्तिप्रमाणैस्तथामूर्तिपूजामखण्डयद् यत् शास्त्रिमहोदयः किमपि प्रतियुक्तिप्रमाणं प्रस्थापयितुं समर्थो नाभवत्। स्वामिमहाभागो भागवतमपि पूर्णतः समालोचयन् तस्यानेकधा भ्रान्तीश्च प्रादर्शयत्। श्रीशास्त्री हठधर्मी दुराग्रही चापि नासीत्, अतः स स्वपराजयस्वीकरणेऽपि नालज्जत। स हि सत्येन मनसा स्वामिनोऽभिमतं स्वीकृत्य स्वपूज्यप्रस्तरमूर्तीर्गंगायां विससर्ज। मनसा च भागवतकथावाचनमपि परित्यक्तुं प्रत्यजानात्। तमेवानुकुर्वन् गोस्वामी बलदेवगिरिरपि स्वमूर्तीर्गंगायां प्राक्षिपत्। अन्येऽपि सहस्रशो जना अङ्गदशास्त्रिणमनुकुर्वन्तो मूर्तिपूजां पर्यत्यजन्, सन्ध्योपासनाञ्च प्रारभन्त। वृन्दावनस्य रंगाचार्यः प्रतिवर्षं सोरोंनगरमागत्य लोकान् चक्राङ्कितानकार्षीत्। तस्य च तत्रागमनं पूर्णतः प्रतिरुद्धम्।

**दयानन्दभ्रान्त्या साधोरेकस्य गंगायां निमज्जनम्—** स्वामिनस्तीव्रा-लोचनया मूर्तिपूजकदलं स्तब्धं रुष्टश्चाभवत्। केचनोपद्रविणस्तु स्वामिने विषं प्रदातुं तं जलमग्नं वा कर्तुं षड्यन्त्रमरचयन्। एकस्यां रात्रौ स्वामिमहाभागं गंगायां निमज्जयितुं केचन षड्यन्त्रकारिणः समायाताः। संयोगवशात्तत्रैव समीपे साधुरेकः ससुखमशेत। ते हि तमेव दयानन्दं मन्यमानाः सखट्वम्-(सशयनीयम्)-उत्थाय गंगाया मध्यधारायां प्राक्षिपन्। यदा हि स "परिरक्षत, परिरक्षत," इत्याक्रन्दत्; तदैव ते दयानन्दभ्रमेण गंगायां प्रक्षिप्तोऽयमन्यः कश्चित-संन्यासीति जानन्तस्तं बहिर्निरागमयन्।

**क्रुद्धजट्टो विनीतभक्तोऽभवत्—** एकदा प्रवचनप्रवृत्ते स्वामिमहाभागे संलग्नमनसा शृण्वत्सु चानेकश्रोतृवरेषु मल्ल इव हृष्टपुष्टः स्कन्धधृतस्थूल-दण्डोऽतिक्रुद्धो जट्टः कश्चित् जनसमूहं परिलंघयन् स्वामिनोऽभिमुखमागच्छत्। रोषस्तम्भितमुखः, आरक्तलोचनः, उत्तनितभृकुटिभागः, मस्तकवलिधरः, स ओष्ठपुटेचर्वयन् दन्तांश्च पिंशन्नुवाच— अरे संन्यासिन्। ठकुरपूजां खण्डयसि,

मातरं गंगां विनिन्दसि, देवांश्च विगर्हसि, सत्वरं ब्रूहि, कस्मिन्नंगे स्थूलदण्डमिमं प्रहरन् मृत्युमुखे त्वां सम्प्रेषयेयम्? श्रुत्वैतद् जनसभा विचलिता; परं महर्षेर्गाम्भीर्यं लेशतोऽपि न्यूनतां न गतम्। शान्तभावेन स्मयमानस्य तस्य मुखे स्वल्पोऽप्याकारविभ्रमो न दृष्टः। स हि जट्टमुवाच, भद्र ! तव मते सद्धर्मप्रचारो यदि मेऽपराधस्तदा मम मस्तिष्कमेवास्य प्रेरकम्; इदमेव मामसत्यालोचनाय प्रेरयति, अतो यदि त्वमपराधिनं दण्डयितुं प्रवर्तसे तर्हि मम मस्तिष्के ह्येव दण्डप्रहारं कुरु। एतत्सममेव मुनिवरस्तस्य नेत्रयोर्निजनेत्रज्योतिषापातं विधाय दिव्यदृशा तस्याक्ष्णोरपश्यत्। यथा दीव्यन्ती विद्युत्तत्क्षणमेव प्रलीयते, यथा च प्रदहन्नग्नेरङ्गारो जलधाराप्रपातेन प्रशाम्यति तथैव तुरन्तमेव स बलिष्ठजट्टोऽपि प्रशान्तो महर्षेश्चरणावग्रहीत्; अविरलाश्रुधाराश्च विमुञ्चन् स्वापराधस्य क्षमामयाचत। महर्षिश्च तमाश्वासयत्; उवाच च न त्वया कश्चिदपराधः समाचरितः। प्रहारकरणेनैव काचिदपराधवृत्तिरभवत्, अतो न व्यर्थं परिदेवनं कार्यम्। गच्छ, परमप्रभुः सुमार्गं त्वां प्रदर्शयेत्। दृश्यमिदं दर्शं दर्शं सकलजनवर्गो महर्षेः सहनशीलतामतितरां प्रशंसन् परस्परमवदत् "बहवः साधवः सन्तजनाश्च सोरोंनगरं सम्प्राप्ताः परं नैतादृशो ज्ञानशीलो निर्भयः, क्षमावांश्च कश्चिद् दृष्टिपथमागतः।"

**वेदप्रचारकार्येऽसीमानन्दः**— साधुर्मायाराम एको महर्षिमवदत्-दयानन्दमहाभाग! किमिति खण्डनमण्डनप्रपञ्चे ग्रस्तः, मामिव सानन्दं भोजनपानं विदधत् ससुखं विराजस्व। केन कारणेन केषाञ्चिन्मन्तव्यविरोधेन वैमनस्यं सञ्चारयसि। महर्षिः समुदतरत्; भद्र! ब्रह्मानन्दे वयं निवसामोऽसीमोऽतुलनीयश्चानन्दो वेदप्रचारप्रसारे सम्प्राप्यते।

**रावकर्णसिंहस्य खडगः**— १९२५तमसंवत्सरस्य ज्येष्ठमासे स्वामिमहाभागः पुनः कर्णवासमागतः स्वपुरातनकुटीरं सुशोभितमकरोत्। तदा हि गंगास्नानमेलकं प्रचलितमासीद् यस्मिन् सहस्रशो नरनारीणां सम्मर्दोऽभूत्। रावकर्णसिंहोऽपि स्नानार्थमायातः। स्वामिनः कुटीरपार्श्वे ह्येव तस्य स्थितिरासीत्। रात्रौ तत्र प्रचलितराससमारम्भे कतिपयपण्डितवराः स्वामिनमपि समानेतुमायाताः; परं "न वयमेतादृशे निन्दनीयकर्मणि कदापि सम्मिलितुं शक्नुमः" इति मुनिवरः समुदतरत्। स्वमहापुरुषाणामनुकृतिरचनं सर्वथैव शोकजनकं लज्जास्पदञ्च। दिवसान्तरे पण्डितवराः स्वामिनः प्रकथनं स्ववचनैः प्रक्षिपन्तो रावमहोदयमुत्तेजितमकुर्वन्। स चापि रोषाविष्टः स्वभृत्यैः पण्डितजनैश्च समं महर्षेः पर्णकुटीरमाक्राम्यत्। सायन्तनवेलायां प्रवचनपरायणे मुनिवरेऽतीवमुग्धमनसा सदुपदेशामृतपानपरे च श्रोतृवर्गेऽसभ्यभावेन प्रगर्जन्ती रावसेना तत्र सम्प्राप्ता। शिष्टाचाराद्यात्मकवाचामादानप्रदानानन्तरं निम्न प्रकारेण तयोः संवादः प्रचलितः।

स्वामिमहाभागः – स्वागतम्, विराजस्व।

रावमहोदयः – क्वोपविशेम?

स्वामी – (तस्याहंकारं निरीक्ष्य) यत्र च रोचते भवते।

रावः –भवदुपवेशनस्थाने ह्येव वयमुपवेष्टास्मः।

स्वामी – (स्वकटं परिहरन्) अत्रैव भवानुपविशतु।

रावः – कथं भवन्तो राससमारम्भे नोपस्थिताः?

स्वामी – भवदभिमुखमेव मलिनजना युष्मत्पूज्यपुरुषाणां गर्हितानुकृतीः विदधति; तत्रैवोपविष्टा भवन्तस्ता गर्हितानुकृतीः पश्यन्तः कथं न लज्जन्ते? कियद्गौरवाः क्षत्रिया यूयम्? जनसाधारणस्यापि कस्यचित् पितृन्-अनुकृतिरूपेण कश्चिन्नर्तयेच्चेत् सोऽपि कियदभद्रमिदं मन्यते; भवतोऽप्यनुकृतिं विधाय कश्चिन्नर्तयेत्; अपि सह्यं भविष्यति भवते?

रावः –श्रुतमेतत्, यदीश्वरावतारान् गंगामपि च भवान् विगर्हति मत्समक्षं चेदेतादृशं निन्दाजनकं किञ्चित्प्रस्तुतम्; अतीवदुर्वर्तावमाचरिष्यामि; न तद् भवते सम्मानास्पदं भविता।

स्वामी – नाहं किमपि विनिन्दामि। यादृशं यद् वस्तुजातं तथैव तत्प्रस्तौमि। गंगाऽपि यावती यादृशी च वर्तते तथैव तामुपवर्णयामि, निर्भयोऽहं सत्यकथने।

रावः – कियती गंगा?

स्वामी – (स्वकमण्डलुमुत्थाय) एतावज्जलं मत्कृते पर्याप्तम्; अतो ह्येतावत्येव मत्कृते गंगा।

रावः – **गंगा गंगेति यो ब्रूयाद् योजनानां शतैरपि।**
**मुच्यते सर्वपापेभ्यो विष्णुलोकं स गच्छति ।**

प्रभृतिश्लोकेषु नामस्मरण-दर्शन-कीर्तन-स्पर्शनादिभिर्यत्पापनाशादिकमुपवर्णितं किमसत्यं तत्सर्वम्?

स्वामी – साधारणजनैर्निर्मितानि श्लोकान्येतानि कपोलकल्पितानि; माहात्म्यजालश्चासत्यं सर्वम्; पापनाशो मोक्षश्च वेदानुकूलाचरणेनैव सम्भविष्यति; नान्यथा।

श्रुत्वैतद् रावोऽतीवरोषाविष्टो जातः। महर्षिःरावमपृच्छत्, रावमहाभाग! कीदृशीयं रेखा युष्मद् भालस्थले वर्तते?

रावः – श्रीरियम्, चाण्डालो हि स य इमां न धारयति।

स्वामी – कदाप्रभृति वैष्णवो भवान् जातः?

रावः – कतिपयवर्षैः।

स्वामी – किं भवत्पितरोऽपि वैष्णवसम्प्रदाये दीक्षिता अभूवन्?

रावः – (रोषाविष्टः) नहि।

स्वामी – तदेवं भवत्कथनानुरूपमेव भवत्पितरः कियद् वर्षाणि पूर्वं भवानपि च सर्वे चाण्डालाः संवृत्ताः।

श्रुत्वैतदतीवक्रुद्धः करधृतासिः रावोऽवदत्, सौजन्येन ब्रूहि।

महर्षिरवदत्– किं क्षणे क्षणेऽसिं सञ्चालयसि। शास्त्रार्थकामश्चेत् स्वगुरुं रंगाचार्यमुपस्थापयतु, प्रस्तुता वयम्, अथ शस्त्रार्थे तेऽभिलाषश्चेत्; किं संन्यासिना, जोधपुरजयपुरनृपतीन् प्राप्नुहि।

अथ परिसमाप्ता शिष्टाचारमर्यादा; राव आत्मानं व्यस्मरत्; नेत्राभ्यां समुद्गताः स्फुलिंगाः, बद्धे हस्तमुष्टी, स्फुरिते चोष्टपुटे, विरूपतां बिभ्रत् स उचितानुचितविचारजातं विस्मृत्य दुर्वचनानि वर्षन् खड्गहस्तः स्वामिनोऽभिमुखं प्राचलत्। महर्षिश्च तं दुर्वृत्तम् ''अरे धूर्त!'' इति सम्बोधयन् स्वहस्तेन पराङ्मुखं प्रचिक्षेप। पतितः रावः पुनरुत्थितश्च चतुर्गुणावेशेन महर्षिप्रवरेऽसिना प्रहर्तुमुद्यतोऽभूत्। परं स हि प्रहर्तुमिच्छन्नेव महर्षिणा स्वहस्तेन धृतः, तदसिं चोद्गृह्य भूमौ निदधत् स्वहस्तदमनेन शकलद्वयमकरोत्। पुनश्च तं हस्तेनाभिगृह्यावदत्, किमहमपि त्वामाततायिनं प्रहारेण परावर्तयामीति वाञ्छसि? रावमुखं पीतवर्णं जातम्, शरीरस्थितिश्च विमूर्च्छितेवाभवत्। तदैव मुनिवरोऽवदत्; संन्यासिधर्मतो नाहमत्याचारेण क्षुब्धस्तेऽनिष्टं चिन्तयिष्यामि; याहि सुमतिं ते सर्वेश्वरो वितरेत्, ऋषिवरः खड्गशकलद्वयं प्रक्षिप्य रावं विससर्ज। गते कर्णसिंहे न किमपि जातमिव मन्यमानः श्रीमहाराजः पुनः प्रशान्तमनसा धर्मप्रवचने प्रवृत्तः।

शरत्पूर्णिमावसरे रावकर्णसिंहः पुनरपि गंगास्नानार्थमायातः। स्वामिप्रवरश्च तत्रैव व्यराजत। तञ्च पूर्ववदेव खण्डनमण्डने प्रवृत्तमभिलक्ष्य तस्य दुर्भावाः पुनर्जागृता अभूवन्। स ह्येकदा सेवकत्रयं स्वामिनः शिरश्छेदाय प्राहिणोत्। तेषां पदध्वनिभिर्जागृतो मुनिवरः प्रवेगेन हुंकारमकरोत्। तेन त्रस्ता घातका भयविह्वलास्तत्रैव पतिताः, कथमपि सचेतसश्च ततः पलायिताः। एतामधमलीलामनुभवन्नृषिवरः 'अम्बागढम्' प्रयातः।

एकदा साधुरेको गंगातीरे कमण्डलुं परिमार्ज्य स्ववस्त्रप्रक्षालने प्रवृत्तः। स हि प्रवणो मायावादी। साधुः स्वामिनं सम्बोधयन्नुवाच, दयानन्दमहाभाग!

एतादृशो विरक्तः, सर्वत्यागी, परमहंसश्च भवान् किमिति खण्डनमण्डनप्रवृत्ति-जटिलजालग्रस्तोऽभिवर्तते? कथन्न भवान् निर्लिप्त इव समाचरति। श्रीमहाराजः स्मयमानोऽभाषत—सर्वत्र प्रवृत्ता अपि निर्लिप्ता एव वयं महाभाग! शास्त्रीयप्रवृत्तिश्च प्रजाप्रेमप्रेरितैः सर्वैरपि विधेयैव। साधुरुवाच; प्रजाप्रेम नाम कोऽयं नवः प्रपञ्चजालः? महाभाग! आत्मने स्निह्यतु, यश्च श्रुतेरादेशः। तदैव स मैत्रेयीयाज्ञवल्क्य संवादवाक्यान्यपि समुदहरत्। महात्मन्! केन समं भवान् स्वप्रेमभावं संयोजयति? इति स्वामिनः प्रश्ने "आत्मना समम्" इति साधुरुदतरत्। "क्व च भवत्प्रेममय आत्मा विराजते" इति स्वामिनः प्रश्ने च साधुराह "राजतोऽकिञ्चनपर्यन्तं करितः कीटपर्यन्तञ्च यावद् बृहल्लघुरूपं जगद् वर्तते, सर्वत्रैव-आत्मा परिपूर्णः"। श्री महाराजः पुनरपृच्छत् "सकलप्राणिजगद् व्यापिने-आत्मने भवान् स्निह्यति?"साधुः पर्यपृच्छत्; किमहं मिथ्यावचनमवदम्? इति भवतां सन्देहः। ततोऽतिगम्भीरभावेन महर्षिरवदत् महात्मन्! न भवन्तः तस्मै महदात्मने स्निह्यन्ति। भवन्तस्तु केवलं स्वभिक्षां समुज्ज्वलवासांसि चैव चिन्तयन्ति। स्वतनुभरणपोषणमेव बहुमन्यन्ते। किन्नाम भवन्तस्तान् दीनहीनजनानपि कदाचिद् विचिन्तयन्ति ये च भवद्राष्ट्रे स्थिता अपि लक्षशः क्षुधाचितासु पतिता दिवानिशं द्वादशसु मासेष्वन्तर्दग्धा भस्मसाद् भवन्ति। भवद् राष्ट्रे ह्येव सहस्रश आजीवनमुदरपूर्तिकरमन्नमपि नाधिगच्छन्ति। शरीरेषु तेषां मलिनानि जीर्णशीर्णानि च वस्त्रनामधारीणि कुचैलशकलानि संलग्नानि। लक्षशश्च निर्धना दीनहीनाकिञ्चनग्रामीणजना अजाविसमानाः कुत्सितकर्दमे कर्कटनिचये च ग्रस्ता मलिनघासकुटीरेषु कथञ्चन जीवनयापनं कुर्वन्ति। कियन्तश्च दुःखग्रस्ता एतादृशा अपि भारतवासिनः सन्ति येषां न कोऽपि परिपालकः परिपोषको वा वर्तते। बहवश्च कुसमये राजपथेषु पतिताः पादाहताः मृत्युमुखे पतन्ति, परं न हि तेषां कोऽपि हितचिन्तकः। महात्मन्! यदि ह्यात्मना विराडात्मना समं च भवतो प्रेमभावः संयुक्तस्तदा स्वाङ्गानीव तेषामपि संग्रहणमा-त्मना संयोजनञ्चानिवार्यम्; स्वक्षुधानिवृत्तिरिव तेषामपि क्षुधानिवृतिर्विचिन्त-नीया प्रभुप्रेमी न कस्मैचिज्जुगुप्सति न चोत्तमाधम-(उच्चनीच)-भेदं कल्पयति। स हि स्वात्मन इव परेषामपि दुःखक्लेशान् स्वपुरुषार्थेन निवारयति। एतादृशा ज्ञानिनो ह्येव वस्तुत आत्मप्रेमिपदाधिकारिणः सन्ति। सर्वमिदमुद्बोधक-सन्देशं संश्रुत्य साधुवरः स्वामिनश्चरणावभिगृह्य स्वापराधस्य क्षमामयाचत।

**व्याकरणस्य सूर्योऽस्तं गतः—** अम्बागढ-सरदौलनगरवासिनो धर्मोपदेशेनोपकुर्वन् महर्षिप्रवरः शाहबाजपुरमासीनः। १९२५तमसंवत्सर-स्याश्विनकृष्णत्रयोदश्यां गुरुवरविरजानन्दस्य दण्डिनो देहावसानवृत्तमभिज्ञाय मुनिवरस्य मुखकमलं म्लानमभूत्। किञ्चित्कालमतीवावसन्नः सोऽवदत्— हा

हन्त! दुर्भाग्येन व्याकरणसूर्योऽस्तं गतः। पूज्यगुरुवरस्य वियोगे स तस्मिन् दिने जलमपि नागृह्णात्।

**दयानन्दस्य शिरश्छेदप्रयासः–** अत्रापि महर्षेर्जीवनं समापयितुं षड्यन्त्रमक्रियत। वैरागिद्वयं गंगापारतः ठाकुरगंगासिंहमनुप्राप्तमकथयतां च, आवां गप्पाष्टकस्यास्य दयानन्दस्य शिरश्छेत्तुमिच्छावः, भवान् स्वखड्गमावाभ्यां प्रददातु। ठाकुरमहोदयश्च मुनिवरस्य धर्मोपदेशं श्रुत्वा तस्य परमश्रद्धालुः भक्तोऽभवत्। स च वैरागिणौ निर्भर्त्सयन्नुवाच, अधमौ युवाम्, महर्षिर्महान् देवपुरुषः। यदि युवाभ्यां पुनरपि किञ्चिदेतद् विषय उक्तं तदाहं युवयोरेव शिरसी छेत्स्यामि। तौ धिक्कृत्य निर्भर्त्स्य च शस्त्रसुसज्जितः ठाकुरमहोदयः निजसहयोगिभिः समं महर्षिमनुप्राप्य वैरागिणोर्जघन्यषड्यन्त्रञ्च न्यवेदयत्। मुनिवरश्चोदासीनभावेनोवाच, किं तयोः सामर्थ्यम्; यद् हन्यातां माम्, इति, परं पूर्ववत् सचिन्तः ठाकुरमहोदयः सकलां रात्रिं महर्षिणा निषिद्धोऽपि तस्य संरक्षणे प्रहरीव सावधानः स्थितः।

**ककौड़ानगरे–** शाहबाजपुरतः कादिरगञ्ज-नरदौलीप्रभृतिनगरेषु धर्मप्रचारं कुर्वन् १९२५तमसंवत्सरस्य कार्तिकशुक्लत्रयोदश्यां महर्षिः ककौड़ानगरस्य मेलके धर्मप्रचारार्थमगच्छत्। आगामिनि दिवसे च गोस्वामिबलदेवगिरिरपि तत्र प्राप्तः। स च श्रीमहाराजस्य स्थले विस्तृतवितानं व्यतनोत्; उपवेशनार्थञ्चोच्चासनमुच्चोपस्तरणञ्च विस्तार्य तत्र महर्षिमुपावेशयत्। सर्वत्र सम्मेलने श्रीमहाराजस्य धर्मोपदेशानामेव प्रशंसनमासीत्। शतशो वैष्णवा अपि तत्रागत्य प्रशान्तमौनभावेनैव परावृत्ताः। पादरिणो मोहम्मदीयाश्चापि विविधप्रश्नान् पृच्छन्तो महर्षेर्वाक्प्रहारसहनेऽशक्ता आसन्। एकस्याङ्गलपादरिणो धर्मविषयकप्रश्नैः सममेव निम्नरूपेणाऽपि स्वामिप्रवरेण समं प्रश्नोत्तर-संवादोऽभवत्—

पादरी – कथं भवान् प्रायो नग्नः कौपीनमात्रधरस्तिष्ठिति?

स्वामी – एतेन सुखमहमधिगच्छामि। भवद् वस्त्रेषु रजःपातेन तानि मलिनानि भवन्ति; यावच्च मदीयदेहे रजः प्रपतेच्चेत् न काऽपि हानिः, यतः पूर्वमेवायं रजोलिप्तः।

पादरी – कथं भवानेतावान् हृष्टपुष्टः स्वस्थश्च वर्तते?

स्वामी – सन्तोषो ह्यत्र कारणम्।

पादरी – (सव्यङ्ग्यम्) पौष्टिकपदार्थान् भवान् सेवते, इति प्रतीयते।

स्वामी – मया समं वनेऽस्मिन् तिष्ठन्तः पश्यन्तु; किमहमश्नामीति।

पण्डित उमादत्तः कतिपयपण्डितवरैः समं समागत्य मूर्तिपूजायां वादं

प्रारभत; परं क्षणेष्वेव युक्तिप्रस्थापनेऽसमर्थः प्रस्खलितश्च। युक्तिप्रमाणाभावे स प्रोवाच "भिल्ल एकलव्यो द्रोणाचार्यस्य मूर्तिं विधाय तस्य पूजामकरोत्, धनुर्विद्यायां प्रवीणश्च जातोऽतो मूर्तिपूजनं सिद्धम्; अभीष्टप्राप्तिश्च तेन शक्या"। महर्षिरुवाच– अज्ञानिनो भीलजातीयस्य कस्यचिदज्ञानमयं कर्म शास्त्रवादे प्रमाणं न भवति। सभ्यशिक्षितं कमपि समुद्धर।

सम्मिलितुमागतः कायमगञ्जवासी पण्डितश्यामलालः श्रीमहाराजेन पृष्टः "क्व भवान् निवसति? का च कार्यप्रवृत्तिः? स प्रत्युवाच; भगवन्! कायमगञ्जनगरे निवसामि, पुराणकथावाचनञ्च करोमि, साम्प्रतं ब्रह्मवैवर्त-पुराणस्य श्रीकृष्णखण्डः प्रवर्तते। श्रीमहाराजो विहस्योवाच; शीघ्रं परिसमाप्नोतु; विंशतिदिवसेष्वेव जनोऽयं तत्र भविता; तेन हानिप्रसंगस्ते स्यात्।

**कायमगञ्जनगरे स्थितिः**– परिसमाप्ते मेलके श्रीबलदेवगिरिप्रभृतीन् सत्स्नेहिनः प्रस्थाप्य मुनिवरस्ततः परिव्रजन् १९२५तमसंवत्सरस्य मार्गशीर्ष मासे कायमगञ्जनगरे श्रीहरिशंकरपाण्डेयस्य शिवालये विरराज। नात्र कश्चित् शास्त्रार्थविशेषोऽभवत्। केचन पौराणिकजनाः स्वशंकानिवृत्तिं कुर्वन्तः परावृत्ताः।

**उन्नतस्थानोपवेशनेन न कोऽपि महिमानं लभते**– एकदा केचन क्रिश्चीनजनाः स्वामिनः कुटीरमुपगम्येतस्तत उन्नतस्थानेषूपविष्टाः, महर्षेर्भक्त-जनाश्चानुचितमिदममन्यन्त, परं श्रीमहाराजोऽवदत्—नहि कश्चिदुन्नतस्थानोपविष्टो महिमानं विन्दति; न च तस्योन्नतस्थानोपवेशनेनान्यो लघुतां गच्छति; यद्युन्नता-वनतस्थानोपवेशनस्य स्थितिमेव गौरवलाघवयोर्मापदण्डं मन्यामहे तदा गगन-चारिणः खगाः सर्वोच्चतां लप्स्यन्ते। पादरिभिः पृष्टश्च महर्षिरवदत्– "नहि. पापानि क्षमया परिमार्जितानि भवन्ति"। भागवतम्, शिवालयम्, प्रस्तरशिव-पूजनमपि श्रीमहाराजो व्यखण्डयत्। कश्चिदाह; वयं हि सत्यनारायणस्य कथायै रुप्यकस्यैकस्य मान्यतां मन्यामहे, तेनावश्यमेव कार्यसिद्धिर्जायते, कथं भवन्तो मिथ्यारोपणं कुर्वन्ति। महर्षिरुवाच – वयं हि रुप्यकपञ्चकैर्लक्षपतयो भवितुं मान्यतां मन्यामहे; किमेतेन लक्षपतयो भविष्यामः?

**फर्रुखावादे स्थितिः**– कायमगञ्जतः प्रस्थाय महर्षिप्रवरः शम्साबादमनु-भ्रमन् १९२५तमसंवत्सरस्य पौषमासे फर्रुखाबादनगरं संप्राप्य श्रेष्ठिजगन्नाथस्य विश्रान्तघाटस्थले विरराज। तत्रागतस्यैव श्रीमहाराजस्य कीर्तिकौमुदी सर्वत्र प्रसृता। सहस्रशो जनाः प्रतिदिनमागच्छन्तः, प्रश्नान् पृच्छन्तश्च भ्रमजालं विहाय सन्ध्योपासनां गायत्रीञ्चाशिक्षन्त। दार्शनिको विद्वान् पण्डितः श्रीविश्वम्भरदासो महर्षेः सदुपदेशैर्विमुग्धस्तस्यानुगतोऽभवत्।

स्वामिमहाभागस्य प्रबलालोचनप्रभावेणानेकशो जनाः प्रस्तरमूर्तिपूजनं

पर्यत्यजन्। अनेके पण्डितवरा वैश्याश्च तस्य करकमलाभ्यां विधिपूर्वकं पवित्रयज्ञोपवीतमगृह्णन्। केचन पौराणिकपण्डिताश्चावदन्; भगवन्! अनिष्टकरमिदं कर्म, न चास्मिन् कर्मणि गणेशपूजनं सम्पन्नम्, अन्यच्च शुक्रमपि साम्प्रतमस्तंगतं वर्तते। महर्षिरुवाच– वेदविरुद्धं गणेशपूजनम्, अतस्तस्याभावो न कदाप्यनिष्टकरः; शुक्रश्चास्माकं परं ब्रह्म; "**तदेव शुक्रस्तद् ब्रह्म। यजुः० ३२।१**" तच्च न कदाप्यस्तं गच्छति।

कायमगञ्जनिवासी पण्डितबलदेवप्रसादः कदाचिदपृच्छत् "भगवन्! नृपादिक्षत्रियजना हिंस्रजीवान् घ्नन्ति, कथं नाऽस्मिन् कर्मणि पापं मन्यन्ते? महर्षिरुदतरत्, हिंस्रजीववधेन न केषाञ्चित् काऽपि हानिः, अतस्तेषां बधे न पापं परिगण्यते। "भवन्मते किं नाम पापम्? इति बलदेवपण्डितेन पुनः पृष्टः श्रीमहाराज उवाच "विषयेऽस्मिन् हानिमेव पापं मन्ये"इति। बलदेवः पुनरपृच्छत् "एवमनुपयोगिपशूनां वृद्धजनानां वधेऽपि न किमपि पापं विशंकनीयम्?" महर्षिरुवाच कृतघ्नतारूपं पापमत्र प्रवर्तते।

फर्रुखाबादनगरे केचनैतादृशा अपि जना निवसन्ति; यांश्च नगरवासिनः "साध"शब्देन सम्बोधयन्ति। एते हि भद्रगृहेषु गृहकृत्यानि कुर्वन्तः स्वगृहेषु सौम्यतया निवसन्ति; न चैतेषां करस्पृष्टं भोजनं भोज्यपदार्थं वा ब्राह्मणवैश्याद– योऽभिगृह्णन्ति। एकदा साधवर्गीयः कश्चित् श्रद्धालुर्जनः कर्डिकाभातपूर्णां स्थालीमेकां परमश्रद्धया स्वामिनमुपाहरत्; श्रीमहाराजश्च श्रद्धापूरितं तदन्नं प्रसन्नतयाऽग्रहीत्। एतदवलोक्यासन्तुष्टाः सभास्थिताः ब्राह्मणाः प्राब्रुवन्; "भगवन्! साधकरनिर्मितभोजनास्वादनेन भ्रष्टा यूयम्; नैतदनुचितं भवतानुष्ठेयमासीत्" इति। विहस्य श्रीमहाराजोऽवदत्; द्विविधमन्नं दूषितं भवति; कस्मैचिद्दुःखं प्रदाय प्राप्तम्, किञ्चिन्मलिनवस्तुपतितं मिश्रितं वा; एतेषामन्नं हि श्रमार्जितार्थसञ्चित-मतिपवित्रञ्च, अतो नैतेषामन्नग्रहणे लेशतोऽपि दोषः। साधजातीयः कश्चित्स्वा-मिनमपृच्छत्– भगवन्! किं मनुष्यैः स्वकल्याणाय कर्तव्यम्? महर्षिरकथयत्, परमेश्वरः परमदयालुः; मनुष्यैरपि प्राणिवर्गं प्रति दयाभावः प्रदर्शयितव्यः। सत्यस्वरूपो हि परमः प्रभुः, मनुष्यैरपि सत्यमेव मन्तव्यम्, भाषणीयम्, आचरणीयञ्चेति।

**यवनैः समं वार्तालापः**– एकदा तृतीययामे चतुष्पञ्च संख्याका यवनजनाः स्वामिनं सम्प्राप्यापृच्छन्; "भगवन्! भवन्मते परमेश्वरः-अस्मदुद्धाराय श्रीमोहम्मदं सम्प्रेषितवान् न वा?" प्रत्युत्तरप्रदानात्प्राक् वारत्रयं मुनिवरस्तानवदत् "नास्मत्प्रत्युत्तरेण भवद्भिरप्रसन्नैर्भाव्यम्, न वयं मोहम्मदं भद्रपुरुषं मन्यामहे; न च तमनुकुर्वद्भिर्भवद्भिः समुचितमाचरितम्। यावत्

शिखाकेशाः कर्तितास्तदैतावत् प्रलम्बमानैर्मुखश्मश्रुभिः कोऽर्थः?'

अत्र हि श्रीमहाराजेन समं शास्त्रार्थकृते ब्राह्मणाः श्रीगोपालशास्त्रिणं समामन्त्रयन्। पण्डितपीताम्बरदासश्च मध्यस्थोऽभूत्। शास्त्रिप्रवरः "**देवताभ्यर्चनं चैव समिदाधानमेव च**" इति मनुस्मृतेः श्लोकमिमं पठन् "देवता" शब्दस्य "प्रतिमा" इत्यर्थमवदत्। महर्षिश्च युक्तिभिः प्रकरणक्रमेण च "देवतार्चन" पदस्यार्थम् "अग्निहोत्रमतिथिसत्कारश्च" इति प्रत्यपादयत्।

ततश्च शास्त्रिप्रवरः किञ्चित्कालमितस्ततो वादं विवादं कुर्वन्नन्ततः सभास्थलात् पलायितः। पराजयेनानेन लज्जितश्च स कतिचिद् ब्राह्मणैः समं काशी प्राप्तः, मूर्तिपूजासमर्थने च काशीस्थपण्डितप्रवरहस्ताक्षरैर्युतं व्यवस्थापत्रमेकं समादाय फर्रुखाबादे स्वामिनः कुटीरसमीपमेव ध्वजारोहणं विधाय व्यवस्थापत्रमश्रावयत्। अनेन हि तत्र सहस्रशो जनानां सम्मर्दो जातः, कोलाहलश्चाभवत्। विस्तृतस्थले शास्त्रार्थं कर्तुं स्वामिनः पार्श्वेऽपि वारंवारं सन्देशं प्राहिणोत्। तेषां छलछद्माभिज्ञो मुनिवरस्तान् सन्दिदेश "शास्त्रार्थे समीहा चेत् किमिति-अधःस्थिता अनर्गलं वदत; कथन्नोपर्यस्मत्स्थान आगच्छत" इति, परं प्रतिसन्देशे गोपालशास्त्री प्रावदत्, नाहमुपरि स्वामिनो निवासमभिगन्तास्मि, तेन हि कीलितं विश्रान्तघाटस्थानमतो हि तत्र गतस्य मे निश्चितः पराजयः। कोलाहलस्य वृत्तमभिज्ञाय मण्डलाधिकारी नगररक्षकं तत्र सम्प्रैषयत्। स हि स्वामिनं प्राप्यापृच्छत्, भद्रसंन्यासिन्! कीदृशोऽयं कोलाहलः? महर्षिरकथयत्; स्वस्थाने स्थिता वयम्; न कस्मैचिदपि कटुवचनं ब्रूमो न च केनापि समं विवदामः। राजकर्मचारिरूपेण युष्मत्कर्तव्यमेतत्, यत्सम्बद्धजनान् पृच्छत ये च वस्तुतः कोलाहलपराः। नगररक्षको वस्तुस्थितिं विज्ञाय स्वामिनं संरक्षितुं रक्षकद्वयं नियोजयामास। गोपालशास्त्रिणञ्च समाहूय तथानिरभर्त्सयत् यद् स भयभीतो नगरमेव विहाय पलायितः।

**सत्यमेव वक्ष्यामः**– गोपालशास्त्रिकृतकुचक्रतो दिनद्वयत्रयानन्तरं तस्य सहयोगी ज्वालाप्रसादो मदिरोन्मत्तो वृसीमेकामादाय स्वामिनः स्थानमागत्य वृसीं निधायोपविष्टोऽवाच्यवादांश्च वक्तुमारभत। तत्रोपस्थितजनाश्च तमसभ्याचरणतो न्यवारयन्; परं न तस्य दुर्वचनप्रवाहः प्रशान्तः। मणिलालप्रभृतयः स्वामिनः सेवकाः स्वावेशं दमयितुं नाशक्नुवन्। "मदिरोन्मत्तोऽयं, क्षन्तव्यः" इति प्रब्रुवति ह्येव स्वामिनि ते तमतिततरामताडयन्; तस्य वृसीञ्च भस्मसादकुर्वन्। अन्यस्मिन् दिने लाला जगन्नाथो महर्षिमुपगम्य वृत्तञ्चैतदभिज्ञाय प्रोवाच – भगवन्! यदि स दुर्जनो राजद्वारमुपगम्य भवत्सेवकजनेषु प्रताडनाभियोगमारोपयेद् भवांश्च साक्षिरूपेण समाहूतो भवेत्तदा किं भवान् वक्ष्यति? महर्षिरकथयत्– न वयमसत्यं

वक्ष्यामः, सत्यमेव यद् वृत्तं तत् कथनीयं भविष्यति।

**परमप्रभुर्मां रक्षति–** ज्वालाप्रसादस्यैव सम्बन्धी कश्चित् विंशतितः पञ्चविंशतिं यावज्जनानादाय स्वामिनं हन्तुमायातः, परं श्रीमहाराजस्य शक्तिसामर्थ्येन कारागारभयेन च त्रस्तः परावर्तितः। दुर्जनाक्रमणवृत्तमभिज्ञाय श्रीलाला जगन्नाथः कतिपयसहयोगिभिः समं तत्र प्राप्तः; परं तदागमनस्य प्रागेवोपद्रविणः परावृत्ताः। लाला जगन्नाथश्च श्रीमहाराजं प्रार्थयत् "भगवन्! भवदमूल्यजीवनं परिसमापयितुं क्षुद्रजनाः सततप्रयत्नपराः, अतोऽस्मदभ्यन्तर-स्थाने निवासेनानुगृह्णातु भवान्। महर्षिरवादीत्; महाभाग! स्वस्थानेऽस्मिन् सुरक्षा प्रदानेन मां सुरक्षयिष्यति भवान्; परमन्यत्र को मे संरक्षकः? परमात्मदेवः सदैव सर्वत्र च मां सुरक्षति, अतो निर्भयोऽहम्।

विश्रान्तघाटस्थाने कदाचित् सहस्रशो जना महर्षेरुपदेशामृतपानायैकत्रिता अभूवन्। तदैव पण्डितः कश्चिन्मूर्तिपूजाविषये प्रश्नमकरोत्। सन्तोषजनकप्रत्युत्तरं प्रस्तुवति ह्येव स्वामिनि कालीदेवी-उपासकः कश्चिन्मदिरोन्मत्तब्राह्मणो दुर्वचनानि वर्षन् श्रीमहाराजस्योपरि स्वोपानहं प्राक्षिपत्। तच्च स्वामिनमप्राप्य मध्यान्तरे ह्येवापतत्। अनेन सत्संगस्थिताः सत्यनामिसाधवो रोषारक्तलोचना बभूवुः। ते च तं नराधममभिगृह्याताडयन्, परं दयालुर्दयानन्दस्तान् साधुजनानुपादिशत्; नास्य चेष्टया कथमपि दुःखिता वयम्, लग्नमप्युपानन्नहि किञ्चिद् रामबाणसमं दुःखाधायकमासीत्। अयञ्च सुरापानमत्तो ह्येव सर्वमेतदज्ञानवशादकरोत्; अतः क्षन्तव्योऽयं कृपया। स्वामिन आदेशात्साधुभिः स दुर्जनो विमुक्तः।

एकदा स एवोद्दण्डदुर्जनोऽनुकूलसमयमभिज्ञाय स्वामिस्थानं प्रविष्टः; श्रीमहाराजोऽपि स्कन्धधृतस्थूलदण्डम्, बलवन्तम्, मत्तमिव स्वाभिमुखमायान्तं हृष्टपुष्टं जनमेकं ददर्श। समीपमागत्य स प्रोवाच, संन्यासिन् "न मूर्तिं परमेश्वरं विभावयसि"? ऋषिवरो गम्भीरभावेन तमपृच्छत्; भद्र जानीहि परमेश्वरस्य स्वरूपम्? सोऽवदत्; जानामि। स्वामिना पृष्टः स पुनरवदत्; परमेश्वरः सच्चिदानन्दः, सर्वशक्तिमान्, भक्तवत्सलः, परमदयालुदेवः, सर्वत्रपरिपूर्णश्च वर्तते। श्रीमहाराजः किञ्चिद् विहस्य प्रावदत्; भद्र। त्वया प्रकीर्तिताः परमेश्वरगुणाः सर्वे सत्यपूर्णाः; तवाभिज्ञां प्रशंसामि, परं साम्प्रतं त्वमेवैतैः स्ववर्णितपरमेश्वरगुणैः समं मन्दिरस्थमूर्तेर्गुणानां समतां कुरु, यदि ते समतां गतास्तदाऽहमपि त्वया सहयुक्तो भविष्यामि; अन्यथा यदि-उभयत्रस्थितगुणानां साम्यं न स्यात् तदा त्वयाऽपि साक्षी स्वात्मानुसरणीयः। उद्बोधनप्रकारेणानेनातितरां द्रवितः स दण्डं प्रक्षिप्य श्रीमहाराजस्य चरणौ जग्राह। तस्य च जीवनधारैव परिवर्तिता; सर्वाणि दुष्कर्माणि परित्यज्य स शनैः शनैः सदाचारपरायणः साधुस्वाभावश्च संवृत्तः।

**तान्त्रिकपण्डितहलधरस्य शास्त्रार्थे पराजयः**—पण्डितहरिगोपालस्य पराजयेन केचन पुराणभक्ता लालाप्रेमदासादयोऽतीवलज्जिताः सन्तः स्वलज्जां परिमार्ष्टुं कानपुरतः ओझाहलधरनामधेयं तान्त्रिकपण्डितं स्वामिना समं शास्त्रार्थकृते समाह्वयन्। श्रीहलधरः शास्त्रार्थे "**सौत्रामण्यां सुरां पिबेत्।**" इत्यादिवेदमन्त्रमुच्चारयन् यज्ञकर्मणि मदिरापानप्रमाणमुपास्थापयत्। महर्षिश्च तत्क्षणं मदिरापाने दोषानुद्भावयन्नकथयत्; अत्र हि "सुरा" शब्दस्य "सोमरसः" इत्यर्थः। ततश्च हलधरः श्रीमहाराजं संन्यासिनो लक्षणान्यपृच्छत्। महर्षिः संन्यासिनो लक्षणानि संवदन् हलधरं ब्राह्मणस्य लक्षणान्यपृच्छत्। स च ब्राह्मणस्य लक्षणानि प्रवक्तुमशक्तो वादं विवादमकरोत्। स्वामिमहाभागोऽवदत्- "प्रकरणमनुसरतु भवान् न विषयान्तरो विधेयः"। वादं परित्यक्तुमिच्छन् हलधरोऽवदत्; वारं वारं प्रकरणशब्दं प्रयुञ्जानो भवान् प्रकरणशब्दस्य व्युत्पत्तिमेव ब्रवीतु। "प्रपूर्वककृ धातोः ल्युट् प्रत्यये सति प्रकरणशब्दो निष्पद्यते"। इति महर्षिः समुदतरत्। पुनः "कृ" धातुः समर्थः, असमर्थो वा?" इति हलधरस्य परिप्रश्ने स्वामिप्रवरः "समर्थः कृ धातुः"इति प्रत्यवदत्। "समर्थत्वं च किम्?" इति पुनः प्रश्ने मुनिवरो महाभाष्यस्य वाक्यमेकमुद्धरन् "अपेक्षमाणोऽसमर्थः"इति प्रत्युदतरत्। हलधरः पुनरवदत्; "भवन्निर्मितं संस्कृतवाक्यमिदं न महाभाष्यस्य" प्रत्युत्तरे महर्षेः समादेशेन पण्डितः श्रीब्रजकिशोरमहाभागो महाभाष्यमुद्घाट्य द्वितीयाध्यायस्य प्रथमाह्निके वाक्यमिदं प्रादर्शयत्। एवं रात्रेरेकवादनं यावत् वादः प्रचलितः। अन्ततो विरामसमये निश्चितमभूत्; यदि "समर्थः पदविधिः" इति सूत्रमिदं सर्वत्र प्रवर्तते तदा स्वामिमहाभागस्य विजयः सुनिश्चितः; यदि च सूत्रमिदमेकत्रैव प्रवर्तते तदा हलधरस्य विजयो मन्तव्य इति। अन्यस्मिन् दिने प्रवृत्ते शास्त्रार्थे महर्षिः "समर्थः पदविधिः" इति सूत्रस्य सर्वत्र प्रवृत्तिं प्रादर्शयत्। तदा पण्डितसमुदायो हलधरस्य पराजयं समुदघोषयत् पण्डितानां व्यवस्थावचनं हलधरस्य कर्णयोर्वज्रपातमिवापतत्। तस्य हृदयं भग्नम्, सम्मानं मर्दितम्, गर्वश्च विखण्डितः। स च मूर्च्छित इव पतितुं प्रवृत्तः, परमुपस्थितजनैर्गृहीतः, स्थानान्तरञ्च नीतः।

**वेश्यासक्तयुवजनाय सदुपदेशः**—तदानीं धनिनो मानिनः कुलीनाश्च पुरुषाः प्रत्यक्षतः स्वगृहेषु वाराङ्गनाः पर्यरक्षन्। स्वामिमहाभागो दुर्व्यसनस्यास्यातिखण्डनं प्रारभत। तस्य सदुपदेशेन चानेके परिपक्ववयस्कपुरुषा नारकीयपथादस्माद्दुद्धृता वैदिकपथानुयायिनः समभवन्। श्रेष्ठी पन्नालालः महर्षेः परमभक्त आसीत्। तमेकः प्रतिष्ठितभद्रपुरुषः प्रार्थयत्, यदि श्रीमान् महर्षेरुपदेशैः वेश्यासक्तं मत्पुत्रमपि सुपथमानयेत्; तदातीवोपकृतमात्मानमवगमिष्यामि।

युवकः (श्रेष्ठिपुत्रः) अतीवदुर्व्यसनग्रस्तः स्वगृहकृत्यानि कृषिकर्माणि च किमपि नागणयत्। दैनन्दिनं वारांगनाभिः सममेवेतस्ततः परिभ्रमन् तास्वेव संलग्नो मग्नश्चासीत्। श्रेष्ठी पन्नालालश्च तस्य युवजनस्य दुरवस्थामुपवर्णयन् तं सुपथे समानेतुं स्वामिनं प्रार्थयत्। श्रीमहाराजोऽवदत्– "कथमपि भवन्तो युवानं तं मामुपनयन्तु; अहं हि तं तत्पापकर्मणो विरतं विधास्यामि"। श्रेष्ठी पन्नालालश्च द्वौ सुशीलयुवानौ तेन कुव्यसनिना युवकेन समं समयोजयत्, अब्रवीच्च, यथातथैनं महर्षिप्रवरमुपनयतम्, येनास्य दुर्व्यसननिवृत्तिर्भवेत्। तौ च सुशीलयुवानौ दिनत्रयं तं वारं वारं प्रेरयन्तौ महर्षेः पुण्यदर्शनार्थं कथमपि तत्कुटीरमुपानयताम्। ते च सर्वे विनम्रभावेन महर्षिं प्रणम्य तत्रोपविष्टाः। श्रीमहाराजश्च प्रेमप्रपूर्णनेत्रयोः पावनज्योतिषा युवजनानां मुखमण्डलानि समुज्ज्वलानि कुर्वन् तानुपदिदेश।

सौम्ययुवजनाः! यद्यपि सर्वाण्येव दुर्व्यसनान्यमंगलकारीणि; परं वेश्यासक्तिस्तु सर्वाधिकविनाशकारिणी वर्तते। व्यसनेनानेन सुरापाने सहजप्रवृत्तिर्भवति, तेन सभ्यवेषः, सभ्यभाषा, सभ्याचारादयः सर्वेऽपि सद्गुणाः प्रणश्यन्ति। कुलाचारे च कठोरः कुठाराघातो भवति। दिवानिशं रागरंगमग्नानां व्यवहारबुद्धिर्विनश्यति। एतादृशदुर्व्यसनग्रस्तश्च सद्धर्मतोऽति दूरं गच्छति। वारांगनाश्च स्ववशीभूतपुरुषस्य मनः कृत्रिमप्रेम्णा, प्रवञ्चकवचनैः, शृंगारिक-भावभंगिमाभिश्च सदैवोत्तेजनां नयन्ति येन वेश्याव्यसनिनो जनाः स्वल्पकालेनै-वौजस्तेजोविहीनाः जीर्णशीर्णदेहाश्च भवन्ति। स्वार्थपरिपूर्णमेव वारांगनानां प्रेमप्रदर्शनम्। स्वार्थसिद्धावसत्यां नहि तास्तादृशजनेषु दृष्टिपातमपि कुर्वन्ति। वेश्यासक्तस्य परिवारे आचारशुद्धिर्नावतिष्ठते। तस्य वंशः क्षयं गच्छति; अक्षयेऽपि वंशे तस्य सन्ततीनां सदाचारभावः सुदुष्करः। महर्षिःपुनः प्रश्नोत्तररूपेण तानुदबोधयत—

महर्षिः – सभ्ययुवानः! वेश्यासक्त्या यदि कस्याश्चित् कन्याया जन्म भवति, वदत यूयम्, कस्य सा कन्या? कस्तस्याः जनकः?

युवानः – तस्यैव वेश्यासक्तपुरुषस्य सा कन्या भविष्यति; स एव हि तस्याः जनकः।

महर्षिः – युवतिः सती सा कन्या किं कार्यजातमनुष्ठास्यति?

वेश्यासक्तयुवा – किमन्यत्, वेश्यैव सती विपणौ स्थास्यति।

तदा महर्षिप्रवरो मर्मस्पर्शिभिः शब्दैरुद्बोधयन् युवजनानुवाच—

सभ्ययुवानः! संसारेऽस्मिन् न कोऽपि भद्रपुरुषः स्वपुत्रीं वेश्यारूपेण विपणिस्थां द्रष्टुमिच्छति द्रष्टुं शक्तो वा; केवलं वेश्यासक्तजनो ह्येव स्वसुतां वेश्यारूपेण विपणिस्थां करोति। एतादृशा जना एव स्वसुताः वेश्यागारं नयन्ति;

प्रतिद्वारञ्च नर्तयन्ति। कल्पयत, किन्नेदं जघन्यदुरितम्? महर्षेः सदुपदेशमिमं संश्रुत्य दुर्व्यसनी युवा रोमाञ्चितो जातः। तस्यान्तःकरणं पापकर्मणानेन प्रकम्पितम्। सर्वमपि शरीरमवसन्नमभूत्। स च स्वसहचरैः सममेवोवाच "भगवन्! सर्वतः सत्यपरिपूर्णं भवतां कथनम्; वस्तुतो वेश्यासक्तिः निकृष्टतमं कर्म। स च व्यसनी युवा स्वामिनश्चरणौ संस्पृश्य प्रतिज्ञामकरोत्; नाहमद्यप्रभृति वाराङ्गनानां छायास्पर्शमपि करिष्यामि। स्थिताश्चाचैव परित्यक्ष्यामि" इति। भगवान् दयानन्दस्तस्मै साधुवादेन समं शुभाशिषं व्यतरत्; अकथयच्च, सौम्य! परमप्रभोरनुकम्पया पवित्रतमं ते जीवनं स्यात्, एषैव सुमतिः सदैव सुस्थिरा भवेत्। स च महर्षेर्भावप्रवणोऽनुयायी सन् स्थानीयप्रान्तीयप्रचारकार्येषु च स्वनवजीवनदातारं प्रणम्य स्वसहचरैः समं गृहं परावृत्तः। ततश्च स युवा महर्षेरतिसाहाय्यमकरोत्।

**पाठशाला संस्थापनम्**– फर्रुखाबादनगरे श्रीवंशीलालः प्रतिष्ठितभद्रपुरुषः आसीत्।; स हि शिवालयमेकं निरमापयत्। तस्मिन् शिवालये शिवप्रतिमां स्थापयितुमिच्छत एव तस्य महर्षेः सदुपदेशैर्हृदयपरिवर्तनमभूत्। तदानीमेव महर्षिप्रवरः पाठशालामेकां स्थापयितुं प्रायतत। श्रीवंशीलालः प्रार्थनापूर्वकं शिवालयस्यैव स्थाने पाठशालां समस्थापयत्। पाठशालायां प्रायः पञ्चाशत् छात्राः प्रविष्टाः। सर्वे ह्येवाष्टाध्यायीमपठन्। श्रीमहाशयो दुर्गाप्रसादः छात्राणां भोजनवस्त्रादीनां व्यवस्थामकरोत्। पण्डितव्रजकिशोरमहाभागश्चाध्यापकरूपेण नियुक्तः। अध्यापकमहोदयस्य त्रिंशत् रूप्यकाणां मासिकवेतनभारं श्रीश्रेष्ठी पन्नालालोऽवहत्। अत्रैव महर्षिप्रवरो जर्मनदेशाद् वेदसंहिताचतुष्टयं सम्प्रापयत्।

**बालजनानां लोष्ठप्रहारसहनम्**–एकदा गंगायां प्रसारितपादस्थितं स्वामिनं निरीक्ष्य बालकाः "अरे! कियान् स्थूलतमो मानवः" इति सकौतुहलं वदन्तः क्लिन्नरजोलोष्ठैस्तं प्राताडयन्; श्रीमहाराजो बहुकालं तेषामबोधबालकानां क्रीडाकेन्द्रमभूत्; यदा तु बालुकणानि लोचनान्तर्गन्तुं प्रवृत्तानि तदा ततः समुत्थाय प्रचलितः।

**मल्लानां बलपरीक्षणम्**– एकदा केचन मल्लजनाः स्वामिनो दैहिकबलस्य चर्चां शृण्वन्तस्तं द्रष्टुमागताः। स्वामिमहाभागो गंगास्नानार्थं गत आसीत्। स्नातागतं महर्षिं वीक्ष्य मल्ल एको विहसन्नब्रवीत्; स्वामिमहाभागो यदि व्यायाममाचरेत् तदा न कोऽप्येनं सञ्चालयितुं क्षमः। श्रुत्वैतन्महर्षिर्निजकौपीनममर्दयत्। मल्लांश्चोवाच; युष्मासु कश्चित् स्वबलाभिमानी चेत् कौपीनतो जलविन्दुमेकं निष्कासयेत्। क्रमशः सर्वेऽपि मल्लजनाः स्वशक्त्या बलं प्रयुञ्जानाः कौपीनवस्त्रादेकमपि जलबिन्दुं निष्कासयितुं न प्राभवन्। ततश्च मुनिवरस्तस्मादेव

कौपीनवस्त्रात् कतिचिज्जलबिन्दून् निरगमयत्। दृष्ट्वैतत् सर्वेऽपि मल्लजनाश्चकिताः स्वामिनो बलं प्रामाणयन्

**क्रिश्चीनमतदीक्षातो युवानः सुरक्षिताः—** महर्षेरागमनात्पूर्वं बहुशो युवजनाः क्रिश्चीनमतं गृहीतुं प्रवृत्ता अभूवन्, परं यदा महर्षिः क्रिश्चीनमतस्य दोषान् प्रादर्शयत्तदा ते युवानः क्रिश्चीनपादरिणोऽकथयन्, "महाभाग! न वयं युष्मन्मते कामपि विशेषतां पश्यामो येन वयं पुरातनधर्मं परित्यजेम।

**जलालाबादनगरे—** फर्रुखाबादतः प्रस्थाय महर्षिर्जलालाबादमाजगाम। तत्र हि श्रीगयाप्रसादशुक्लस्तं श्रीशरणदासोदासिनः कुटीरमनयत्। उपस्तरणार्थं बहुशो निवेदितोऽपि श्रीमहाराजो निषेधमकरोत्; शयनकाले चेष्टिकोपधानं विधाय प्रसुप्तः।

**कन्नौजनगरे—** जलालाबादे दिवारात्रमात्रमास्थाय महर्षिः कन्नौजनगरमायातः। अयं हि १९२६तमसंवत्सरस्याषाढमासस्य समाप्तिकालः। अत्र हि श्रीमहाराजः कालिन्दीतीरे गौरीशंकरमहादेवस्य चत्वरे विरराज। अत्र पण्डितहरिशंकरशास्त्रिणा सममतीव मनोरजकः शास्त्रार्थोऽभवत्। पण्डितवरे समुपागते महर्षिस्तस्य नामधेयमपृच्छत्। परं स "**आत्मनाम गुरोर्नाम नामातिकृपणस्य च । श्रेयस्कामो न गृह्णीयाज्ज्येष्ठापत्यकलत्रयोः**" इति श्लोकमुच्चारयन्— आत्मनो गुरोश्च नाम प्रवचनं वर्जितमकथयत्। स्वामिनः "संकल्पपठनकाले भवान् स्वनाम समुच्चारयति न वा?" इति प्रश्ने निरुत्तरः स स्वनामधेयं समुदचरत्।

श्रीहरिशंकरः सुविज्ञवैयाकरणः कन्नौजनगरस्थ विद्वत्सु चाग्रगण्य आसीत्। ऋषिवरस्तत्समक्षं मूर्तिपूजायाः खण्डने पञ्चमहायज्ञादीनां मण्डने च प्रवचनमकरोत्। अस्मिन् विषये पण्डितवरेण समं वादः प्रचलितः। पण्डितवरो मूर्तिपूजनविषये किमपि शास्त्रीयवचनं पठितुं स्वामिमहाभागमनुरुरोध। परिप्रश्ने श्रीमहाराजस्तमेव किमपि विधिवाक्यं पठितुमकथयत्। पण्डितवरश्च "**वेदः स्मृतिः सदाचारः**" इत्यादि। मनुस्मृतेः श्लोकं पठन्नब्रवीत्— मूर्तिपूजैव सदाचार इत्युच्यते परं महर्षिः "पञ्चमहायज्ञादिकमेव सदाचारो न मूर्तिपूजनम्" इति समुदतरत्। "**राजा प्रतिमाः परिरक्षेत्**" इति मनोर्वाक्यस्थप्रतिमाशब्दस्य च श्रीमहाराजः "परिमापतौलनम्" इत्यर्थमकरोत्। ततः पण्डितवरः स्वपक्षसमर्थने पूर्वमीमांसायामपि पूर्वोक्तभावाभिव्यक्तिमवर्णयत्। स्वामिनो निषेधे स "नोचेत् पूर्वमीमांसायामेवंविधो लेखस्तदाऽहमपि शिखासूत्रं विहाय परिव्राजको भविष्यामि" इत्यब्रवीत्; तदानीं तत्रैव वादः परिसमाप्तः। गृहमागत्य पण्डितवरो मीमांसाशास्त्रस्य लेखं महर्षिकथनानुरूपमेवापश्यत्, अतः स हि अन्यस्मिन् दिने स्वामिनः समक्षं स्वपराजयं स्वीकृत्यात्मने संन्यासदीक्षायै

प्रार्थयत्। श्रीमहाराज उवाच– ज्ञानोदयेन संन्यासो भवति, न तु विजयपराजय-पणेन। ततश्च महर्षिः सर्वसमक्षमेव परमसत्यवादिनं सुधर्मशीलं पण्डितप्रवरं बहुतरं प्राशंसत्। उवाच च– अयमेव पुरातनपण्डितप्रवराणामादर्शः; पण्डित-हरिशंकरमहाभागश्चास्य ज्वलन्तनिदर्शनम्। पण्डितवरस्तदैव महर्षेरनुगामी संजातः।

**पर्याप्तोऽहं केवलः**– गार्गीदीनमिश्रः कश्चित् पण्डितहरिशंकरमुवाच "ब्रूहि दयानन्दं न मूर्तिपूजनं खण्डयेत्, अन्यथा हनिष्यामि तम्" इति। हरिशंकरश्च श्रीमहाराजं न्यवेदयत्; महर्षिरुवाच; नास्मत्ताडने हनने वा कोऽपि समर्थः, न चास्मदर्थे भयं कुरु; द्वयोस्तु शिरसी चूर्णयितुं केवलोऽहं पर्याप्तः। अधिकाश्चेदाक्रमणपरा राजद्वारं निवेदयिष्यामः। कदाचिद् गयादीनो नाम पण्डितः स्वामिनममिलत्, स्वनामधेयञ्च समुदचरत्, श्रीमहाराजो विहस्यावदत् "यदा हि दीनम् (धर्मः) एव– 'गया' (गतः) तदा किं भवत्पार्श्वेऽवशिष्टम्, खेदम्, न हि भद्राणि नामकरणानि क्रियन्ते।

कायस्थवर्गस्य विषये श्रीरामप्रसादेन पृष्टः महर्षिरवदत् "नैते शूद्राः, एते हि स्वात्मनश्चित्रगुप्तवंशीयान् वदन्ति, गुप्त शब्दश्च वैश्यानां कृते प्रयुज्यते; अतो वैश्या ह्येते भवितुं शक्नुवन्ति। एते हि निजस्वरूपं विस्मृत्य मद्यमांसादिसेवनपरा जाताः, अशास्त्रीयाचारव्यवहारमिमं परित्यज्य पुनरुन्नतिं कर्तुं प्रभवन्ति। एवं सप्ताष्टदिनानि कन्नौजनगरमास्थाय ऋषिवरो मदारपुरं परिभ्रमन् कर्णपुर-(कानपुर)- नगरे शोभायमानोऽभवत्।

**कर्णपुरे (कानपुरे) अवस्थानम्**– कानपुरं समागते श्रीमहाराजे वर्षर्तुः समारब्धः। स ह्यधिवक्तुः श्रीदरगाहीलालस्य स्थले विरराज। पण्डितः श्रीहृदयनारायणश्च प्रायो महर्षेरातिथ्यमकार्षीत्; समागते ह्येव श्रीमहाराजे सम्पूर्णनगरे कोलाहलो जातः। महर्षिश्चापि संस्कृतभाषायां विज्ञापनपत्रमेकं मुद्राप्य स्थाने स्थाने समारोपयद् व्यतरच्च। विज्ञापनेऽस्मिन् त्याज्यं गप्पाष्टकं ग्राह्यञ्च सत्याष्टकं मुद्रितमासीत्। यथा च—

**गप्पाष्टकम्—**

१– मानवरचितग्रन्थाः, ब्रह्मवैवर्तादीनि पुराणानि।

२– देवबुद्ध्या पाषाणादिप्रतिमापूजनम्।

३– शैवशाक्तरामानुजादयः सर्वेऽपि वैष्णवसम्प्रदायाः।

४– तन्त्रग्रन्थाः, वाममार्गादयः।

५– मदिराभंगादिमादकवस्तुसेवनम्।

६– व्यभिचारः।

७– चौर्यम्।

८– छलछद्मगर्वासत्यादिकम्।

**सत्याष्टकम्––**

१– ऋग्वेदादय ईश्वरोपदिष्टाश्चत्वारो वेदाः, अन्ये च ऋषिकृता एकविंशति-ग्रन्थाः।

२– ब्रह्मचर्याश्रमस्थैः गुरुजनशुश्रूषणम्, स्वधर्मानुष्ठानपूर्वकं वेदाध्ययनम्।

३– वेदोक्तवर्णाश्रमधर्मपालनम्, सन्ध्यावन्दनाग्निहोत्रादिकर्मानुष्ठानञ्च।

४– ऋतुकालाभिगमननियमादिधर्मशास्त्रप्रोक्तगृहस्थधर्मानुष्ठानम्, पञ्च-महायज्ञश्रौतस्मार्तकर्मणाञ्चानुष्ठानम्।

५– शमः, दमः तपश्चरणम्, यमादितः समारभ्य समाधिपर्यन्तोपासनम्, सत्संगपूर्वकवानप्रस्थाश्रमानुष्ठानम्।

६– विचारः, विवेकः, वैराग्यम्, पराविद्याऽभ्यासः,संन्यासग्रहणपूर्वकं सकलकर्मफलेच्छापरित्यागश्च।

७– जन्म-मरण-हर्ष-शोक-काम-क्रोध-लोभ-मोह-संगदोषादित्यागा-नुष्ठानम्।

८– अविद्याऽस्मितारागद्वेषाभिनिवेशादिक्लेशैः, सत्त्वरजस्तमोगुणैश्च निवृत्तिमनुष्ठाय पञ्चमहाभूतातीतमोक्षरूपस्वराज्यप्राप्तिः।

महर्षेः सदुपदेशैर्विज्ञापनलिखितगप्पाष्टकखण्डनेन च सकलं नवपुरातनं कर्णपुर- (कानपुर)- नगरमान्दोलितमभूत्। श्रद्धालुजनेषु समुत्साहेन नवसुधारा-वेशः, विरोधिजनेषु चेर्ष्याद्विषजन्यो रोषावेशोऽवर्तत। श्रीब्रह्मानन्दसरस्वती च विरोधिनां शिरोमणिरवर्तत। स हि स्थाने स्थाने परिभ्रमन् प्रचारमकरोत् ''दयानन्दस्याभिमुखं न गन्तव्यं, तस्य मुखावलोकनमपि परं पातकम्, स हि नास्तिको देवनिन्दकश्च, प्रच्छन्नक्रिश्चीनमतधृतोऽयं'' धर्मं भ्रष्टं कर्तुमागतः। अयं हि भैरवघाटतो निष्कासयितव्यः। कतिचित् पण्डितैः सममेकदा ब्रह्मानन्दः स्वामिनमुपगतोऽपि दुर्वचनानि समुद्गिरन् परावृत्तः। एवं ब्रह्मानन्दः सहजेर्ष्यालु-प्रकृत्या स्वामिनः प्रबलविरोधे समुदतिष्ठत्। श्रीप्रयागनारायणगुरुप्रसादनामधेयौ द्वौ प्रतिष्ठितधनिकावपि श्रीमहाराजस्य विरोधे बद्धपरिकरावभूताम्। कारणञ्चैतत्, उभाभ्यामेव श्रेष्ठिभ्यामाभ्यां ''कैलासवैकुण्ठ'' नामतः शिवालयौ द्वौ (मन्दिरौ द्वौ) निर्मापितावास्ताम्। महर्षिणा समं सम्मिलने तेनोद्बोधितौ; श्रेष्ठिवर्यौ! द्वाभ्यामेव युवाभ्यामनधिकारिभ्यो भोज्यपदार्थान्,

आजीविकावृत्तिश्च प्रदाय प्रस्तरेष्टिकासु च निरर्थकं विपुलार्थराशिं व्ययीकृत्य लक्षशो धनं विनष्टम्। कियत् शोभास्पदं तदभविष्यद् यदि भवतोरर्थ-राशिभिरात्रिशंद्वर्षवयःप्राप्तानां कान्यकुब्जकुमारीणां शुभविवाहकृत्यानि सम्पन्नान्यभविष्यन्। अथवा कलाकौशलसम्भृतानि कार्यजातानि कानिचित्तैरर्थ-राशिभिः सञ्चालितान्यभविष्यन्; येन राष्ट्रस्य जातेश्च महत्कल्याणं हितसाध-श्चाभविष्यत्। श्रुत्वैतत्तावतिरुष्टौ परावर्तेताम्। ब्रह्मानन्दश्च द्वावेतौ समुत्तेजयन्—ओझाहलधरं श्रीलक्ष्मणशास्त्रिणश्च स्वामिप्रवरेण समं शास्त्रार्थकृते समुद्यतावकरोत्।

१८६९तमवर्षस्य जौलाईमासस्यैकत्रिंशत्तारिकाया दिनं शास्त्रार्थकृते सुनिश्चितमभवत्। सहायकमण्डलाधिकारी श्रीथेनमहाभागश्च सर्वसम्मतो मध्यस्थो नियुक्तः।

भैरवघाटस्थलेऽनेकोपस्तरणानि विस्तृतानि, नगरश्रेष्ठिनो धनिनश्च सर्वे-एकत्रिता अभूवन्। शास्त्रार्थसमये विंशतितःपञ्चविंशतिसहस्रसंख्यामितानां जनानांसम्मर्दस्तत्रैकत्रितोऽभवत्। सार्धचतुर्वादनसमये शास्त्रार्थः समारब्धः। प्रारम्भे हलधरोऽब्रवीत्; स्वामिमहाभाग! यद् भवता विज्ञापने "गप्पम्" इति शब्दो विलिखितः; व्याकरणनियमैरशुद्धो हि सः। महर्षिरुवाच; साम्प्रतं भवान् मूर्तिपूजादिविषये विवादं प्रस्तौतु, शुद्धाशुद्धयोर्विवादश्छात्रजनानां कार्यम्, सहस्रशो जनानाममूल्यसमयः शुष्कवादे नातिवाहनीयः। एतदेव पृष्टव्यन्चेत् श्वो भवान् मत्कुटीरे समागच्छतु सप्रमाणं समाधास्यामि।

"महाभारतं युष्मन्मते प्रमाणं न वेति" श्रीहलधरस्य प्रश्ने स्वामिनः स्वीकृतौ हलधरो महाभारतस्य श्लोकमेकं पठन्नुवाच भीलजातीय एकलव्यो द्रोणाचार्यस्य प्रतिमां सम्मुखे संस्थाप्य धनुर्विद्यामशिक्षत एतेन मूर्तिपूजाया महत्त्वं विज्ञातं भवति, इति। महर्षिरुवाच "क्वचित् श्रुतिशास्त्रेषु प्रतिमापूजनस्यादेशं निर्देशं वा भवान् प्रदर्शयतु" इत्यहं ब्रवीमि। यत्प्रमाणं भवता समुद्धृतम्, नात्र प्रतिमापूजनस्यादेशः। "एको भीलजातीयो युवा एवमकरोत्" इति वर्णनमात्रम्। नाऽपि कश्चिदाचार्य आप्तपुरुषो वा तं भीलयुवानं तत्कर्तुमशिक्षयत्। नापि च कश्चित् ऋषिप्रवरो मुनिवरो वा स भीलयुवा यस्य कर्म प्रमाणं मन्येत। यथा हि आंगलजनाः सम्मुखं किञ्चिद् वस्तुजातं निधाय लक्ष्यं साधयन्ति तथैव एकलव्योऽपि लक्ष्यवेधस्याभ्यासमकरोत्। न खलु तेनाऽपि द्रोणप्रतिमा पूजार्थं संस्थापितासीत्। यदि च भवान् "द्रोणप्रतिमास्थापनेन स धनुर्विद्यायां पारंगतोऽभवत्" इति कथयेत् तदपि मिथ्यारूपमेव; यतो नहि मूर्तिस्थापनं तस्य निपुणतायाः कारणम्; अपितु निरन्तरसभ्यास एव।

युक्तियुक्तमुत्तरमिदं श्रुत्वा क्षणं मौनस्थितः श्रीओझाहलधरः प्रकारान्तरेण स्वामिनमपृच्छत् "यदि श्रुतिशास्त्रेषु न मूर्तिपूजाया विधानं तदा निषेधोऽपि क्व वर्तते?" श्रीमहाराजोऽवदत्– यदि स्वामी कश्चित्स्वसेवकं पश्चिमस्यां दिशि गन्तुं निर्दिशति तदाऽवशिष्टतिसृणां दिशां गमननिषेधः स्वयं सिद्धोऽवगम्यते। तदा महर्षिप्रवरः श्रुतिशास्त्रप्रमाणैः पूर्णतः सिद्धमकरोत्– यत्-श्रुतिशास्त्राणि परमेश्वरस्य स्वरूपं निराकारम्, सर्वत्रपरिपूर्णम्, अमूर्तञ्चैव मन्तुमादिशन्ति। ततः स सुदृढं श्रीओझाहलधरं स्वपक्षे श्रुतेरेकमपि प्रमाणं प्रस्तोतुमकथयत्, परं न हि स प्रमाणं प्रस्तोतुमशक्नोत्।

श्रीलक्ष्मणशास्त्री अवदत् "सर्वव्यापको हि परमेश्वरो मूर्तावपि विद्यमान एव; पुनर्मूर्तिपूजने कथं भवान् दोषं दर्शयति? इति। महर्षिरुदतरत्– यदा हि परमेश्वरः सर्वत्र व्यापकस्तदा जडमूर्तौ को नाम विशेषो यत्तस्याः पूजा क्रियेत। नहि चेतनस्वरूपान् (सजीवान्) प्राणिनो विहाय जडमूर्तिपूजने किमपि महत्त्वम्। श्रुत्वेदं सर्वेऽपि प्रतिवादिनो वाक्शून्याः संवृत्ताः। न कस्यापि काचिदूहा प्रस्फुरिता। तदैव मध्यस्थः श्रीथेनमहोदयो हलधरमहाभागं कतिचित्प्रश्नानपृच्छत्; पुनश्च महर्षिणा समं वार्तालापं विधाय नमस्कृत्य च सभास्थलादगच्छत्।

मध्यस्थगमनेन सम्पूर्णसभायां भूकम्पस्थितिरिवाभवत्। सर्वत्रकोलाहलः प्रवृत्तः। तस्यामेवाव्यवस्थायां विरोधिनः श्रीमहाराजस्योपरि प्रस्तरेष्टिकाखण्डान-वर्षयन्। श्रीप्रयागनारायणतिवारी च रुप्यकस्यैकस्य पणकान्यादाय हलधरस्य मस्तकोपरि समर्प्य प्राक्षिपत्; अवदत् च हलधरस्यैव विजयोऽभवत्। किं पुनः– "गंगामाता विजयते; ओझाहलधरो विजयते" प्रभृतयो जयघोषा अभूवन्। पौराणिकजनाश्च स्वविजयं मन्यमानाः ससमारोहं नगरमागच्छन्; "शोलातूर" समाचारपत्रे च स्वविजयमुदघोषयन्। आर्यपुरुषाः केचन "शोलातूर" समाचारपत्रमादाय महर्षिमनुप्राप्ताः, पौराणिकानां मिथ्या जयघोषलेखं (वृत्तम्) च महर्षिं समसूचयन्। मुनिवरश्च निरपेक्षभावेनावदत् "शास्त्रार्थो हि सत्यासत्यनिर्णयार्थं सम्पद्यते; यदि तेऽत्र स्वविजयं मन्यन्ते हर्षितास्त आसताम्; विषयेऽस्मिन् सर्वथा हर्षशोकनिरपेक्षा वयम्" परं मिथ्या समाचारेणानेनोद्-विग्नानि महर्षेर्भक्तप्रवराणां मनांसि निरपेक्षमौनभावेन कथमेतदसहिष्यन्त। ते हि मध्यस्थं सहायक- (उप)- मण्डलाधिकारिणं थेनमहोदयमनुप्राप्य सर्वं वृत्तमादितो न्यवेदयन्। स च तत्क्षणमेव तान् निम्नोक्तव्यवस्थापत्रं विलिख्य प्रादात्—

"महोदयाः! मम सम्मतौ शास्त्रार्थे स्वामिदयानन्दसरस्वतीसंन्यासिनो विजयोऽभवत्; सर्वा अपि तस्य युक्तयो वेदानुकूला आसन्। भवदिच्छायां

सत्यामहं कतिपय दिनेषु स्वव्यवस्थायाः पुष्टिविषये प्रमाणान्यपि समुपस्थास्यामि''।*

कानपुरम्- –भवदीयः

थेन

महर्षिभक्तजनाः थेनमहोदयस्य व्यवस्थासहितं सम्पूर्णशास्त्रार्थवृत्तं विज्ञापनैर्नगरनिवासिनः समसूचयन्। समाचारपत्रेषु च प्राकाशयन्। सर्वः सामान्यवर्गः स्वामिमहाभागस्य सत्यसंस्थापनेन प्रभावितः स्वपूजितप्रतिमाः गंगायां प्राक्षिपत्। ओझाहलधरमहोदयश्च मूर्तीनां दुरवस्थां प्रपश्यन् विज्ञापनमिदं प्रासारयत्। ''मूर्तीनां जलप्रवाहोऽनुचितः; ये हि स्वामिनो मतमभिगृह्णीयुस्ते स्वपूजितप्रतिमाः कृपया कैलासमन्दिरे वैकुण्ठमन्दिरे वा प्रेषयन्तु; नो चेदवकाशं लभेरन् संसूचयेयुरस्मान्, वयं हि स्वयमेवाभिग्रहीष्यामः'' हस्ताक्षराणि– ''ओझाहलधरस्य'' इति। किमेतावतो महत्प्रमाणं महर्षेः शास्त्रार्थविजयस्य भवितुं शक्यम्?

**अहिंसा-सिद्धिः**–एकदा स्वामिमहाभागो गंगायां विश्राम्यन्नतिष्ठत्; अकस्मादेको बृहन्मकरस्तस्य समीपमायातः। भक्तप्यारेलालप्रभृतिमहानुभावाः स्वामिनं विपद्ग्रस्तमिव वीक्ष्य प्रधावन्तश्चागत्याब्रुवन् ''भगवन्! सत्वरमेव सलिलाद् बहिरायाहि; बृहन्मकरोऽयं भवन्निकटं प्रविचरति।'' परमहिंसासिद्धस्तथैव स्थितो महर्षिरुवाच ''यावन्नाहमस्य विपत्तिकरस्तावत् कथमयमस्मत्कृते विपत्तिकरो भविष्यति''।

**गंगापुत्रः परमभक्तोऽभवत्**– महर्षिस्थानतो नातिदूरं स्थितो गंगापुत्र एकः प्रतिदिनं महर्षिं प्रति दुर्वचनानि प्रायुङ्क्त। दुर्वचनक्रमोऽयं विंशतिदिनेभ्यो निरन्तरं प्रचलितः; परं मुनिवरो न किञ्चिद्भूतमिव मन्यमानोऽतितरां प्रशान्तोऽतिष्ठत्। भक्तजना महर्षये नानाविधभोज्यपदार्थान् समर्पयन्। पर्याप्तमिष्ठान्नमेकदा श्रीमहाराजस्य समीपे समवशिष्टम्। ''कस्मै प्रदेयमिदम्'' इति विचिन्तयत्येव श्रीमहाराजे दुर्वचनानि वर्षन् स गंगापुत्रस्तत्र समायातः।

---

* Gentleman! At the time in question I decided in favour of Dayananda Saraswati Fakir and I believe his arguements are in accordance with the Vedas. I think he won the day. If you wish it I will give my reasons for my decision in a few days.

Yours Obediently

Sd/-W. Thaine

Cawnpore

महर्षिः सस्नेहं तस्मै तां भोज्यसामग्रीं प्रायच्छत्; अकथयश्च, प्रतिसायमत्रास्मानुपायाहि पुष्कलं भोज्यसामग्रीं ते प्रदास्यामः। सप्ताहं यावत्स तां भोज्यसामग्रीमलभत। परमृषिवरस्तस्य दुर्वचनवर्षणविषये न कदापि चर्चामकरोत्। ततः पश्चात्तापेन तस्यान्तःकरणमतीवोद्विग्नम्। एकदा स हि श्रीमहाराजस्य चरणावभिगृह्याजस्राश्रुधाराः प्रवर्षन्नवदत् "भगवन्! निजसौजन्येन भवता मे दुर्भावो विजितः; अतितरामपराधग्रस्तोऽहं भवतः। देव! क्षन्तव्या मेऽपराधाः। श्रीमहाराजश्च शुभाशिषोऽभिवर्षन् तमुवाच; भद्र! न हि ते दुर्वचनान्यस्मत् श्रुतिपथे समायातानि; भवताऽपि विस्मरणीयं सर्वमेतत्।

आसीदादर्शसंन्यासी देवार्षिर्दयानन्दः। कर्णपुर- (कानपुर)- नगरे तस्य भक्तश्रेणिषु भूयांसो धनिकपुरुषा अपि सम्मिलिता आसन्। भक्तप्रवरास्तस्मै सुखसाधनानां यथेष्टसामग्रीं समर्पयितुं समुद्यताः; परं द्वन्द्वातीतो दयानन्दस्तत्रैव भैरवघाटस्थले– उच्चावचविषमतले स्थूलेष्टिकोपधानं विधाय ससुखमस्वपत्। प्रायोमासत्रयं तत्र (कर्णपुरे) स्थितेरनन्तरमेकस्मिन् प्रत्यूषे न कमपि संसूचयन् कमण्डलुं कौपीनश्चापि तत्रैव परित्यज्य महर्षिः किञ्चिदनिर्दिष्टस्थानं प्रययौ। एकमेव कौपीनवस्त्रं महर्षिप्रवरः समधारयत्। कर्णपुरे (कानपुरे) भक्तप्रवरेण केनचित् प्रदत्तमपरं कौपीनवस्त्रमपि यात्रायां भारं परिगणयन् गमनसमये तत्रैव परित्यक्तम्।

# पौराणिकदुर्गे सिंहनादः

**पौराणिकमहादुर्गे सिंहनादः**— वाराणस्यां राजामाधवसिंहस्यानन्दोपवनं प्रसिद्धम्, तत्र हि १९२६तमसंवत्सरस्य कार्तिकशुक्लद्वादश्यां विशेषः समारोहोऽवर्तत। कौपीनधारी संन्यासी एक उपवनेऽस्मिन् समागत्य व्यराजत। विद्यापुरीवाराणसीस्थिताः सर्वे ह्येव प्रसिद्धपण्डितमल्लाः कौपीनधारिणा संन्यासिना तेन स्वशास्त्रबलपरीक्षणाय समायातुं प्रवृत्ताः। १८६९ ईस्वीयवर्षस्य अक्टूबरमासस्य द्वाविंशतितमे दिनांके राजपुरतो वाराणसीं समागत्य महर्षिप्रवरो दयानन्दः सरस्वती तस्मिन्नुपवने विराजमानोऽभवत्। तदागमनेनैव विक्षुब्धमिव सम्पूर्णनगरमभूत्। बुद्धिधर्मयोः क्षेत्रे पूर्णस्वतन्त्रस्फूरणामेव मन्यमानः सुधारकदयानन्दोऽन्धविश्वासरूढिवादयोः केन्द्रभूते वाराणसीनगरे तस्य भ्रान्तिभित्तीर्धराशायिनीः कर्तुं सर्वेश्वरस्यैवैकमात्रसाहाय्येन शास्त्रवादरणस्थलेऽवतरितोऽभूत्। काशीपुरी प्राचीनतमकालतः शास्त्रज्ञानखनिरूपेण सम्मानिताऽसीत्। तस्याश्च प्रतिकोणमनेके विद्यावारिधयः प्रतिवीथिश्चानेकशो महामहोपाध्याया वसन्ति। दयानन्दो महर्षिश्चार्यधर्मस्य कुरीतीरुन्मूलयितुमैच्छत्। काशी यावदपराजिता तावत्पौराणिकधर्मस्य पराजयो न मन्तुं शक्यः। शास्त्रार्थे निरुत्तरतां गतः पण्डितः काशीमन्वधावत्; ततश्च मूल्यशून्यां सारहीनाञ्च धर्मव्यवस्थां सम्प्राप्य सर्वत्रैवागर्जत्। कश्चिद् विशुद्धानन्दस्य नाम संकीर्तगनपरश्च राजारामशास्त्रिणः ख्यातिमुद्घोषयन् मुग्धजनवर्गे गौरवमलभत। निराश्रितान्धतमसो वाराणसीमेवान्तिममाश्रयं सर्वेऽमन्यन्त। वेदविद्याप्रवीणो विगतभयवीरवरो दयानन्दस्तस्याज्ञानान्धतमोव्याघ्रस्य गुहायामेवोपस्थाय तदाह्वानमकरोत्; माधवोपवने च सत्यधर्मध्वजां समारोपयत्।

महर्षिः काशीनरेशं सन्दिदेश " सत्यासत्यनिर्णयोऽपेक्षितश्चेत्; स्वपण्डितवर्गं शास्त्रार्थकृते प्रस्तुतं कुरु" इति। सन्देशमुपलभ्य नरेशः पण्डितमण्डलीं समाहूय शास्त्रार्थकृते समसूचयत्। तेऽब्रूवन्, "श्रीमन्! वेदवित् पण्डितो दयानन्दः, वेदाँश्चैवोद्घोषयति, अतोऽस्मभ्यमपि वेदप्रमाणान्यन्वेष्टुं समयावधिः काचित्प्रदेया; तदैव शास्त्रार्थो भवितुं शक्यः" इति। नरेशेण पञ्चदशदिवसानामवधिः पण्डितवरेभ्यः प्रदत्ता। सर्वे पण्डितवर्याः पूर्णतः सज्जीभूताः। कार्तिकशुक्लद्वादशीतिथिः शास्त्रार्थकृते सुनिश्चिता। माधवोद्यानमेव समारोहार्थं समुचितस्थानं स्वीकृतम्। यतो हि संन्यासधर्ममनुसरता दयानन्देन महर्षिणाऽन्यत्रगमनं प्रतिषिद्धम्। एवञ्च कालप्रवाहेण पञ्चदशदिनान्यपि व्यतीतानि।

एकतो माधवोपवने समारोहः प्रवर्तितः, अपरतश्च पण्डितजनान् सभास्थानं समानेतुं काशीनरेशराजकेन्द्रतः शिविकाछत्रचामरादिसकलवस्तु-

जातस्य सम्प्रेषणं समारब्धम्। काशीस्थपण्डितानामद्य परीक्षादिवस इवासीत्। अद्य सम्प्राप्तव्यसफलतायामेव तेषां भाविसुखमवलम्बितमासीत्। प्रतिपक्षे कौपीनमात्रधरः साधुरेकोऽवस्थित आसीत्; यस्य विद्यैव शस्त्रम्; सत्यमेव दुर्गम्; सर्वेश्वरश्चैव सहायकः। इतश्चानेकपण्डितजनवर्गो, यस्य हि विद्याखड्गः स्वतन्त्र-विवेचनाभावे रुढिवादजङ्गग्रसनेन कुण्ठितः। हिरण्मयेन पात्रेण च सत्यस्य मुखं पिहितमासीत्। सर्वशक्तिमतः सर्वाश्रियस्य च परमेश्वरस्य स्थानमशक्तजडमूर्ति-भिरन्नदात्रा काशीनरेशेण चाधिष्ठितमासीत्। यत्र हि कौपीनधरः संन्यासी स्वसहायकसर्वेश्वरे परिपूर्णविश्वस्तः सद्विद्याखड्गं बिभ्रत् सत्यदुर्गे निर्भयोऽवस्थित आसीत्; तत्रैव स्वशक्तीः सहायकवर्गश्च निर्बलं मन्यमानः पण्डितवर्गः कदाचिच्छत्रचामरादिवस्तुजातं समाश्रयत्, कदाचिच्च शतशः शिष्यपंक्तीरभिलक्ष्य प्रतिपक्षिसंन्यासिने भयप्रदर्शनममन्यत, परं नेदं दीपज्योतिः स्वल्पवातप्रवाहेण निर्वापयितुं शक्यम्।

माधवोपवने प्रवहन्ती जनधारा नवनवतिप्रतिशतं मूर्तिपूजनपक्षधरा आसीत्। नहि स जनवर्गः सत्यासत्यविवेचनं द्रष्टुमग्रेसरोऽपितु स्वसम्मानितं सनातनं धर्मं विजयीकर्तुमेव तस्योद्देश्यभूतम्। सर्वे हि ते जना निर्दिष्टा आसन्– वाराणस्यां महान् नास्तिक एकः समागतः, यश्च विश्वनाथस्य पुर्यामेव विश्वनाथाय दुर्वचनानि प्रयुङ्क्ते। तस्य दमनं हिन्दूमात्रस्य परमं कर्तव्यम्; एवं सर्वे ह्येव स्वस्वमनोभावानुरूपमेकस्य महतो नास्तिकस्य पराजयं द्रष्टुमागच्छन्। सुजना दुर्जनाश्चोभयविधा एव तत्र गन्तृष्वासन्। सुजना हि स्वपण्डितवर्गाया-शीर्वचनानि वितरन्तो दुर्जनाश्च नास्तिकस्योपरि प्रस्तरेष्टिका वर्षयितुकामास्त-त्रागच्छन्। सभामण्डपप्रबन्धो नगररक्षकश्रीरघुनाथसहायस्याधीनोऽवर्तत्। सद्भद्रपुरुषेण तेन शान्तिपूर्वकं शास्त्रार्थं सञ्चालयितुं तथाव्यवस्थापितमासीद् यथा– एककाल एको ह्येव पण्डितवरो महर्षिणा समं संवादं कर्तुं प्रभवेत्; न च पण्डितमण्डली तं समावेष्टितुं शक्नुयात्। तत्र हि महर्षये प्रतिपक्षिविदुषे काशीनरेशाय च पृथक् पृथक् त्रीणि-उच्चासनानि सन्निहितान्यासन्।

बृहतीं विरोधिनां संख्यां तत्राऽपि काशीस्थकुख्यातधूर्तलम्पटानां महत्सम्मर्दं वीक्ष्य महर्षिभक्तानां हृदयानि प्रकम्पितान्यभूवन्। भक्तप्रवरः श्रीबलदेवः सर्वां स्थितिं महर्षिमसूचयत्; परं स्वस्वभावानुरूपं महर्षिप्रवरः प्रभुविश्वासं निर्भयताञ्च समुपदिशन् पूर्णसान्त्वनां प्रादात्; महर्षिरुवाच, एक एव सर्वशक्तिमान् सर्वेश्वरः, एकश्चैव वैदिको धर्मः, पुनः को हि द्वितीयो भयहेतुः? स्वैरमागच्छन्तु ते; यथास्थितं सर्वं समयानुरूपमेव व्यवहरिष्यामः। अन्यो भक्तप्रवरः श्रीजवाहरदासश्चापि स्वसंन्देहस्य तथैव प्रत्युत्तरं प्राप्नोत्, निर्भयो निष्कम्पश्च संन्यासिप्रवरः समाच्छन्नविरोधिमेघस्य प्रहारसहनाय प्रस्तुतस्तस्य

निःसारगर्जनायां स्मयमानोऽवर्तत। यो हि वीरवरः केसरिगुहागतो ह्येव तस्याह्वाने समर्थः स हि तस्य निःसारगर्जनामप्यक्षुब्धचेतसा श्रोतुं शक्तः।

पौराणिकसैन्यं सम्प्राप्तम्, प्रभावबोधनाय काशीनरेशः, सूक्ष्मातिसूक्ष्मालोचनाय च स्वामिविशुद्धानन्दः प्रशस्तबालशास्त्रिमाधवाचार्यवामनाचार्यनारायणादिपण्डितवर्गः, कोलाहलकरणाय च काशीस्थछात्राणां लम्पटधूर्तानाञ्च समूहः, इत्यङ्गत्रययुता पौराणिकसेना माधवोपवनं सम्प्राप्ता। सम्प्राप्तेऽनुशासनविहीने तत्सैन्ये सर्वे ह्येव मण्डपनियमाः भग्नाः। सर्वाऽपि नगररक्षकस्य व्यवस्थाऽस्तव्यस्ततां गता। पण्डितजनाः महर्षिप्रवरं परितः समावेष्टयन्। न कोऽपि हितैषी जनः तत्समीपोपवेशनावसरमलभत। मार्गाश्चावरुद्धाः। एवं पञ्चाशत्सहस्रविरोधिन एकाकिनं दयानन्दं परिवार्य सनातनधर्मस्य जयघोषमकुर्वन्।

समारब्धः शास्त्रार्थः, नाममात्रेण शास्त्रार्थो ह्येष वस्तुतः पावसप्रवृद्धासंख्यसलिलस्रोतसां शिलाभिः संघर्ष एवासीत्। सर्वेऽपि पण्डितजनाः स्वामिनो निरुत्तरीकरणाभिलाषया स्वस्ववाग्बलं प्रायुञ्जन्, परं प्रत्युत्पन्नमतिर्महर्षिप्रवरः कथमपि तेषां वशं नागच्छत्। अनेकवर्षाभ्यासेनाखण्डब्रह्मचर्यपालनेन च संग्रहीता अभयस्मृतिधैर्यादयो गुणाः साम्प्रतं तस्यामोघकवचरूपेण सहायका अभूवन्। अनवरतप्रवर्षत्प्रश्नशरान् सः साधनसम्पन्नो ब्रह्मचारी मध्यमार्गे ह्येव छिन्नभिन्नान् कुर्वन् स्ववाग्धनुषोऽपि चमत्कारं प्रादर्शयत्। लक्ष्यवेधिधनुषस्तस्मान्निर्गतास्तेऽमोघशराः विरोधिनां कवचानच्छिन्दन्।

एवं निम्नाङ्कितक्रमेणात्र शास्त्रार्थे प्रश्नोत्तराणि प्रवृत्तानि

पण्डितताराचरणः – कथं भवान् मनुस्मृतिं वेदमूलां मन्यते?

महर्षिप्रवरः – उक्तं सामवेदब्राह्मणे मनुवर्णितमौषधानामप्यौषधम् इति।

प्रशान्ते ताराचरणे तत्साहाय्यार्थमागतः स्वामिविशुद्धानन्दोऽपृच्छत् "रचनानुपपत्तेश्च नानुमानम्" वेदान्तसूत्रमिदं वेदमूलकमिति सिद्धं कुरु।

महर्षिः – नेदं प्रस्तुतवादान्तर्गतम्।

स्वामिविशुद्धानन्दः – अस्तु प्रकरणाद् बहिः, समाधानमवगच्छन्ति चेद् भवन्तस्तत् कथयन्तु।

महर्षिः – पूर्वापरपाठवलोकनेनैवेदं समाधातुं शक्यम्।

स्वामी विशुद्धानन्दः – नोचेत् पूर्वापरपाठादिकं सर्वं स्मृतमासीत्, कथं शास्त्रार्थकृते काशीं प्राप्तः?

महर्षिः– किं सर्वं वाङ्मयं भवतः कण्ठाग्रम्?

स्वामी विशुद्धानन्दः– ओम्, सर्वमेव वाङ्मयं मे स्मृतिपथे स्थितम्।

सम्प्रति परावर्तितप्रहारः प्रारब्धः, वशमागच्छन् चतुरसैनिको बहिर्भूतः।

महर्षिरपृच्छत् – तेन हि धर्मलक्षणानि भवन्तो ब्रुवन्तु।

सर्वज्ञतामुद्घोषयतोऽपि विशुद्धानन्दस्य धर्मलक्षणसम्बन्धि ''**धृतिः क्षमा दमोऽस्त्येयम्**'' इत्यादि मनुस्मृतिश्लोकं स्मृतिपथे नायातम्; अतः निरुत्तरः स जातः। तदैव प्रशस्तधर्माचार्यः श्रीबालशास्त्री तत्स्थानमागतोऽब्रवीत्– अधीतमस्माभिः सर्वं धर्मशास्त्रम्, अतो विषयेऽस्मिन् यत्प्रष्टव्यं तदस्मान् ब्रूहि। महर्षिरकथयत्– एवम्– अधर्मलक्षणानि भवन्तो ब्रुवन्तु। बालशास्त्रिणा न कदाप्युपकल्पितमासीत्, यदधर्मलक्षणान्यपि पृष्टुं शक्यन्ते फलतः सोऽपि मौनतामभजत्। एवमेव प्रश्नोत्तरप्रवाहस्तत्र प्रसृतः।

मूर्तिपूजाविषये ''वेदसंहितासु मूर्तिवाचकः प्रतिमा शब्दः स्थितः, **उद्बुध्यस्वाग्ने०** इत्यादिवेदमन्त्रे ''पूर्त'' शब्दस्य च ''मूर्तिपूजनसूचकत्वमर्थः'' इति वस्तुद्वयेमव काशीस्थपण्डिताः प्रमाणरूपेणोपस्थातुमशक्नुवन्, परं महर्षिप्रवरः वेदसंहितानां तत्तन्मन्त्रेषु परमेश्वरप्रतिमायाः स्पष्टनिषेधः; ''पूर्त'' शब्दश्च नदीतडागादिवाचकः'' इति समादधत् प्रस्तुतहेतुद्वयमेव निरस्तमकरोत्। ''वेदेषु क्व मूर्तिपूजाया विधानम्'' इति वारं वारं तानपृच्छत्; परं न तत्र किमपि समाधानमासीत्। सर्वतो विवशाः पण्डितवराः धूर्ततां समाश्रयन्, प्रस्तुतवाद-विषयं परिहरन्तस्ते स्वामिनं प्रवञ्चयितुं पुराणविषये वादं प्रारभन्त। तथाऽपि शीघ्रमेव ते व्यूहमिदमप्यभेद्यममन्यन्त। अवसरं लभमानो महर्षिः कतिपय व्याकरणसम्बन्धिप्रश्नानपृच्छत्, परं नहि तत्र किमपि सन्तोषप्रदं समुत्तरण-मासीत्, अतः खिन्नो हताशश्च पण्डितवर्गोऽभवत्।

तदैवाग्रेसरो माधवाचार्यः कुतश्चित् पृष्ठद्वयं समादाय महर्षिं प्रदर्शयन्नकथयत् ''यज्ञसम्पूर्तौ दशमे दिवसे यजमानः पुराणपाठं शृणुयात्'' इत्यत्र लिखितम् ''ब्रवीतु स्वामिमहाभागः पुराणशब्दोऽयं कस्य विशेषणमिति? महर्षिरुवाच– प्रपत्रस्थितं पाठं सुतरां पठित्वा भवान् ब्रवीतु। स्वामी विशुद्धानन्दश्च प्रपत्रद्वयं महर्षये समर्प्य प्रोवाच, स्वयमेव भवन्तः पठन्तु। महर्षिरवदत्– भवन्त एव पठित्वा श्रावयन्तु। विशुद्धानन्दोऽकथयन्नाहं चक्षुर्मानं विना पठितुं पारयामि, अतो भवद्भिरेव पठितव्यं भविष्यति। ततो महर्षिः प्रपत्रद्वयं स्वहस्तेऽग्रहीत्। अन्धकारकारणात् प्रपत्रपठनं कठिनतरमासीत्; अतो हि दीपकोऽपेक्षितः, तस्यापि प्रकाशो मन्दतरः, अतः प्रपत्रपठने किञ्चित्समयं व्यतीतम्। स्ववसरं मन्यमानः पण्डितवर्गः समुदतिष्ठत् धूर्ततां प्रपश्यता महर्षिणा विशुद्धानन्दो हस्तेन धृतः, उक्तश्च ''उपविशत; सत्यासत्यनिर्णयं विना मध्यत

एव समुत्थाय बहिर्गमनं नहि भवादृशानां विदुषां कृते शोभास्पदम्, परं धूर्तो विशुद्धानन्दो नावतिष्ठत्। हस्तेन महर्षेः पृष्ठभागं स्पृशन्नुवाच "साम्प्रतमुपविशन्तु भवन्तः, यद् भवितव्यमासीत्, वृत्तं तत्"।

पण्डितानां संकेतेन काशीनरेशः श्रीईश्वरीनारायणसिंहोऽपि समुदतिष्ठत्, करतालं च ददौ। पूर्वसंकेतेन बद्धः पौराणिकजनसमुद्रोऽपि सत्वरमुत्थाय पौराणिकसनातनधर्मस्य जयघोषमकरोत्। महान् भद्रपुरुषो नगररक्षकः काशीनरेशस्य व्यवहारमिमं हीनतमं मन्यमानस्तमुवाच, "नेदं भद्रमाचरितम्, करतालं ददता भवताऽतीवदुष्कृतमनुष्ठितम्, सभासमितीनां नियमविरुद्धं कार्यमिदम्" नरेशश्च नगररक्षकं कक्षपार्श्वतोऽवलम्ब्याग्रेसरस्तमुदबोधयत् सर्वे वयं मूर्तिपूजकाः, अतोऽस्माकं सामान्यशत्रुरेष यथातथा पराजयितव्य एवासीत्। एवमेतत्संघर्षसञ्चालकस्य काशीनरेशस्य संकेतेन सर्वोऽपि जनसमूहःस्वच्छन्दतां प्रादर्शयत्। किमधिकम्; सर्वे ह्येव प्रस्तरलोष्ठोपानहादिकं यद् यत् प्राप्नुयुस्तत्तदेव महर्षिमभिलक्ष्य प्राक्षिपन्। यथा हि प्रचलितवात्याचक्रसमये प्रबलवातप्रवाहैर्मृल्लोष्ठकाष्ठखण्डपत्रादिपदार्थाः पर्वतस्य निष्कम्पशिलासमूहेन संघृष्टाः (संघटिताः) लज्जिताः सन्तश्चाधःपतन्ति तथैव स्वार्थपूर्णदम्भोत्तेजिताज्ञानिजनैः प्रक्षिप्ता गर्हितपदार्था अपीमे लज्जिता इवाधोऽपतन्। श्रेष्ठतमसंन्यासिप्रवरस्य तस्य पयोधिगम्भीरहृदये नहि क्षणस्थायिनं प्रभावमपि प्राप्नुवन्।

**सिद्धपुरुषः**— वेदान्तविषयस्य विशिष्टो विद्वान् निर्मलसन्तः पण्डित-ईश्वरसिंहोऽप्येको वाराणस्यामेव न्यवसत्। सोऽपि तस्मिन् दिवस-आनन्दोपवनान्निवर्तमानं जनसमूहमपश्यत्। तस्मिन् जनसम्मर्दे विद्यार्थिनः, पण्डिताः, सामान्यजनाश्च महर्षिदयानन्दस्वामिनेऽनेकशो दुर्वचनानि प्रयुञ्जाना आगच्छन्। श्री-ईश्वरसिंहेनैतदपि श्रुतमासीत्— यज्जनसमूहोऽयमद्य स्वामिनि प्रस्तरेष्टिकागोमयोपानहादिकमपि चावर्षयत्, अगणितदुर्वाच्यांश्च स्वामिने अवदत्। स हि तदैव स्वचेतसि समकल्पयत्; यदस्मिन्नेव क्षणे दयानन्दस्वामिनो दशा निरीक्षणीया। यदि ह्यनेन महता तिरस्कारेण, अतीवापमानेन, अनैतिकदुर्व्यवहारेण, निर्ममान्यायेन चाऽपि तस्य चेतसि नहि कश्चित्क्षोभस्तदा स हि महामहिमब्रह्मज्ञानी, साक्षाद्धर्मरूपः, आत्मनिष्ठो योगी च वर्तते, इत्यवगमिष्यामि।

यदा हि श्रीईश्वरसिंह आनन्दोपवनं प्राप्तस्तदा महर्षिप्रवरश्चन्द्रज्योत्स्नायां भ्रमन्नवर्तत। तमायान्तमवलोक्य श्रीमहाराजः स्मयमानोऽतिसमादरेण तस्मै स्वागतं व्याजहार। उभावेव बहुरात्रिकालं यावदात्मपरमात्मविषये वार्तालापमकुरुताम्। एतावति चिरप्रचलितसंलापेऽपि श्रीईश्वरसिंहो महर्षेश्चन्द्रोज्ज्वलमुख-

मण्डले नैकमप्युदासीनतायाश्चिह्नमपश्यत्। निराशहताशभावयोरेका तमोरेखाऽपि नादृश्यत। गहननिरीक्षणेनापि तस्य विमले चिदाकाशे निराशाभ्रशकलं न दृष्टम्। स हि (महर्षिः) सामान्यजनवर्गकृतान्यायात्याचारयोश्च चर्चामपि नाचर्चयत्। पण्डित ईश्वरसिंहो महाप्रभोर्दयानन्दस्य चरणावभिगृह्याकथयत्, भगवन्! अद्यप्रभृतिभवन्तमहं वेदशास्त्रपारगं पण्डितमात्रमेवावेदिषम्, परमद्य पण्डितानां घृणितोत्पातेन, अपमानेन, विरोधवात्याचक्रेण भवद्हृदयसिन्धौ रागद्वेषयोस्तरंगलेखामपि तरङ्गितामपश्यन् भवन्तमहं वीतरागिणम्, महामहिम-महात्मानम्, सिद्धपुरुषमेकं विभावयामि। ततश्चातीवश्रद्धाशील ईश्वरसिंहः श्रीमहाराजेन विसृष्टः स्वस्थानमगच्छत्।

पौराणिकदलं सर्वस्मिन्नपि नगरे पण्डितानां विजयिप्रदर्शनम्, मूर्तिपूजाया जयघोषं चाकरोत्। स्वसत्यप्रियतायाश्च परिचयं प्रददत् सर्वत्रैव "दयानन्दः पराजितः" इति सभाचारं प्रैषयत्। पण्डितजनैर्नगरे "न कोऽपि दयानन्दमुपगच्छेत्, तत्र गतः सर्वोऽपि पातकी भविष्यति" इति विज्ञापनानि प्रसारितानि, परं सर्वेणाप्येतेन मिथ्याप्रचारेण न हि सुविज्ञसंसारः प्रवञ्चयितुं शक्यः। निष्पक्षराष्ट्रियसमाचारपत्रैर्महर्षेर्विजयवृत्तान्ता एव प्रकाशिताः। पण्डितसत्यव्रतः सामश्रमीमहाभागः स्वीय "प्रत्नकमरनन्दिनी" नामक मासिक-पत्रिकायां महर्षेः सफलतामुदघोषयत्। "रूहेलखण्ड" नामकपत्रेण "काशीस्थाः सर्वेऽपि पण्डितवराः दयानन्देन स्वामिना जिताः" इति प्रकाशितम्। लवपुरतः (लाहौर) प्रकाशिता 'ज्ञानप्रदायिनी" पत्रिका "नात्र सन्देहो यत् काशीस्थ पण्डितवराः मूर्तिपूजाया विधानं वेदेभ्यः प्रमाणयितुं नाशक्नुवन्" इति समाचारं प्रादात्। "हिन्दूपैट्रियट" पत्रेण "शास्त्रज्ञानगर्विता अपि काशीस्थपण्डितवरा महर्षिदयानन्दतो निरतिशयं पराजिताः" इति वृत्तं प्रकाशितम्। महर्षेरुपदेश-श्रवणावरोधकं विज्ञापनमपि पूर्णतो निष्फलमभूत्, पवनप्रवाहः प्रफुल्लपुष्पाभिमुखं गच्छतो भ्रमरान् नावरोद्धुमशक्नोत्।

साम्प्रतं जनवर्गो विशेषौत्सुक्येन महर्षेः सदुपदेशश्रवणायागन्तुं प्रवृत्तः। तस्य यशःसुरभिः सर्वत्र प्रसृता। येन वज्रलोहेन संघृष्टाः काशीस्थपण्डितप्रवर प्रचण्डवाक्शरा अपि कुण्ठिताः कुतस्तेन समं संघर्षणे सामान्यजनवाक्तृणानां सामर्थ्यम्? देशदेशान्तरेषु शास्त्रार्थस्यास्य संवादः प्रसृतः। तेन सममेव महर्षेर्वैदुष्ययशःसौरभमपि प्रासारयत्। दयानन्दस्य रूढिगढसंघट्टनजनितघन-घोरशब्दः सर्वा अपि दश दिशः प्रपूरिता अकरोत्। साश्चर्यं समस्तराष्ट्रेण दृष्टम्, यत् शताब्दीनामन्धतमसि समुत्थापितो विद्रूपकुरीतिस्तम्भस्तदाघातेन भीषण-शब्दं प्रकुर्वन् विश्वनाथपुरीजलधारायां निमग्नः। असत्यदम्भस्वार्थादयः प्रकम्पिताः। सत्यप्रकाशश्च दीप्तिमानभवत्।

महर्षिदयानन्दः सप्तवारं काशीस्थदम्भोपरि स्ववाक्शराणां प्रहारमकरोत्; परं न हि कोऽपि पौराणिकपण्डितो वेदमन्त्रेभ्यः मूर्तिपूजाया विधानं प्रमाणयितुमशक्नोत्। विशेषश्चैतदेव सम्पन्नम्, यद् द्वितीयवारं यदा हि महर्षिप्रवरो वाराणसीं प्राप्तः, तदा काशीनरेशस्तं स्वराजप्रासादे निमन्त्र्यातिशयसम्मानमकरोत्; पूर्वकृतव्यवहाराय च क्षमामयाचत। षष्ठं वारं यदा हि स्वामिमहाभागः काशीं गतः तदा रहसि सम्मिलिताः काशीस्थपण्डितदिग्गजास्तं प्रार्थयन् "भगवन्! नोचेन्भवान्मूर्तिपूजायाः खण्डनं कुर्याद् वयं हि भगवतो विष्णोरवताररूपेण भवन्तं सम्मानयिष्यामः" इति। परं सद्धर्मप्रचारसमर्पितसर्वस्वो देवर्षिदयानन्दः कथमेतादृशप्रलोभनेषु– (लोकैषणासु)– ग्रस्तः प्रभासमानसत्यं परित्यक्तुमपारयत्?

वाराणस्यामेव स्वपाण्डित्यगर्वनिर्भरो महामहोपाध्याय एको रामस्वामी नामधेयोऽप्यवसत्; स हि प्रायोऽकथयत् "वारमेकं वार्तालापेनैवाहं दयानन्दस्य सर्वपाण्डित्यगर्वं परिहरिष्यामि" इति। परं स हि "दयानन्दस्य मुखावलोकनेन पातकी भविष्यामि" इति भिया महर्षिं न ह्युपातिष्ठत्। एकदा स हि रात्रावन्धतमसि स्वामिनमुपागत्योवाच, "संन्यासिमहाभाग! छुरिकामेकामहं सगमेवानयम्, सा हि द्वयोरेवावयोर्मध्ये स्थास्यति, येन तया शास्त्रार्थे पराजितस्य नासाकर्तनं क्रियेत" इति। स्वामिमहाभागो विहस्याब्रवीत्; पण्डितवर्य! ममापि पण एकः स्वीकर्तव्यः; अन्याऽपि छुरिकैका सहैव संरक्षणीया, यया हि पराजितस्य जिह्वाकर्तनं कर्तुं शक्यम्, यतो हि वादविवादप्रसंगे नासिकाया न कोऽपि दोषः, अपितु जिह्वैव सर्वमनर्थजातं विदधाति। ततोऽर्धघटिकामात्रमेव श्रीमहाराजेन समं वार्तालापं कुर्वन् अतितरां प्रभावितः स सरलव्यवहारं सभ्याचरणञ्चाकरोत्।

वाराणस्यामेव श्रीमहाराजो यवनमतानुयायिनामपि त्रुटिसमूहं प्रादर्शयत्। येन तत्रत्ययवनजना अतीव रुष्टाः। एकदा सायंकाले यदा हि श्रीमहाराजो गंगातीरे पद्मासनस्थो व्यराजत तदैव संयोगवशाद् यवनमण्डली चाप्येका तत्रागच्छत्। तत्र समूहे केचन यवनाः स्वामिमहाभागं परिचिन्वन्तोऽब्रूवन्नयमेव स साधुर्यो ह्यस्मन्मतं व्यनिन्दत्। तेष्वेवात्यावेशाविष्टौ द्वौ युवानौ– अग्रेसरौ स्वामिनमुत्थाप्य जलधारायां प्रक्षेप्तुं प्रयत्नपरावभवताम्। तौ हि स्वस्वबाहुभ्यां स्वामिनो भुजयोः स्कन्धभागद्वयं गृह्णन्तौ श्रीमहाराजमुत्तोलयन्तौ च सरितायां प्रक्षेप्तुकामावेवास्ताम्, यत्तदैव महर्षिः स्वभुजाद्वयं संकोचयन् स्वदेहेन संलग्नमकरोत्, बलपूर्वकमग्रेसरश्च ताभ्यां सहैव जले न्यमज्जत्। द्वयोरेव तयोः हस्ताः किञ्चित्कालं तत्र वज्रबन्धने ग्रस्ता अभूवन्, परं जलेऽन्तर्निमज्जता महर्षिणा सकरुणं विमुक्तौ तौ कथञ्चिज्जलधारातो बहिरागच्छताम्। स्वसहायकजनै

समं मृल्लाष्ठहस्तौ जलोपरिनिर्गते स्वामिनः शिरसि प्रहर्तुं नदीतटे प्रतीक्षमाणावास्ताम्, परं तत्कुत्सितकामनाभिज्ञो महर्षिरवरुद्धप्राणो जलस्य तलभाग एव पद्मासनस्थोऽतिष्ठत्। आच्छन्ने तमसि "साधुः जले निमज्जितः" इति मन्यमानेषु गतेषु च तेषु महर्षिरपि स्वीयासने विराजमानोऽभवत्।

अतिभक्तिभावं प्रदर्शयन्नेकदा कश्चिन्महर्षये भोजनमुपाहरत्। कृतभोजनेन श्रीमहाराजेन न तत्स्वीकृतम्। तदा स वञ्चकभक्तजनः सम्प्रार्थयत् "भगवन्! भोजनं चेन्न भवन्तो गृह्णन्ति, ताम्बूलपत्रमेवेदं गृह्णन्तु" इति। श्रीमहाराजस्तत्ताम्बूलपत्रमभिगृह्यावेक्षमाण एवासीत् यत्स वञ्चकभक्तः सपदि मृगजवेन प्राधावत्। राज्यौषधालये परीक्षितं तत्ताम्बूलपत्रं हालाहलविषमिश्रितमासीत्।

# सुधारकार्याणि

**कर्ममयजीवनमेव पुण्यमयं शुभजीवनम्**—१९२६तमसंवत्सरस्य माघ-कृष्णपञ्चम्यां श्रीमहाराजः प्रयागं समागत्य गंगातीरे विरराज। तत्र च सविशेषसमारोहेण सद्धर्मप्रचारः समारब्धः। शतशः साधवः सन्तजनाश्च प्रवचनेषु समागच्छन्। साधवः वेदान्ते, निष्क्रियतावादे च वादविवादमकुर्वन्। एकदा हि साधुरेकः स्वामिमहाभागेन समं प्रवृत्ति-निवृत्तिविषये शास्त्रार्थमकरोत्, तं हि सहजभावेन पराजित्य महर्षिः स्वप्रवचने समुपादिशत्—

''कर्ममयजीवनमेव शुभजीवनं पुण्यमयजीवनं च, सकलमपि दृश्यमानं जगदिदं स्वीयनैत्यिककर्मसु निरन्तरमेव प्रवर्तते। अस्माकं शरीराण्यप्यस्यैव विशालसर्गस्य (सृष्टेः) अंशमात्राण्येव। यावद् विराट्ब्रह्माण्डदेहे निरन्तरमेव गतिः, क्रियाप्रवृत्तिश्च दृश्यते; तावत्तदंशभूतेष्वस्मास्वपि निवृत्तिर्निष्क्रियता-भावश्चासम्भवः। आर्यधर्मे वेदविहितकर्मणामनुष्ठानं प्रवृत्तिमार्गः, निषिद्धकर्मणां परित्यागश्चैव निवृत्तिमार्गः, ये च रहस्यमिदं मनस्यधारयन्तो निवृत्तिरागमालपन्ति; नहि ते वैदिकं धर्मं सुचारुतयाऽभिजानन्ति। ये च सत्योपदेशम्, प्रजाप्रेमभावम्, लोकहितकर्माणि च परित्यज्य स्वात्मनो निष्कर्मिणः (कर्मसंन्यासिनः) मन्यन्ते तेऽपि स्वदेहभरणपोषणं परित्युक्तं न क्षमाः। तेऽपि मधुकरीयाचनाय क्रोशद्वयं यावद् गच्छन्ति। अकारणमेव तीर्थस्थानेषु पर्यटन्ति। वस्तुतः सत्यपरिपालनाय परकल्याणार्थश्च स्वात्मसुखपरित्यागः, स्वजीवनस्याप्यर्पणमेव सर्वोत्तमस्त्याग-भावः।'' श्रीमहाराजः पुनरुवाच—परोपकारेण विना नरजीवनं न किञ्चिदपि पशुजीवनादुच्चतरम्। अत्राऽस्मिन् मेलके सम्प्राप्ताः शतशः साम्प्रदायिकसाधवः प्रतिदिनं गृहस्थानामष्टाणकमूल्यमितं भोज्यपदार्थमश्नन्तो निरर्थकमेव वने परिभ्रमन्ति। परिकल्पयन्तु, भुवि भारभूतानामेतेषां साधूनां जीवनं पशुजीवनतः कुतोऽतिरिच्यते? मृगा अपि कृषकजनानां क्षेत्रस्थसस्यानि लुञ्चन्त एव वनेषु परिभ्रमन्ति। पशुपक्षिषु सहजसुलभस्यैतादृशजीवनस्य को लाभः?

**हिन्दीभाषायां भाषणाभ्यासः**— एकदा गंगातीरे विराजमानः श्रीमहाराजः प्रकृतेः सहजसौन्दर्यं निरीक्षमाण आसीत्। तदैव तदभिमुखमायान्ती भद्रमहिला काचिन्मृतशिशुमेकं स्वहस्तयोरादाय गंगायां प्रविष्टा। किमपि गहनजले गता सा शिशोर्मृतदेहसंलग्नवस्त्रखण्डमुत्तार्य मृतपिण्डं हाहाकारेणार्तनादं कुर्वन्ती जलधारायां विससर्ज (प्रवाहयामास)। दृश्यमिदं दृष्ट्वा दयानन्दस्य हृदयमतितरां विदीर्णम्; सोऽचिन्तयत् ''अहो! एतावन्निर्धनमकिञ्चनमेतद् भारतराष्ट्रम्, यज्जननीयं स्वप्राणप्रियात्मजस्य मृतदेहं जले प्रवाहयन्ती तत्संलग्नतुच्छवस्त्रखण्डं दुर्लभं मन्यमाना सममेवानैषीत्। यतो हि नानेन वस्त्रखण्डेन विना तस्या लज्जाच्छादन-

सम्भवः। देशस्थदारिद्र्यस्येतोऽधिकनिदर्शनं दुर्लभम्। तदैव श्रीमहाराजः प्रत्यजानात्– "किञ्चित् कालतोऽहमेतेषामेव भाषायां प्रचारकार्यं कुर्वन्नेतेषां दुःखनिवारणसाधनान्युपस्थास्यामि" इति।

**विपरीतपुरश्चरणम्** –प्रयागस्थ कुम्भमेलके सद्धर्मप्रचारं विधाय ऋषिवरो मिर्जापुरनगरमाजगाम। मूर्तिपूजादिकुरीतीनाञ्च प्रचण्डप्रत्याख्यानं कर्तुमारभत। महर्षेर्गगनगम्भीरवाङ्नादेन प्रकम्पिता विरोधिनस्तस्य प्राणान् हर्तुम् (जीवनलीलां समापयितुम्) उपायानचिन्तयन्। तेष्वेव दिवसेषु कश्चित् तान्त्रिकः (ओझा) अपि तत्रैव व्यराजत। स हि समुदघोषयत् एतादृशसिद्धयन्त्रमन्त्रांश्चाहं जानामि; यदि हि कश्चित्तेषां पुरश्चरणं कारयितुं प्रभवेत्तदैकविंशतितमे दिवसे दयानन्दस्येहजीवनलीलापरिसमापयितुं शक्या। श्रेष्ठिना केनचित्तत्पुरश्चरणस्य व्ययभारवहनं स्वीकृतम्। ओझामहोदयेन च पुरश्चरणं प्रारब्धम्। पुरश्चरणप्रवर्तनस्य त्रिचतुर्दिवसेष्वेव गतेषु संयोगवशात् तद्व्ययभारवहनकर्तुः श्रेष्ठिनो ग्रीवायां स्फोटकमेकं समुद्गतम्। यच्च दैनन्दिनमतिदुःखदरूपमग्रहीत्। श्रेष्ठिमहोदयो हि भोजनपाने, ष्ठीवने, शब्दोच्चारणेऽप्यसमर्थो जातः। तदैव ओझामहोदयः समागत्य श्रेष्ठिनमुवाच–श्रेष्ठिमहाभाग! आसन्नः प्रयोगसमाप्तिदिवसः; बलिसामग्रीं भवान् प्रस्तुतां करोतु। प्रयोगपरिसमाप्तौ– इतो बलिप्रदानं भविष्यत्युतश्च दयानन्दस्य शिरो ग्रीवायाः पृथग्भूत्वा भूमौ पतिष्यति। सदुःखं श्रेष्ठिमहाभागोऽब्रवीत्; ओझामहोदय! दयानन्दस्य शिरस्तु पतिष्यति न वा मत्-शिरस्तु भवान् पतनोन्मुखमेव विभावयतु; कृपया परित्यज तत्पुरश्चरणम्। एवं हि स मन्त्रप्रयोगो मध्य एव परिसमाप्तः।

**निर्भयो दयानन्दः** – कदाचिद् गोस्वामी छोटूगिरिः शतशो जनैः समं स्वामिनः कुटीरमाक्राम्यत्। दिव्यो दयानन्दः स्वदिव्यचक्षुषा तस्य दुष्टतामुद्दण्डताञ्चाभ्यजानात्। अथ च पूर्वापेक्षयाऽपि प्रबलौजसा मूर्तिपूजादीनां खण्डनमारभत। छोटूगिरिर्महर्षेर्युक्तितर्कवादान् खण्डयितुमक्षमः समीपस्थपत्रपुटात् मिष्टवाताशाशने प्रवृत्तः। श्रीमहाराजोऽवदत्; वाताशाशने समीहाचेन्मुष्टिकां प्रपूर्य पृथक्शः समुपनयन्तु; सानन्दमश्नन्तु च; एकैकशोऽभिगृह्य सर्वानिव कथमुच्छिष्टान् कुरुषे। संघर्षाय सज्जः सोऽवदत्, अरे बाल! अस्मदुच्छिष्टाद् जुगुप्ससे? गुरुरहं तव; प्रतीक्षस्व क्षणम्; मूर्तिपूजाखण्डनस्य प्रसादं ते वितरामि इति। निर्भयदयानन्दस्यैतादृशकापुरुषप्रलापेन कुतो भयमभवत्। स हि समुदतिष्ठदुवाच च, अरे! भयं मां प्रदर्शयितुमिच्छसि? एवं भयं मन्यमानोऽहं देशप्रदेशान्तरेषु कथं वेदप्रचारकार्यं कर्तुं प्राभविष्यम्। पुनश्च सेवकानादिदेश; पिधत्त बहिर्द्वारान्, केवल एवाहं सर्वानेतान् सौजन्यपथे नियोक्ष्यामि। महर्षेस्तेजस्विनीं मुखाकृतिं निरीक्षमाणस्य छोटूगिरेर्हृदयमकम्पत गर्वश्च खण्डितः। स हि भद्रजन इव पश्चात् परावर्तितः।

**उलूको हि कुल्लूकः–** पण्डितगजाधरेण समं वार्तालापप्रसंगे श्रीमहाराजो-मनुस्मृतेः श्लोकस्य 'चक्री' शब्दस्य 'कुलालः' इत्यर्थमकरोत्। गजाधरेणाक्षिप्तम्; "तैलकरोऽस्यार्थः, न तु कुलालः, भाष्यकारकुल्लूकोऽपि तैलकरः" इत्येवार्थम-करोत्। विहस्य श्रीमहाराजोऽवदत् "उलूको हि कुल्लूकः विस्मर हि तम्" विचारयतु भवान्, नहि तैलकरश्चक्रं गृह्णाति। स हि स्वीयकोल्हूयन्त्रेण कार्यं करोति, कुलालो ह्येव चक्रं गृह्णाति, अतः स एव हि 'चक्री' इति वक्तुं शक्यः।

१९२७तमसंवत्सरस्य ज्येष्ठमासारम्भे स्वामिमहाभागो मिर्जापुरतः प्रस्थाय पुनर्वाराणसीं सम्प्राप्य सार्धद्वयमासपर्यन्तं तत्र वैदिकधर्मस्य दुन्दुभिं वादयन् ततः कासगञ्जनगरे विराजमानोऽभवत्। अत्र हि श्रीमहाराजः स्वीयप्रथमस्थापितां पाठशालां निरैक्षत। महर्षिणा स्थापितायां पाठशालायां तस्यामधस्तननियमानां परिपालनमावश्यकमासीत्—

१– सन्ध्यां प्रशिक्ष्य पाठशालायां छात्राणां प्रवेशः, अनेनैव तेषां बौद्धिकपरीक्षणमपि विधेयम्।

२– अष्टाध्यायी, महाभाष्यम्, मनुस्मृतिः, वेदाश्चाध्यापनविषयाः।

३– यदि हि छात्रः कश्चित् सूर्योदयात् पूर्वमुत्थाय सन्ध्या-वन्दनं न निर्वर्तयेत्, तस्मिन् दिने सायन्तनसन्ध्योपासननिर्वर्तनात् प्राक् तस्मै भोजनं न प्रदेयम्; अथ च स हि क्वचित् समीपस्थवसतिं प्राप्य भोजनं न लभेतेति तस्य पूर्णनिरीक्षममपि कर्तव्यम्।

४– विद्यार्थिनां नगराभ्यन्तरगमनं प्रतिषिद्धं स्यात्, परं केनचिन्निमन्त्रिता नगरं गन्तुमर्हन्ति।

५– पाठशालायां स्थानान्तरतः समागतानामेव छात्राणां भोजनव्यवस्था भवेन्न तु स्थानीयछात्राणाम्।

६– अध्ययने परिश्रमशीलछात्राय भोजनस्य प्रबन्धविशेषो भवेत्।

**विद्यार्थिजनेभ्यः सदुपदेशः–** महर्षिप्रवरः स्वछात्रान्, सहवर्तिपण्डितान्, सेवकजनांश्च लघुपापविमुक्तयेऽपि शिक्षां प्रादात्। पण्डितरामप्रसादश्च तेषु दिवसेषु श्रीमहाराजस्य सहचार्यवर्तत। एकदा कासगञ्जनगरे स्वामिमहाभागः स्नानार्थं समीपस्थोपवनमेकमगच्छत्। स्नानोपकरणहस्तो रामप्रसादश्च श्रीमहाराजमन्व-गच्छत्। मार्गे वृक्षात् पतितं परिपक्वमाम्रफलमेकं स्वामिमहाभागः समुल्लंघयत्। परमनुवर्तिरामप्रसादस्य मुखं लालास्विन्नमभवत्। स हि भुविनतस्तत्फलम-ग्रहीत्। तन्निरीक्ष्य श्रीमहाराजस्तमुवाच रामप्रसाद! नेदमुद्यानं युष्मदीयम्, अतः परकीयफलमभिगृह्णता त्वया चौर्यमाचरितम्; स्वस्थानमागतो महर्षिस्तस्मै

रुप्यकमेकमर्थदण्डमपि निरदिशत्।

**शृङ्गाभ्यामभिगृह्य परावर्तयेयम्–** एकदा हि विपणिं गच्छतो महर्षेः सन्मुखमतिबलिष्ठवृषभ एकः समागच्छत्। स हि मनुष्याननुधावन्नाक्रमणपर आसीत्। तमवलोक्य सर्वे ह्येव विपणिस्थजना भयभीताश्चत्वरस्थले समवेताः स्वामिमहाभागमपि तत्रैवायातुमुच्चस्वरेण प्रार्थयन्, परं महर्षिः पदमेकमपि नेतस्ततः प्रचलन् तद् वृषभाभिमुखमेवागच्छत्। समीपमागते स्वामिनि वृषभः स्वयमेव मार्गं परित्यज्यैकतो निर्जगाम। सर्व एव विपणिस्थजनसमूहो महर्षेः स्थिरधैर्यं निर्भयभावञ्चाभिलक्ष्याश्चर्यचकितोऽभूत्। श्रीचैनसुखमहाभागोऽपृच्छत् ''भगवन्! आक्रमणपरे वृषभे किं भवता कर्तव्यमासीत्''? विहस्य महर्षिरुवाच, किमन्यत्; शृंगाभ्यामभिगृह्य परावर्तयेयम्।

**छलेसरस्थाने–** स्वामिमहाभागोऽत्र (कासगञ्जनगरे) चिरं न्यवसत्। तस्य सत्संगेनानेके सज्जना लाभान्विता अभूवन्। यदा पाठशालायाः प्रबन्धः सुव्यवस्थितस्तदा निस्पृहो दयानन्दस्ततः प्रस्थाय ग्रामानुग्रामं विचरन् छलेसरनगरं प्रतिप्रस्थितः। महर्षेरागमनवृत्तमभिज्ञाय प्रायः सार्धद्विशतं जनास्तं समानेतुं सम्मानयितुञ्च सार्धक्रोशमिते मार्गे नग्नपादा एव तत्र प्राप्नुवन्। कालिन्दीतीरे श्रीमहाराजस्य पुण्यदर्शनं कुर्वन्तः सर्वे ह्येव ते चरणौ संस्पृश्य विनम्रप्रणाममकुर्वन्। ठाकुरमुकुन्दसिंहश्च श्रीमहाराजस्य ग्रीवायां पुष्पमालां समर्प्य दक्षिणकरेण तस्य शिरसि छत्रं वितन्वन् शिविकायामुपवेष्टुं प्रार्थयत्, परं श्रीमहाराजो भक्तजनानां मुखमण्डलेषु सदुपदेशामृतवर्षामभिवर्षन् पदातिरेव तैः समं प्राचलत्। एकस्मिन्नुपवने श्रीमहाराजो व्यराजत। प्रतिसायन्तनकाले महर्षेः प्रवचनानि प्रवृत्तानि। शतशो राजपुत्रजनाः प्रतिदिनं सुदूरात्तस्य सदुपदेशान् श्रोतुमागच्छन्। ठाकुरमुकुन्दसिंहस्तदनुजः श्रीमुन्नासिंहश्चानेकराजपुत्रैः समं महर्षेः करकमलाभ्यां विधिवद् यज्ञोपवीतमभिगृह्य तं स्वगुरुवरममन्येताम्।

**पितापुत्रयोः सम्मिलनम्–** श्रीमुकुन्दसिंहः स्वपुत्रचन्दनसिंहतः किञ्चिद् रुष्टोऽवर्तत; एतदभिज्ञाय श्रीमहाराजो मुकुन्दसिंहमुपादिशत् ''पिता सविशेषं कोमलमना भवेत्, बालो यदि बालभावं व्रजेन्नहि गुरुजनैः स्वगौरवं परित्याज्यम्, स्वसन्ततिभिर्वैमनस्यं सांसारिकसुखं शिथिलीकरोति, नीरसतामुपनयति, परस्पर-संघर्षेणान्ततः स्नेहसूत्रमेव विच्छिन्नं भवति, भवताऽपि स्वात्मजं प्रति वात्सल्यभावः प्रदर्शयितव्यः'' एवमुपदिशन् श्रीमहाराजः पुत्रं पितुरङ्के समुपास्थापयत्। पितापुत्रयोरुदासीनभावः परिसमाप्त आत्मीयभावश्च संवर्द्धितः।

**मक्कान्नमधुकरी-आस्वादनम्–** नियतसमये प्रतिदिनमुत्तमोत्तमभोज्य-पदार्थसज्जितास्थाली ठाकुरजनानां गृहेभ्यो महर्षेर्भोजनाय सम्प्राप्ताभवत्। एकदा

हि श्रीमहाराजश्चतुष्कोणस्थले स्थित आसीत्। भोजनप्राप्तौ च किञ्चिद् विलम्बः, तदैव कृषकः कश्चित् बृहतीर्मक्कान्नमधुकरीः समानीय स्वक्षेत्रं प्रतिगच्छन् तत्रायातः। मार्गोपविष्टं मुनिवरं निरीक्ष्य तस्य मनसि भक्तिभावोद्रेकः समवर्धत। स हि श्रीमहाराजं नमस्कृत्य सविनयं न्यवेदयत्; "भगवन्! अद्य हि मदीयान्नग्रहणेनाकिञ्चनं कृषकमिमं भवसागरात् समुद्धरतु" इति। महर्षिस्तत्रैव स्थितः सहर्षं बृहतीं मक्कान्नमधुकरीमेकां स्वहस्तेनाग्रहीत्, रुचिपूर्वकञ्चाश्नन्नतीव तृप्तिमभजत्। श्रीमहाराजस्यानेन परमानुग्रहेण कृषकस्य हृदयं हर्षनिर्भरमभूत्। शरीरे हर्षरोमाञ्चः, लोचनयोश्चानुरागरसाश्रूणि परिपूरितान्यभवन्।

**अनूपशहरनगरे**–छलेसरतः प्रस्थाय सोरों-फर्रुखाबादप्रभृतिनगराणि परिभ्रमन् श्रीमहाराजः 'अनूपशहर'-नगरे लालाबाबूमहोदयस्य प्रकोष्ठे स्वीयासनमाससाद। कदाचित् भगवते भुवनभास्कराय-अर्घ्यं समर्पयतो जनानभिलक्ष्य महर्षिरुवाच– "अयि मुग्धबन्धुजनाः! किमर्थं जले जलं प्रक्षिपथ, यदि कस्मिंश्चिद् वृक्षमूले जलं प्रदीयेतातीवलाभकरं तत्स्यात्।

अनूपशहरतः प्रस्थाय स्वामिमहाभागः कर्णवासमुपगच्छन् पाटलीपुत्रम् (पटनानगरम्) समागतः। तत्र ह्युपमण्डलाधिकारी श्रीसावनमलप्रभृति-महानुभावैः सुसत्कृतः श्रीभूपसिंहस्योपवने विरराज। तदानीं पटनानगरे श्रीरामजीवनभट्टपण्डितोऽतिप्रसिद्धः। स हि पञ्चाशतषष्ठियावज्जनैः समं महर्षिणा सह शास्त्रार्थकृते समागच्छत्, परं स्वल्पवार्तालापप्रसंगे ह्येव निरुत्तरः सन्न्यवर्तत।

**मृत्योरनन्तरं जीवात्मनः स्थितिः**– छोटेलालनामधेयः कश्चित् "मृत्योरनन्तरं क्व प्रयाति जीवः?" इति स्वामिनमपृच्छत्; यजुर्वेदमन्त्रान् समुद्धरन् श्रीमहाराजोऽकथयत्– "देहत्यागानन्तरं जीवात्मा वायुरूपेणाकाशेऽवतिष्ठते तत्पश्चात् पुनर्जले क्रमशश्च-ओषधिषु, अन्नेषु, पुरुषस्य वीर्ये चानुभ्रमन् नारीगर्भे स्थानं लभते। समुचितसमये च जन्म गृह्णाति।" अत्रैव प्रसंगे स्वामिमहाभागः स्वर्गनरकयोर्मिथ्याधारणामतीवाखण्डयत्।

**संसारत्यागोऽसम्भवः**– गुरुप्रसादनामकः कश्चित् सम्भ्रान्तो भद्रपुरुषः पटनानगरे न्यवसत्। स हि– अनेकसज्जनैः समं स्वामिनः पुण्यदर्शनार्थं गतः, प्रणतिं विधायापृच्छत् "भगवन्! संसाराश्रमत्यागः समुचितो न वा?" स्वामिना पृष्टः स पुनरुवाच "संसाराश्रमशब्देन पत्नी-पुत्र-परिवार-गृहादिपरित्यागः समुचितो न वेति मदभिप्रायः "। श्रीमहाराजः समुदतरत्– अशनपानम्, स्वपन-जागरणम्, श्वास-प्रश्वासः विद्याभ्यासश्चेत्यादिसर्वाण्येव कर्माणि संसाराश्रमान्तर्गतानि, एतेषाञ्च परित्यागोऽसम्भवः। श्रुत्वा ह्येतद् गुरुप्रसादः

पूर्णसन्तुष्टः।

श्रीमहाराजः सम्पूर्णनगरे विज्ञापनैरुदघोषयत् "मूर्तिपूजनावतार-वादादिविषये शास्त्रार्थं कर्तुकामः स्वैरं समागच्छेत्, तस्य भ्रान्तिनिवारणाय वयं सर्वदैवपूर्णतः सन्नद्धाः" इति। परं न कोऽपि पण्डितस्तदभिमुखमागन्तुमुदसहत।

**उपानहपादुकासंवादः** – एकदा मैथिलपण्डितः कश्चित् स्वामिनमुपगम्य चिरकालं संस्कृतभाषायां सम्भाषणमकरोत्। प्रसंगवशात् श्रीमहाराजेन भागवतखण्डनमारब्धम्। पण्डितमहाभागोऽब्रवीत् "भगवन्! किमपि भवन्तः ब्रुवन्तु; परं नाद्यावधि-अष्टादशसहस्रश्लोकयुतस्य भागवतपुराणस्य रचनासामर्थ्यं कस्मिन्नप्यन्यस्मिन् पण्डितप्रवरे समभूत्।" विहस्य श्रीमहाराजः "यथा हि कल्पितकथाया अष्टादशसहस्रश्लोका भागवते सन्निहिताः, तादृशो षट्त्रिंशत् सहस्रसंख्याकान् श्लोकान् विरचयितुं मयि सामर्थ्यम्" इति समुदतरत्। निदर्शनरूपेण-उपानहपादुकाप्रश्नोत्तरश्लोकानेव पूर्वं भवान् विभावयतु। श्रीमहाराजेन विरचितानां दशश्लोकानामेव वचनमाधुर्येण पदविन्यासे लालित्येन च विमुग्धः पण्डितप्रवरो महर्षेश्चरणावग्रहीत्, तस्य रचनाशक्तिञ्च भूरिशः प्रशंसन् स्वस्थानमगच्छत्।

**योगिराजस्य योगबलम्**– राजनाथनामोयो युवा कश्चिन्महर्षेश्चरणयो-रास्थाय स्वमनसि वेदाध्ययनस्य संकल्पं पर्यपालयत्। तस्याग्रहपूर्णप्रार्थनया श्रीमहाराजस्तं स्वान्तेवासिनमकरोत्। अन्यस्मिन् दिने स भोजनाद्यनन्तरं पूर्वविद्यालयात्स्वनामाङ्कनं परावर्तयामास। महर्षिमुपगच्छतस्तस्योपमण्डलाधि-कारिणा श्रीसोहनलालेन समं संवदतो रात्रिकाल आयातः। अधिकारिमहोदयश्च प्रतिदिनं स्वामिमहाभागाय दुग्धमुपाहरत्। श्रीस्वामिनः कुटीरं तस्य स्थानात् क्रोशद्वयान्तर आसीत्। स हि राजनाथमेव दुग्धपात्रं समानेतुमकथयत्। कालस्तमसाच्छन्नः, दर्षर्तौ कर्दमपूरितश्च पन्थाः, अतो राजनाथः स्वामिनः कुटीरं गन्तुं किञ्चित्सन्दिग्धमना अभूत्। श्रीसोहनलाल उवाच– तमसो बिभेषि? गुरुवरस्तु वनेष्वेव निवसति, कथं तेन समं ते निर्वाहः? तेन प्रोत्साहितो राजनाथो दक्षिणे हस्ते दुग्धपात्रम्, वामे च यष्टिकां कटिप्रदेशे शर्करापुटञ्च बद्ध्वा प्रचलितः। किञ्चिद् दूरे ह्येव स सलिलान्निर्गत्य पथिप्रसृतं भयावहं विषधरमेकं ददर्श। भयभीतो राजनाथः पश्चात् परावृत्तः, परं स तत्रापि भीषणं नागराजमपश्यत्। किञ्चित्कालं किंकर्तव्यविमूढो हि सोऽन्ततः स्वामिनः कुटीरं गन्तुं विनिश्चित्यो-त्क्रमणेन विषधरमुल्लंघ्य पारेऽगच्छत्। यदा हि स महर्षिमुपागच्छत्; श्रीमहाराजो विहस्यावदत् "किं मार्गे सर्पसमागमः? सर्पान् परिपश्यन् भयभीतश्च त्वमभवः"। राजनाथोऽतीव चकितः; कथं गुरुवरो मदागमनात्पूर्वमेव मार्गघटित-

घटनामवेदीत्। ततः प्रभृति स महर्षिं प्रत्यनन्यश्रद्धाशीलोऽभवत्।

**बाबा-आदमयुगस्य मानवोऽहम्** – पटनातः स्वामिप्रवरो मुंगेरनगरं प्रति प्रस्थितः। यात्रायामस्यामतिमनोरञ्जकघटनैका संघटिता। मुंगेरं प्रति गमनकाले मार्गस्थजमालपुरवाष्पशकटिसंगमस्थलेऽपरवाष्पयानप्रतीक्षायां किञ्चित् समयान्तरातिवाहनमावश्यकमासीत्। महर्षिश्च यानागमनप्रतीक्षणस्थले परिभ्रमन्नासीत्। तत्रैव सपत्नीकः कश्चिदांगलाभियन्ताऽपि विद्यमान आसीत्। कौपीनमात्रधारिणं परमहंसमेकं स्वपुरतः परिभ्रमन्तं वीक्ष्याभियन्तृपत्नी नेदं भद्रतरममन्यत। अभियन्ता महाभागो स्थात्र-(स्टेशन)-प्रमुखं समाहूयादिशत्; "इतस्ततो भ्रमन्तमशिष्टमिमं नग्नप्रायःसंन्यासिनं परिहर" इति। स्थात्राध्यक्षः (स्टेशनमास्टर) महर्षिमुपगम्यावदत् "भगवन्! मुंगेरगन्त्री वाष्पशकटिर्विलम्बायते, तत्रापरस्थाने भवन्तो बृसीमलंकृत्य विश्राम्यन्तु" इति। श्रीमहाराजो वास्तविकवृत्तमजानादकथयच्च– "मामितो निवारयितुकामं तं ब्रूहि– तस्य युगस्य मानवोऽहं यस्मिन् युगे हि आदमहव्वा दम्पती नग्नरूपेणैवादननगरोपवने पर्यभ्रमताम्।"

स्थात्राध्यक्षो हि गतः, महर्षिश्च पूर्ववत्परिभ्रमन्नेव स्थितः। ततोऽभियन्तामहोदयश्च स्थात्राध्यक्षं समाहूय स्वादेशं पुनरावर्तयत्, परं स हि स्वामिनं निवारयितुमसमर्थतां प्रदर्शयन्नुवाच; नायं भिक्षुकः कश्चित्; यो हि निवारयितुं शक्यः; एष हि प्रसिद्धसमाजसुधारकः स्वतन्त्रपरिव्राजको महर्षिर्दयानन्दः, यो हि नावामपि किञ्चिद् विगणयति। दयानन्दनामधेयं श्रुत्वैवाभियन्तामहानुभावो महर्षिमुपजगाम। मुंगेरगन्त्री शकटिस्थितिं यावच्च वार्तालापमकरोत्।

**केशवचन्द्रसेनमहाभागेन समं समागमः**– मुंगेरतो भागलपुरं प्रतिगच्छन् श्रीमहाराजः १९२९तमसंवत्सरस्थपौषमासे (दिसम्बर-१८७२-मासे) कालिकातां सम्प्राप्तः। तदानीं तत्र श्रीकेशवचन्द्रसेनमहाभागोऽतितरां प्राप्तप्रशंस आसीत्। स्वामिनि तत्र प्राप्ते सेनमहोदयः क्वचिद् बहिर्गतोऽवर्तत। परावर्तितो ह्येव स महर्षिं सम्मिलितुं तत्स्थानं सम्प्राप्तः। स्वपरिचयमप्रयच्छन्नेव च वार्तालापपरायणोऽभवत्। श्रीमहाराजोऽपि तस्य परिचयं नापृच्छत्। वार्तालापप्रसंगे ह्येव सेनमहोदयः "किं कदाचिद्भवतां केशवचन्द्रसेनेन सममपि साक्षात्कारो जातः" इति स्वामिनमपृच्छत्। "आम्, समभवत् सम्मिलनम्" इति श्रीमहाराजः समुदतरत्। "स हि कालिकातायां नोपस्थितः कुतो भवतां तेन सम्मिलनम्" इति परिप्रश्ने महर्षिर्विहस्यावदत्; "साम्प्रतमेव तेन सह सम्मिलनं प्रचलति, भवांश्चैव स्वयं केशवचन्द्रसेनः" इति। साश्चर्यं सेनमहोदयोऽपृच्छत् "अहमेव केशवचन्द्रसेनः इति कथं भवता परिज्ञातम्?" महर्षिरुवाच– "यादृशो वार्तालापप्रसंगो भवताऽनुष्ठितो न तादृशं कोऽपि कर्तुमपारयत्"। महर्षेरूहा-

शक्तिमनुभवन् सेनमहोदयोऽतितरां प्रमुदितः। ततः प्रभृति स स्वमनसि स्वामिनं प्रति प्रेमभावभरितः समादरशीलश्चाभवत्। द्वावेव महानुभावौ स्वराष्ट्रहितनिरतौ, अद्भुतप्रवक्तारौ, जनजीवने विद्युत्स्फुलिंगसञ्चारिणौ चास्ताम्। बहुशः समानतायां सत्यामपि भूयसी-असमानताऽपि द्वयोरुभयोरवर्तत। बृहती-असमानतैका-उभयोर्निम्नाङ्कितवार्तालापेन व्यक्तीभविष्यति, यथा—

एकदा सेनमहाशयः स्वामिनमपृच्छत् "विभिन्नधर्म-(मत)-अवलम्बिनः स्वस्वमान्यग्रन्थमेवेश्वरीयम्, एकान्त-(अन्तिम)-प्रमाणरूपञ्च मन्यन्ते, समुद्घोषयन्ति च; भवन्तश्च वेदानेवेश्वरीयज्ञानं वदन्ति; कथं वयं जानीमः कस्य कथनमेकान्तसत्याश्रितमिति?" प्रत्युरणे महर्षिः कुरान- बाइबिल-ग्रन्थयोरनेकदोषान् प्रादर्शयत्, वेदानाञ्च निर्दोषतां प्रामाणयन् चाकथयत् "निर्दोषत्वाद् वैदिकधर्मो ह्येव सत्यधर्मः" इति। महर्षेर्युक्तिशृखलां शृण्वन् तस्यापरिमितां प्रतिभाञ्चानुभवन् कदाचित् केशवचन्द्रसेनमहानुभावोऽकथयत्; "हन्त! अद्वितीयवैदिकविद्वानाङ्गलभाषां न वेत्ति, अन्यथा हरिवर्ष-(इंग्लैण्ड)- देशे प्रचारार्थगमने स हि मदीय मनोऽनुरूपोऽद्वितीयसहचरोऽभविष्यत्।" महर्षिरपि विहस्यावदत्; "हा हन्त! ब्रह्मसमाजनेता संस्कृतभाषां न जानाति, स हि तस्यां भाषायां लोकानुपदिशति यां भाषाञ्च नहि ते विजानन्ति" इति।

एकदा च सेनमहोदयो महर्षिमब्रवीत्; "भवान् हि संस्कृतभाषायामेव वार्तालापं करोति; पण्डितजनाश्च भवदभिमतं संस्कृतभाषानभिज्ञजनेभ्योऽन्यदेव प्रवदन्ति, येन न भवदभिमतप्रसारः; अतः स्वदेशीयभाषायामेव भवता स्वप्रवचनादिकं कर्तुं प्रयतनीयम्।" महर्षिः सेनमहोदयस्य सम्मतिमन्वमन्यत। स हि महर्षिमिदमपि न्यवेदयत्– "जनसभासु गच्छतो भवतः पूर्णवस्त्रधारणमपि सुशोभनं स्यात्" महर्षिरिममपि प्रस्तावमनुमेने।

**विद्रोही परिव्राजकः–** कालिकातानगरं तदानीं भारतराष्ट्रस्य राजधानीरूपेणावर्तत, लार्डनार्थब्रुकमहोदयश्च प्रधानप्रशासक-(वायसराय)-पदे समधिष्ठित आसीत्। १८७३वर्षस्थजनवरीमासे बृटेनदेशीयलार्डविशपमहोदयः प्रधानप्रशासकेन समं महर्षेः सम्मिलनं समायोजयत्। द्विभाषकसहयोगेन सम्पन्नायाः सम्मिलितवार्ताया अस्या इदं हि प्रश्नोत्तरात्मकं प्रामाणिकं विवरणम्।

**प्रधानप्रशासकः–** (शिष्टाचारं प्रदर्शयन्) पण्डितदयानन्दमहाभाग! सूचितोऽहं यत्– अन्यमतमतान्तराणां धर्माणाञ्च भवत्कृतकठोरालोचना तत्तद् धर्मावलम्बिनां मनःसु विक्षोभमुपजनयति। विशेषतश्च यवनक्रिश्चीन मतानुयायिनां मनःसु भवद्विरुद्धं भयावहविचारानुद्भावयति। किं भवान् स्वविरोधिजनेभ्यो भयं किञ्चिदनुभवति? अर्थात् स्वात्मनः कृते प्रशासनतः सुरक्षाप्रबन्धं कञ्चिदपेक्षते?

**महर्षिदयानन्दः—** आंगलशासने स्वविचारसरणिं प्रसारयितुं प्रचारयितुञ्च पूर्णस्वतन्त्रोऽहम्; व्यक्तिरूपेण स्वात्मकृते नाहं किमपि भयमनुभवामि।

**वायसरायमहोदयः—** यद्येवं, तत् किं भवन्तः स्वदेशे बृटिशप्रशासनजनितोपकारानपि वर्णयिष्यन्ति? अथ च भवता प्रवचनारम्भे या प्रभुप्रार्थना विधीयते, तस्यामपि स्वदेशोपर्यनवरत-(अखण्ड)-बृटिशशासनकृते प्रार्थयिष्यन्ति?

**महर्षिदयानन्दः—** असमर्थोऽहं प्रस्तावस्यास्य स्वीकरणे; यतोऽयं हि मे सुस्थिरो विश्वासः, यत्स्वदेशवासिनामबाधराजनीतिकसमुन्नतिं विश्वराष्ट्रेषु समानस्तरीयगौरवञ्चाधिगन्तुं राष्ट्रं मे सर्वतन्त्रस्वतन्त्रम्, पूर्णप्रभुत्वसम्पन्नञ्च भवेत्। श्रीमन्! अहं हि प्रतिप्रातःसायं परमप्रभोरपारानुकम्पया स्वदेशस्य विदेशीयदासभावतो विमुक्तिमेव प्रार्थयामि इति।

नार्थब्रुकमहोदयोऽत्रैव वार्तालापं समाप्नोत्। लन्दनस्थभारतीयकार्यालयञ्च पूर्णविवरणं प्रस्तुवन् संसूचयामास "सतर्कदृष्टिपथे नियोज्योऽयं विद्रोही परिव्राजकः।" इति।

१९३०तमसंवत्सरस्य चैत्रशुक्लचतुर्थ्यां कालिकातातः प्रस्थाय महर्षिप्रवरो हुगली-भागलपुर-पटना-छपरा-आरा-मिर्जापुर-प्रयाग-लखनऊ-कानपुरादिनगरेषु परिभ्रमन् फर्रुखाबादस्थितस्वपाठशालायामागत्य विरराज।

**गोरक्षाया उपदेशः—** साम्प्रतमुत्तरप्रदेशस्य-(संयुक्तप्रान्तस्य)- राज्यपालम्योरमहोदयेन, तत्प्रान्तीयशिक्षानिदेशककभसनमहाशयेन च समं महर्षेः सम्मिलनं समभवत्। श्रीमहाराजस्य हृदयं गोरक्षाविषयेऽतीवकरुणामयमासीत्। अतो वार्तालापप्रसंगे स हि राज्यपालमहोदयमकथयत्; साम्प्रतं स्वदेशयात्रापरो भवान् भारतसचिवसभायां सहभागी भविष्यति, तत्र हि भवताऽवश्यं भारतहितचिन्तकेन भाव्यम्। गोवधप्रतिबन्धे च प्रयतनीयम्। राज्यपालमहोदयो महर्षेः कथनं सावधानः सन्नशृणोत्; यथाशक्तितत्कथनानुरूपं प्रयतितुं च प्रत्यजानात्।

एकदा श्रीहेमचन्द्रः प्रणतिपूर्वकं श्रीमहाराजमपृच्छत्। "भगवन्! बहवः पण्डितधुरन्धरा भवता समं शास्त्रार्थकृते समागच्छन्ति, किं सर्वे ह्येव ते भ्रान्तिग्रस्ता? महर्षिर्विहस्योवाच; "सत्यासत्यविवेकं परिचिन्वन्तोपि बहवो विद्वांसो वृत्तिलोभेन सत्यसरणिं (सन्मार्गम्) नानुसरन्ति"

फर्रुखाबादतः प्रस्थाय महर्षिः कासगञ्ज-छलेसरनगरे परिभ्रमन् १९३०तमसंवत्सरस्य पौषमासे अलीगढनगरमागत्य राजाजयकृष्णस्यातिथिरभवत्। तस्य शुभागमनवृत्तमभिज्ञाय सहस्रशो नगरवासिनः पार्श्ववर्तिग्रामीणजनाश्च सदुपदेशग्रहणायागन्तुं प्रवृत्ताः।

**स्वदेशीयवस्तूनां प्रयोगोपदेशः**— छावलीनिवासी ठाकुर-ऊधवसिंहः स्वपित्रा ठाकुरभूपालसिंहेन समं महर्षेः पुण्यदर्शनार्थम्- अलीगढ़नगरमाजगाम। तस्य– (ऊधवसिंहस्य) सर्वाण्येव परिधानानि विदेशीयवस्त्रनिर्मितानि नवशैली-संयुतानि चासन्। छलेसरपाठशालायां किञ्चित्कालं कृताध्ययन ऊधवसिंहः श्रीमहाराजस्य पूर्वपरिचितः; अतो महर्षिस्तं सस्नेहमुवाच "ऊधव! परिकल्पयस्व; पिताश्रीस्ते सामान्यानि साधारणानि च स्वदेशोयवस्त्रनिर्मितानि परिधानानि धारयन्नपि स्वजातौ वर्गे चातीव सम्मानं लभते। त्वं हि किं विदेशीयवस्त्रनिर्मितनवपरिधानधरः स्वात्मानं पितुरपेक्षयाधिकं सुसंस्कृतं सम्मानितश्च मन्यसे? प्रियवर! स्वदेशीयवेशभूषा ग्रहणेनैव मानवः सम्मानं शोभाञ्च लभते। महर्षेरुपदेश ऊधवसिंहस्य अन्तर्हृदि प्रविष्टः। स च स्वस्थानमागत्य विदेशीयपरिधानान्यवतार्य प्राचीनशैलीयुतानि स्वदेशीयपरिधानानि पर्यधारयत्।

ठाकुरमुकुन्दसिंहेन प्रार्थितः श्रीमहाराज एकदासामगानमगायत्। तद् गानं शृण्वन्त ऊधवसिंहप्रभृतयः सर्वेऽपि भद्रजनाः "अतीव मधुरस्वरेण गीतमद्भुत-सामगानमिदमस्माभिरश्रुतपूर्वमिति वदन्तः" परमानन्दनिर्भरा अभूवन्।

**कथं स्वल्पीयसा यज्ञेन पवनप्रवाहः सुगन्धितो भवति**— सरसय्यद-अहमदखानमहाभागः प्रायो नित्यमेव महर्षिसेवायामुपातिष्ठत्। एकदा कतिपय-प्रतिष्ठितयवनक्रिश्चीनजनानामुपस्थितौ स श्रीमहाराजेन समं निम्नाङ्कित-प्रश्नोत्तरसंलापमकरोत्—

**सय्यदमहाभागः**— भगवन्! भवदीया अन्यप्रसंगास्तु युक्तियुक्ततां भजन्ति; परम् "स्वल्पीयसा यज्ञेन पवनप्रवाहः सुगन्धितो भवति" इति युक्तियुक्तं न प्रतीयते।

**महर्षिः**— यज्ञलाभान् परिगणयन् पर्यपृच्छत्; सय्यदमहोदय! कियज्जनानां भोजनं भवन्महानसे प्रतिदिनं पच्यते?

**सय्यदमहाभागः**— प्रायः पञ्चाशत्षष्ठिं यावज्जनानां दैनिकोजनं परिपच्यते।

**महर्षिः** — कियत्परिमाणमितश्च द्विदलं परिपच्यते?

**सय्यदमहाभागः** — द्विदलमपि प्रायः षट् सप्तसेटकपरिमाणं मितं पच्यते।

**महर्षिः** — तत्परिमाणमितं द्विदलं किञ्चित्परिमाणमात्रस्य हीगपदार्थस्य सुरभिमपेक्षते?

**सय्यदमहाभागः** —प्रायो एका रक्तिका परिमाणं मितं हींगपदार्थं पर्याप्तं भवति।

**महर्षिः** – किमेतावत्स्वल्पीयो हींगपरिसेचनं बहुतरं द्विदलं सुवासयति?

**सय्यदमहाभागः**– अवश्यं निश्चितं च सुवासीकरोति।

श्रुत्वैतन्महर्षिरुवाच, महाभाग! हींगद्विदलपरिमाणवदेव स्वल्पमपि कृताग्निहोत्रं विस्तृतमपि वायुमण्डलं सुवासयति। महर्षेर्युक्तियुक्तप्रत्युत्तरेण प्रमुदितः सय्यदमहोदयो महर्षये स्तुतिं प्रस्तुवन् स्वस्थानं परावर्तितः।

महर्षेः प्रवचनेषु-अलीगढ़नगरस्थ-उच्च-पदाधिकारिणः, राजकर्मचारिणोऽपि समागत्य सोत्साहं धर्मोपदेशमशृण्वन्। प्रायः दशसहस्रसंख्याता जना उपस्थिता अभूवन्। श्रीमहाराजस्य गम्भीरस्वरघोषं प्रारम्भतोऽन्तिमश्रोतृजनं यावत्सर्वे ह्येव समरसमशृण्वन्। प्रवचनशब्देष्वेतावान् सरलतायाः समावेशो माधुर्यनिवेशश्चाभवद् यत् सर्वसाधारणजनोऽपि सुगमतया तद्भावाधिगममकरोत्। तस्य कथनप्रकथनान्यद्भुतरसभरितान्यासन्। वीररसवर्णनप्रसंगे श्रोतॄणां हृदयेषु समुच्छलदोजस्विप्रवाहः भुजासु वीरभावस्फुरणम्, ऊष्मावेशजन्यरक्तवेगश्चावर्द्धत। स्वदेशदुर्दशायाः सकरुणचित्रचित्रणे च श्रोतारः करुणाम्बुधौ निमग्ना अभूवन्। तेषां लोचनेभ्यश्च सर्वतो धारासाराश्रुप्रवाहोऽवहत्। शान्तरसवर्षणे समस्तापि सभा निःस्तब्धा, नीरवताञ्च दधाना, हृदयभूमावानन्दमेघबिन्दुवर्षणमिवानुभवन्ती प्रशान्तभावेन स्थिताऽशृणोत्। प्रवचनेषु हास्यरसस्यापि पर्याप्तपुटमासीत्; घटिकार्धघटिकान्तरे परिहासजनकोक्तिवाक्यदृष्टान्तादीनामेतादृशोपस्थानमभवत्; येन प्रहसन्तः श्रोतारः स्वात्मनो व्यस्मरन्। तेषां लोचनकणिकासु च हर्षाश्रुबिन्दवः प्रपूरिता अभूवन्। श्रीमहाराजस्य प्रवचनानि शृण्वन्तः श्रोतारोऽकथयन्– नैतादृशो भावपूर्णव्याख्याता, प्रभावोत्पादकोपदेष्टा, सारगर्भितप्रवक्ता च कदाप्यस्माकं दृष्टिपथमागतः।

अलीगढ़तः प्रस्थाय हाथरसनगरमनुगच्छन्महर्षिः १९३०तमसंवत्सरस्य फाल्गुनशुक्लैकादशयां वृन्दावनस्थराधा-उद्याने सुशोभितोऽभूत्। वृन्दावनस्य ब्रह्मोत्सवे सहस्रशो जनाः समन्विता अभूवन्। महर्षिप्रवरस्तत्र निर्भीकतया मूर्तिपूजातिलकत्रिपुण्डादीनां खण्डनं प्रारभत येन पौराणिकजनसम्मर्देऽतितरां विक्षोभः; ते हि रंगाचार्यमुपस्थिताः। इतश्च महर्षिः स्वयमपि शास्त्रार्थकृत आमन्त्रणयुतं पत्रमेकं रंगाचार्यं सम्प्रैषयत्। श्रीरंगाचार्यश्च काशीशास्त्रार्थस्य घटनाक्रमेण पूर्णतोऽभिज्ञः। यस्य विद्वद्वीरस्य वाक्शरैः संघृष्टाः काशीस्थविदुषां तीव्रवाक्शरा अपि निष्फलतां गताः, मथुरायाः सामान्यवाक्शरास्तस्य मन्तव्य-कवचभेदने कुतः समर्था अभविष्यन्? रंगाचार्यः पूर्वं "जनमेलकदिवसेष्व-वकाशाभावे शास्त्रीयविचारविमर्शोऽसम्भवः" इति सन्दिदेश। परिसमाप्ते च जनसम्मेलने रुग्णताव्याजेन महर्षेरामन्त्रणं प्रत्याचक्षीत्। इत्थं रंगाचार्यः

शास्त्रार्थरणस्थले नायातः, परं तस्य शिष्यजना अधमभावेन महर्षिमपमानयितुं भयभीतं च कर्तुं प्रायतन्त।

वृन्दावने धर्मध्वजमारोप्य महर्षिः मथुरां सम्प्राप्तः। तस्यागमनात् पूर्वं मथुरानगरस्य पण्डितवर्गः शास्त्रार्थकृते सगर्वं सन्नद्धतामुदघोषयत्; परं महर्षिप्रवरे तत्र सम्प्राप्ते न हि कोऽपि पण्डितवरस्तमभिगन्तुं साहसमकरोत्। एकदा कतिपयजनैरुत्तेजिताश्चतुष्पञ्चशत संख्याताः स्थूलयष्टिकरधराः पण्डाभिधेयधूर्तजना महर्षेः स्थानं सम्प्राप्ताः। महर्षेर्निवेशनमप्यसुरक्षितं नासीत्; तत्र हि ऋषिभक्तराजपुत्रजनाः सततसावधानाः प्रहरिणः स्थिता आसन्। धूर्तसम्मर्दश्च महर्षेः स्थानं सुरक्षितं वीक्ष्य किञ्चित् कालं दुर्वचनानि वर्षन्निराशः परावर्तितः।

लेखाकारः (मुनीम) मांगीलालः कश्चिन्महर्षिं प्रत्यतीवद्वेषपरो बभूव। स हि महर्षेर्धवलां कीर्तिं कलङ्कयितुमुपायानचिन्तयत्। एकदा यावत् श्रीमहाराजः श्रेष्ठिलक्ष्मीदासस्य भवने प्रवचनपर आसीत्; तावदेव द्वौ सुरामांसविक्रेतारौ उच्चैः स्वरेणावदताम्। स्वामिन्! बहुतरं देयधनं धारयसि, प्रदानेनानृणतां कथं न गच्छसि। तयोर्दुष्कथनं श्रुत्वैव श्रोतॄणां लोचनानि रोषेणारक्तानि जातानि परं महर्षिप्रवरः सर्वानिव प्राशान्तयत्। प्रवचनसमाप्तौ श्रीमहाराजस्तौ समाहूयापृच्छत् ''सत्यं ब्रूतम्; को युवामेवं कथयितुं सम्प्रैरयत्'। मुग्धौ हि तौ बद्धाञ्जली-अकथयताम्, ''भगवन्! लेखाकारमांगीलाल आवामेवं प्रैरयत्, यत्सभायां पूर्वोक्तवाक्योच्चारणेन पारितोषिकं युवां प्राप्स्यथः'' इति। यदि हि भवतोऽप्रसन्न-तामावामवेदिष्व; न कदापि शब्दानिमानुच्चारयेव। श्रीमहाराजेन मुग्धजनौ तौ विमुक्तौ, अधममांगीलालस्यापवादश्च सर्वत्र प्रासरत्।

कदाचिच्च केचन दुष्टजनाः पापीयसीं महिलामेकां छलछद्मचातुर्यं प्रशिक्षन्तः महर्षेः प्रवचनस्थलं सम्प्रैषयन्। मार्गस्था बहुतरं दुर्विचिन्तयन्त्यपि सा प्रवचनसभां सम्प्राप्ता यावन्महर्षेः परमपुनीतं तेजोमयं प्रशान्तमुखमण्डलमप-श्यत्तावत्सम्पूर्णां मनोमलिनतामपहाय मुनिवरं प्रति श्रद्धाशीला भक्तिभावविह्वला चाभूत्। ''पापशीलया मया स्वमनसि महामहिमदेवात्मानमिमं कलङ्कयितुं कल्पयन्त्या महत्पातकं कृतम्'' इति विचिन्तयन्ती साऽतीव व्यथिता व्याकुला चाभवत्। श्रीमहाराजमुपगम्य शिरसा भूमिं स्पृशन्ती भावविह्वला च सती सकरुणं क्षमामयाचत। पश्चात्तापाश्रुक्लिन्नाञ्चला सा सकरुणं रुदन्ती सर्वसमक्षम-धमजनप्रेरणाजनितवृत्तं न्यवेदयत्। महर्षिप्रवरस्तां समाश्वासयन्नुवाच– देवि! प्रयाहि; सर्वेश्वरस्ते साम्प्रतिकीं सुमतिं सुस्थिरां कुर्यात्।

मथुरातः प्रस्थाय श्रीमहाराजः काशी-मिर्जापुरादि स्थानेषु पर्यटन्

प्रयागस्थले-अलोपीदेवी-उद्याने विराजमानोऽभूत्। तस्यागमनवृत्तमभिज्ञाय सहस्रशः सद्गृहस्थाः, शतशश्छात्राश्च तमुपाजग्मुः। महाविद्यालयस्य प्राध्यापका अपि तत्र समागच्छन्। "मैक्समूलरमहोदयस्य वेदभाष्यं भ्रममूलकम्" इति सिद्धं कुर्वन्महर्षिः क्रिश्चीनमतं तीव्रमालोचयत्। एकदा हि पण्डितकाशीनाथशास्त्री श्रीमहाराजमादेशपूर्वकमुवाच, "स्वामिन्! किमर्थं सम्पूर्णेऽपि देशे त्वया विक्षोभः कोलाहलोऽयं प्रसारितः? प्रशान्तभावेन महर्षिरुवाच; विविधमत- (पन्थ)- अनुयायिभिः पण्डितम्मन्यैः सकलोऽपि मानववर्गो निजछलप्रपञ्चजाले ग्रसितः; जडमूर्तिपूजनेन तेषां मतिष्वपि जड़ता समाविष्टा; देशवासिषु सत्यासत्यविवेकोऽपि मन्दायते; सर्वस्यैतस्य सुधारायैवैष कोलाहलः। ऋषिवरस्य प्रत्युत्तरेण काशीनाथः प्रशान्तः।

**योगिराजो दयानन्दः**— पण्डितठाकुरप्रसादस्य हृदये महर्षेर्योगमुद्रां निरीक्षितुं प्रबलाभिलाषोऽवर्तत। एकदा हि स सेवकजनानामनुमतिमवाप्य तत्कुटीरद्वारि समवस्थितो यत्र हि श्रीमहाराजो ध्यानावस्थितोऽवर्तत। तत्र स बहुकालं यावन्महर्षेर्भव्यस्वरूपमवलोकयन् स्थितोऽपश्यत्; यत् श्रीमहाराजस्यासनं शनैः शनैर्भूमितलादुत्थाय निराधाराकाशे समवस्थितः; मुखमण्डलञ्चाद्भुत—कान्तिमयं परितस्तेजोबिम्बान्वितञ्चासीत्



एकदा समित्रः पण्डितसुन्दरलालो महर्षेः पुण्यदर्शनार्थमायातः। श्रीमहाराजश्च तदा ध्यानावस्थितोऽवर्तत। प्रशान्तं प्रतीक्षमाणास्ते समुपाविशन्। प्रायोऽर्धहोरानन्तरमेव श्रीमहाराजो विहसन् बहिरायातः। "किं भवतो हास्य-कारणम्?" इति पण्डितवरेण पृष्टः स उवाच, प्रतीक्षस्व क्षणम्, कश्चिन्मनुष्यो मामुपयाति, महत्कौतुकं तस्मिन्नायाते भवन्तो द्रक्ष्यन्ति" इति। ततो घटिकार्धानन्तरमेव मिष्टान्नसहितो ब्राह्मणः कश्चित्सम्प्राप्य "स्वामिमहाभाग! 'नमो नारायण' इति वदन् मिष्टान्नं समर्प्य ततः स्वल्पं भोक्तुं प्रार्थयत्। महर्षिरपि तस्मात् किञ्चिदुद्धृत्य तस्मै दददश्नातुमादिशत्, परं स हि मिष्टान्नं नागृह्णत्; ततः श्रीमहाराजः सतर्जनमादिशत् "कथं न गृह्णासि?" स हि प्राकम्पत, परं मिष्टान्नं नाग्रहीत्। तदा महर्षिरुवाच, अयं हि विषमिश्रितमिष्टान्नमस्मत्कृते समानयत्। तत आरक्षिजनाह्वाने प्रवृत्तं पण्डितसुन्दरलालं मुनिवरो न्यषेधीत्, अब्रवीच्च; "अयं हि-स्वपापाचरणादतितरां प्रकम्पते, अयमेवास्मै पर्याप्तो दण्डः, अत आरक्षिजनाह्वानमनावश्यकम्" एवं क्षमानिधिर्दयानन्दस्तं ब्राह्मणं किञ्चित्प्रशिक्ष्यामुञ्चत्। नियतकार्याणि परिसमाप्यैव श्रीमहाराजो विश्राममकरोत्। नियतकर्तव्यकार्येषु स दैहिकं सुखदुःखमपि कदापि न पर्यगणयत्। दिवस एकस्मिन्महर्षेः प्रवचनमुद्घोषितम्; परं स ह्यतितरां ज्वरग्रस्त आसीत्। तदा भक्तजनैर्मुहुर्मुहुर्वार्यमाणोऽपि स "ज्वरः स्वकार्यं करोति, अहञ्च स्वकर्तव्

निर्वक्ष्यामि'' इति ब्रूवन् प्रवचनस्थलं सम्प्राप्तः।

महर्षिर्दयानन्दः कर्म धर्मं (कर्तव्यकर्मानुष्ठानम्) प्राधान्यमदात्; स हि परहितकरं कर्ममयजीवनमेव सर्वोत्तमं जीवनममन्यत। प्रयागस्थगंगातीरे वयोवृद्धो महात्मैको न्यवसत्। यत्तत्समये स्वामिना सह सम्मिलने स हि ''वत्स'' (बच्चा) शब्देन तं समबोधयत्। एकदा स वयोवृद्धसाधुः महर्षिमवदत्; ''वत्स दयानन्द! यदि प्रारम्भत एव भवान् निवृत्तिमार्गे स्थिरीभूय परोपकारप्रपञ्चग्रस्तो नाभवत्तदाऽस्मिन्नेव जन्मनि ते मोक्षलाभोऽभविष्यत्। साम्प्रतं जन्मान्तरमेकमावश्यकं भविष्यति। महर्षिरुवाच, महात्मन्! नाहं स्वमुक्तिविषये किमपि चिन्तयामि; परं येषां लक्षशो जनानां मुक्तिचिन्तनविषये मे मनो दूयते, ते मुक्तिं लभेरन्, काममहं भूयांसि जन्मानि धारयेयम्। दुःखत्रासतः, दीनदशायाः, दुर्बलावस्थायाश्च परमपितुष्पुत्रानेतान्विमोचयन् स्वयमेवाहं मुक्तो भविष्यामि, इति।

प्रयागे वेदामृतवर्षां वर्षयन् श्रीमहाराजो निरन्तरं मुम्बई-वासिनामामन्त्रणानि प्राप्नोत्; तत्रत्य भक्तजना महर्षेः पुण्यदर्शनाय सदुपदेशश्रवणाय चातीव समुत्सुका आसन्। तेषां प्रार्थनां प्रमाणयन् श्रीमहाराजः १९३१तमसंवत्सरस्य आश्विनशुक्लद्वादश्यां मुम्बईनगरं प्राप्नोत् । नगरस्थवाष्पयानपत्तने (स्टेशन) प्रायोऽनेके भद्रपुरुषास्तं स्वागतं व्याहर्तुमुपस्थिता आसन्। ते हि सादरं महर्षिं सत्कृत्य बालकेश्वरस्थाने तस्य निवासव्यवस्थामकुर्वन्। अपरदिवसत एव महर्षेः प्रवचनानि प्रवृत्तानि। सहस्रशो जनास्तस्य प्रवचनेष्वागन्तुं प्रवृत्ताः। मुम्बई-नगरे बल्लभसम्प्रदायिनां विशेषप्रसार आसीत्। अतो महर्षिस्तस्यैव मतस्य खण्डनं प्रारभत। स्वमतस्य प्रबलखण्डनेन बल्लभसम्प्रदायिनोऽतीवविक्षुब्धा अभूवन्। गोकुलीयगोस्वामिषु जीवनजीगोस्वामी अतीवधूर्तराजोऽवर्तत। स हि गुप्तरूपेण महर्षिसेवकं बलदेवसिंहमामन्त्र्योवाच ''विषादिप्रयोगेण यदि भवान् स्वामिनो जीवनलीलां परिसमापयेत्तदा वयमेकसहस्ररुप्यकमितं धनराशिं ते प्रदास्यामः''। प्रणप्रमाणरूपेण तस्मै पञ्चरुप्यकाणि पञ्चसेटकमितं मिष्टान्नं सहस्ररुप्यकराशि-प्रदानप्रणपत्रञ्च विलिख्य प्रादात्। यावद् बलदेवसिंहः स्वस्थानमवाप, तावन्मानसचक्षुर्भ्यां मुखाकृतिभावभंगिमाभिज्ञो महर्षिस्तमपृच्छत्; ''बलदेव! गोकुलीयान् गोस्वामिनः प्राप्त आसीः? किं विनिश्चितम्? किञ्च स्थिरीकृतं प्राप्तं च?'' इति। स्वामिभक्तसेवकः सर्वमपि सत्यं न्यवेदयत्। तदा महर्षिरुवाच, ''भद्र! विभावय, बहुवारं मे विषं प्रदत्तम्, परमहं जीवामि, साम्प्रतमपि न मरिष्ये''। सेवकः श्रीमहाराजस्य चरणावभिगृह्य क्षमामयाचत। गोकुलीयांश्च नाग्रतः कदापि पुनर्गन्तुं प्रत्यजानात्।

केचनाधमपामरा अवसरान्वेषिणो भवन्तिः; येन चावसरं सम्प्राप्य

कण्टकमिमं मर्दयेयुः, परं न हि खलानां तेषामभिप्रायः सिद्धः। निर्भयोऽपि महर्षिर्नासावधानः। तस्य सावधानतयैव बहूनि दुरितानि दूरिकृतानि। सतत-सावधानता महर्षेर्विशेषगुणः; स हि स्वावासस्य लघुतराण्यपि कार्याणि वस्तुजातान्यपि च निरैक्षत। मुम्बईनगरे श्रेष्ठिनैकेन स्वीयापणस्थसेवकाः "महर्षिसेवकेभ्यो यथापेक्षितसर्वं भोज्यपानवस्तुजातं प्रदेयम्, मूल्यविवरणपत्रञ्च मे सम्प्रेषणीयम्" इति समादिष्टा आसन्। एकदा सम्प्राप्तवस्तुनिरीक्षणे महर्षिणा "अपेक्षितमात्रातः सप्तधाधिकं वस्तुजातं सम्प्राप्तम्; सेवकजनाश्चाधिकसम्प्राप्त-वस्तुजातं विक्रीय लाभमर्जयन्ति" इति परिज्ञायापराधिनौ सेवकौ द्वौ बहिष्कृतौ।

**मूर्तिपूजालोचनपरकव्याख्यानम्**— मुम्बईनगरे मूर्तिपूजनविषये महर्षेरद्भुतं प्रवचनमभूत्। स हि प्रोवाच— "जडरूपामूर्तिः, तामेवेश्वरं मन्यमानानां कृते परमेश्वरोऽपि जडरूपः" इति सिद्धो भविष्यति। अथ च-ईश्वरसमानमन्यमेकमीश्वरश्चेन्मन्यन्ते तदा नेश्वरस्येश्वरत्वमवतिष्ठते। यदि च मूर्तावीश्वरांशः समाविशति" इति स्वीक्रियेत तदेश्वरस्याखण्डभावो न सिध्यति। "भावनायां भगवान् वसति" इति कथयन्ति चेत् काष्ठखण्डे इक्षुदण्डस्य, मृल्लोष्ठे च शर्कराया भावनया न हि लेशतोऽपीष्टसिद्धिः। मृगमरीचिकायां बहुशो जलं विभावयतोऽपि मृगस्य जलपिपासा नोपशाम्यति अतो विश्वासकल्पना-भावनाभिश्च सर्वं सत्यसमावेशोऽपि परमावश्यकः। ततः श्रीमहाराजो मर्मस्पर्शि-शब्देषु मूर्तिपूजनजनितहानीरवर्णयत् प्रवचनसभायामति-प्रभावितश्रोतृणाम्-संख्यातसम्मर्द आसीत्।

**लेखनकार्यम्**— मुम्बईनगरं प्रवसता श्रीमहाराजेन प्रवचनातिरिक्तं लेखनकार्यमपि बहुशोऽनुष्ठितम्। तत्र गमनान्मासद्वयपूर्वमेव "सत्यार्थप्रकाशः" ग्रन्थो विलिखितो राजाजयकृष्णदासमहाभागं मुद्रणाय प्रदत्त आसीत्। तत्र स्थितेन च तेन 'बल्लभाचार्यमतखण्डनम्' 'स्वामिनारायणमतखण्डनम्' 'वेदान्तध्वान्त-निवारणम्' प्रभृतिपुस्तकानि मुद्राप्य प्रकाशितानि। संस्कारविधिग्रन्थलेखनमपि तत्रैव प्रचलितमासीत्।

**आर्यसमाजस्य-अंकुरम्**— श्रीमहाराजस्य धर्मप्रवचनानि शृण्वन्तोऽनेके-भद्रपुरुषास्तस्यानुगामिनोऽभूवन्। महर्षेर्विचारसरणिं प्रसारयितुं प्रचारयितुं स्थिरीकर्तुञ्च कस्याश्चित्संस्थाया आवश्यकतामनुभवन्तो बहुशो भद्रजनाः महर्षिमुपजग्मुरकथयंश्च, "भगवन्! भवदुपदेशजनितस्थिरलाभानुष्ठानाय वयं हि संस्थामेकां संस्थापयितुमिच्छामः" "भवान् स्वश्रीमुखतस्तस्या नामकरणं विधायानुगृह्णातु" इति। श्रद्धालुजनानां सोत्साहवचनानि शृण्वन् महर्षिः किञ्चित्कालं नेत्रे निमील्य ध्यानमग्नो बभूव; ततश्च लोचन उन्मील्योवाच,

"आर्यसमाजः" इत्यस्याः संस्थायाः समुचितं नामकरणम्। भक्तजना "अत्युत्तमम्" इति व्याहरन्तो महर्षेः कथनमन्वमोदयन्। ततश्च पञ्चविंशति-सत्संगिनां नामानि विलिखितानि; परं कतिचित्कारणैस्तदानीं आर्यसमाजस्य स्थापना न भवितुमशक्नोत्।

**पुष्पवर्षणमेव प्रस्तरेष्टिकावर्षणं मन्ये**— मुम्बईतः प्रस्थाय श्रीमहाराजः सूरतनगरं सम्प्राप्तः। अत्र हि सौदागरप्रेसप्रबन्धकस्य प्रकोष्ठे निवासव्यवस्थाऽभूत्। अत्र हि स स्वामिनारायणरामानुजबल्लभसम्प्रदायानां तीव्रालोचनां व्यदधात्। महर्षेः पञ्चमं प्रवचनं कविनर्मदाशंकरस्य तत्त्वावधाने तस्य गृहाभिमुखमभूत्। इच्छाशंकरनामकः पौराणिकपण्डितः कश्चित् प्रवचनान्तर एव समुत्थितः प्रतिमापूजनविषये पौराणिकप्रमाणानि प्रास्तौत्, परं श्रीमहाराजस्य कतिपय प्रत्युत्तरैरेव स प्रस्खलितः प्राकम्पत च। तदा हि साम्प्रदायिकजनाः प्रस्तरेष्टिकार-जांसि प्रक्षिपन्तः कोलाहलमकुर्वन्। महर्षेः सहायकवर्गः प्रवचनमवरोद्धुं प्रार्थयत्, परं श्रीमहाराजः "स्वबन्धुजनप्रक्षिप्तानि रजःप्रस्तरेष्टिकादीनि मे पुष्पवर्षणानीव सन्तीति" संवदन् "नाहं प्रवचनं परिसमाप्नोमि" इति निश्चयेन प्रवचनसम्पूर्तिमकरोत्।

**युवजनेभ्य उपदेशः**— एकदा ऋषिवरो भ्रमणार्थमगच्छत्। विद्यालयानाम-नेकशो युवानश्छात्रास्तमन्वगच्छन्; महर्षिस्तान् ब्रह्मचर्यधारणमशिक्षत; पयोदधि-घृतसदृशपौष्टिकपदार्थानामशनपानञ्च निरदिशत्, मादकवस्तूनां सेवनजनितदोषान् प्रदर्शयन् व्यायामप्रशिक्षणमदात्, अब्रवीच्च "अशनपानमिव व्यायामोऽपि नित्यमनुष्ठेयः, बलवन्तो युवान एव सुखिनः सुप्रसन्नाश्च भवन्ति, निर्बलजनानां जीवनं निस्सारं, नीरसं विविधरोगास्पदं नरकधामैव सत् स्थीयते। श्रीमहाराजस्य कोमलसरलसुव्यवहारेण युवानोऽतीवप्रभाविता अभूवन्। सूरतनगरतः प्रस्थाय महर्षिः भड़ौचनगरे नर्मदातीरस्थभृगु-आश्रमे सुशोभितोऽभूत्। दैनिकसायन्तन-प्रवचनेषु सहस्रशो जनाः सद्धर्मोपदेशलाभायागन्तुं प्रवृत्ताः।

**केषु कोपः?** एकदा माधवरावत्र्यम्बकः कश्चित् सदलबलं सभास्थले समागत्य मूर्तिपूजनविषये शास्त्रार्थकृते समुद्यतोऽभूत्। पलचतुष्पञ्चकेष्वेव तस्य वैदुष्यनिधिः परिसमाप्तः। ततश्च सोऽङ्गुल्या परितर्जयन् महर्षिं प्रति दुर्वचनानि प्रयोक्तुं प्रवृत्तः। श्रुत्वैतत्सेवकबलदेवस्य लोचने रोषारुणे संवृत्ते। स हि उच्चैः स्वरेण त्र्यम्बकमवदत् "अपसरेतः, नोचेत् साम्प्रतमेव ते कपालक्रियां विधास्यामि। पुनर्यदिगुरुदेवाभिमुखं तर्जनीयं गता नहि देहेऽस्थिपञ्जरः स्थास्यति" इति। बलदेवस्य कोपानलं वीक्ष्य त्र्यम्बको भयेन प्राकम्पत। तदैव दयानिधिर्दयानन्दः प्रावोचत्; "बलदेव! केषु कोपः? बान्धवा इमेऽस्माकम्, एतेषां कल्याण-

कामनामभिलक्ष्यैवाहं दिवानिशं परिभ्रमामि। प्रशान्तः सन् क्षमस्वैनम्; इति। गुरुदेवस्य वचनैर्बलदेवः प्रशान्तः माधवोऽपि सहजमुक्तमात्मानं मन्यमानस्ततोऽपासरत्।

**आवश्यकं मर्यादापालनम्**– भोजनान्तरं स्वामिमहाभागः स्वकर्मचारिवर्गमपि किञ्चित्कालं विश्रामाय समादिशत्। एकदा छात्र एको महर्षेरभिमुखं स्वपादौ प्रदर्शयन् प्रसुप्तः। सर्वेषु कर्मचारिषु जागृतेषु श्रीमहाराजः सर्वान् समाहूयोपादिशत् सर्वैरेवार्यजनैर्मर्यादापालनं परमावश्यकम्; अनाहूतेन वचनम्, गुरुजनवार्तासु स्वयमेवानधिकृताधिक्षेपः, वैदिकमर्यादा-विरुद्धम्। माननीय जनाभिमुखं पादप्रसारस्वप्नमप्यार्यमर्यादाविरुद्धम्। गुरुदेवस्योद्बोधनादपराधी छात्रस्तस्य चरणावभिजग्राह। भविष्यदर्थे मर्यादापालनव्रतञ्च प्रत्यजानात्।

**ज्यायांसश्चेद् यवीयसां सेवापराङ्मुखाः कुत आदर्शग्रहणम् ?**– एकदा ज्वरग्रस्तः पण्डितः कृष्णराम-इच्छारामः कुटीरे एकस्मिन् व्यश्राम्यत्। तदभिज्ञाय महर्षिस्तत्रोपस्थाय तस्य शिरःसंवाहने प्रवृत्तः। पण्डितप्रवर उवाच, "भगवन्! न भवानिदमनुतिष्ठतु, गुरुवरो मे भवान्, नाहं भवतः सेवाकार्यमिच्छामि। श्रीमहाराजोऽवदत् नात्र कश्चिद्दोषः; परस्परं साहाय्यं सेवनञ्च मानवधर्मः। ज्यायांसो यदि यवीयसां सेवापरायणा न स्युस्तदा यवीयस्सु सेवाभावोऽसम्भवः।

## आर्यसमाजस्य स्थापनम्

**मुम्बईनगरे पुनरागमनम्**— भड़ौंचनगरतः प्रस्थाय श्रीमहाराजः अहमदाबाद-राजकोट-बलसाड़-बसईप्रभृतिस्थानेषु वैदिकधर्मस्य दुन्दुभिं निनादयन्, सद्धर्मोपदेशेन च जनजीवनभूमावास्तिकता-श्रद्धा-धर्मभावनानां वेदज्ञानानुरागस्य च बीजानि वपन् पुनर्मुम्बईनगरं समागच्छत्। भक्तजनाश्च तं श्रद्धयाऽभिनन्दन्तः ससमारोहं बालकेश्वरे श्रीलालजीदयालभवने न्यवासयन्। आर्यसमाजस्यसंस्थाया नामकरणं पूर्वमेव सम्पन्नमासीत्। साम्प्रतं महर्षिः लोकान् पुनरुदबोधयद्। येन सर्वैः सम्भूय सर्वसम्मत्या राजमान्यः श्रीराजेश्वरपानाचन्द्र-आनन्दजी, पारिखमहोदय आर्यसमाजसंस्थाया नियमोपनियमनिर्माणकार्येऽधिकृतः। श्रीपारिखमहोदयः स्वल्पैरेव दिवसैर्नियमान्निर्माय सर्वसन्मुखमुपास्थापयत्। महर्षिश्च हार्दिकभावेन सर्वमन्वमोदयत्। निर्मितेषु नियमेषु १९३२ वैक्रमाब्दस्य चैत्रशुक्लपञ्चमीतिथौ बुधवासरे तदनु १८७५ ईस्वीयवर्षस्य-एप्रिलमासस्य दशमे दिनांके सायं सार्धपञ्चवादनसमये मुम्बईनगरस्थगिरगांवोपवसतिसम्भागे (महोल्ला) श्रीडाक्टरमाणिकचन्द्रमहोदयस्य वाटिकायाम्-आर्यसमाजस्य स्थापनमभूत्। श्रीगिरिधारीदयालदासकोठारीमहोदयश्च-आर्यसमाजस्य प्रथमसभा-पतिरूपेण वृत्तः। श्रीसेवककृष्णदासमहाभागश्च मन्त्रित्वेन नियुक्तः। तदानीमेक-शतसंख्याकाश्च सदस्या आसन्। सर्वजनाग्रहेणाऽपि किमपि पदमस्वीकुर्वन् महर्षिः साधारणसदस्यरूपेणैव स्थितः। पूर्वमार्यसमाजस्याष्टाविंशतिसंख्याकाः नियमाः निर्धारिता आसन्; परं यदा लाहौरनगरे आर्यसमाजस्य संस्थापनमभवत् तदा दश संख्याका एव नियमा विनिश्चिताः।

मुम्बईनगरे आर्यसमाजसंस्थां संस्थाप्य महर्षिप्रवरः अहमदाबादमभ्या-गच्छत्। परावर्तयंश्च बड़ौदानगरेऽध्युवास। अत्र हि ''वेदाधिकारविषये'' तस्य प्रथमं प्रवचनमभूत्। प्रवचनेऽस्मिन् गुजरातप्रान्तीया दाक्षिणात्याश्च पण्डिताः समुपस्थिता आसन्। प्रसंगवशाद् यदा श्रीमहाराजो वेदमन्त्रमेकं समुदचरत्तदा दाक्षिणात्यपण्डिताः शिव! शिव! इत्युच्चरन्तः समुत्थिता अभूवन्। कारणजिज्ञासायां तेऽब्रुवन्— अत्र हि जनसभायां केचन यवनाः शूद्राश्चेतस्ततः स्थिता वेदमन्त्रं शृण्वन्ति; एतेषामनधिकारिणां समक्षं श्रुतेरुच्चारणमनर्थकरमेव। महर्षेरागमनात् पूर्वमेव पण्डितजनाः शास्त्रार्थकृते सुसज्जिता आसन्, अतः परिसमाप्ते ह्येव प्रवचने शास्त्रार्थसमरः समारब्धः। अनेके शास्त्रिण एकैकशः कृत्वा तस्मिन् वाग्-(वाद)-युद्धे प्रवर्तिता अभूवन्, परं शीघ्रमेव वाग्विहीनाः सन्तः परावर्तिताः। होराद्वय एव सकलोऽपि शास्त्रिसमूहः प्रशान्तः। तदा हि सकलापि सभा साधुवादेन निनादिताऽभवत्।

**ऋक्षो हि सर्वकृते त्यागभावस्यादर्शः—** एकदा क्षौरकर्मणि प्रवृत्तं श्रीमहाराजं वीक्ष्य शास्त्रिजनः कश्चित् तत्रागतोऽकथयत् "त्यागभावो हि संन्यासिनां धर्मः; भवांश्च देहविभूषायां प्रवृत्तः?" प्रहस्य महर्षिरब्रवीत्; यदि केशश्मश्रूप्रवर्धनमेव त्यागभावस्तदा ऋक्षो हि सर्वेषां कृते त्यागभावस्यादर्शभूतो भविष्यति। नैतादृग्भावेषु त्यागवैराग्ययोरादर्शः। देहरक्षार्थं तस्य सज्जा विभूषा च धर्मानुकूलैव। यथा हि प्रमादिनः पुरुषाः परिपुष्टशरीरैः पापाचरणमाचरन्ति; तथैव परोपकारिभिरपि परिपुष्टबलिष्ठदेहैः धर्मकर्मकृत्यमनुष्ठेयम्।

**पूनानगरेऽवस्थानम्—** श्रीयुतमहादेवगोविन्दरानाडेमहोदयः पूनानगरे न्यायाधीशरूपेण व्यराजत। स हि पूनानगरं समागन्तुं साग्रहं महर्षिप्रवरं प्रार्थयत्। प्रार्थनां प्रमाणयन् श्रीमहाराजः १९३२तमसंवत्सरस्य-आषाढकृष्णत्रयोदश्यां पूनानगरे पदार्पणमकरोत्। तत्र हि नगरे शिविरे च महर्षेश्चतुष्पञ्चाशत् प्रवचनानि प्रवृत्तानि। एतेषु नगरे समुदीरितानि पञ्चदश प्रवचनानि लिपिबद्ध-कृतानि "उपदेशमञ्जरी" नामतः साम्प्रतमप्युपलभ्यन्ते। प्रवचनैरेतैः महर्षेः पाण्डित्यप्रशस्तिः सर्वत्रैव प्रसारिताऽभवत्।

**सार्थको दयानन्दनामधेयः—** विसर्जनसमये ऋषिवरं सम्मानयितुं शोभायात्रैका समायोजिता; सायन्तने प्रवचनस्य समाप्तौ मुनिवराय भावविह्वलां विसृष्टिं प्रायच्छन्। श्रोतृवर्गस्तस्योपरि पुष्पवर्षां व्यदधात्। महर्षेरुपवेशनार्थं गजवर एकः सुसज्जीकृतः परं महर्षिर्गजोपवेशनं निषिध्य समं सर्वजनैः पदातिरेव प्राचलत्। शोभायात्राक्रमश्च यथा—सर्वाग्रतः सुसज्जितो गजराजः, कोतल-अश्वाः, आरक्षिदलम्, आंगलवाद्यम्, ततो महर्षिप्रवरः; अनुवर्तिनो भक्तजनाः, सामान्यजनाश्चातिष्ठन्। प्रारम्भतस्त्रिचतुःशतमिता मानवसंख्या-आनगरं यावत् त्रिचतुःसहस्रमिता जाता।

महर्षेः सम्मानेनानेनाहतानि विपक्षिजनहृदयानि; ते हि विरोधप्रदर्शने गर्दभयात्रामेकां संयोजयितुं प्रवृत्ताः। गर्दभस्यैकस्योपरि गैरिकवासांसि निधाय "गर्दभानन्दः सरस्वती" इति नामधेयञ्च विलिख्य पुरस्ताद् वाद्यानि वादयन्तो "गर्दभानन्दो जयतु, दयानन्दो जयतु" इत्याद्युद्घोषयन्तश्च तं विपणिषु पर्यभ्रामयन्। मार्गे ह्युभावेव जनसम्मर्दौ परस्परविरुद्धमाचरताम्। विरोधिनः "स्वामी रासभो जयतु, रासभो जयतु" इत्याद्युद्घोषान् समुदगिरन्। महर्षिभक्ताश्च दुष्टतामिमामाक्षिपन्तो गर्दभमादायारक्षिजनारक्षणे प्रायच्छन्। गर्दभस्यारक्षिदलारक्षणप्रदाने विरोधिनः प्रज्वलितोल्काः प्राशाम्यन्। महर्षिभक्त-जनानामुपरि च प्रस्तरेष्टिकागोमयकर्दमरजांसि च प्राक्षिपन्। शोभायात्रासंलग्ना-रक्षिजनाश्च तदुपद्रवशान्तये न किमपि प्रयत्नमकुर्वन्। ततश्च केनचित् संसूचित

आरक्षिजनायुक्तः शतसंख्यकारक्षिजनैर्वृत्तः संघटनास्थलं प्राप्योपद्रवं शान्तमकरोत्। संघर्षेऽस्मिन् शोभायात्रासम्मर्दः "भिड़का बाड़ा" नामकं प्रवचनस्थलं प्राप्नोत्।

प्रशान्ते वातावरणे महर्षिः स्वप्रवचनं प्रारभत, परं नहि कोऽपि घृणितोपद्रवस्यास्योल्लेखः। चित्तप्रशान्तिः क्षणमपि विक्षोभं नाप्नोत्। पूर्ववदेव प्रसादसदनं प्रफुल्लवदनम्, मुखचन्द्रमण्डले नहि स्वल्पोऽपि लक्षितः सचिन्ताकारविभ्रमः। प्रवचनसमाप्तौ श्रीयुतो रघुनाथशास्त्री प्रावोचत्, "प्रभो! कृतो भवताद्य सार्थकः स्वदयानन्दनामधेयः। वेदभाष्यकृते च सार्धद्विशत् रुप्यकाणि महर्षये समुपहृतानि। ततश्च सभास्थितभद्रपुरुषाः महर्षेरुपरि पुष्पवर्षामकुर्वन्। समाप्ता च प्रवचनसभा।

**चन्द्रनामधेयकविवरस्य शब्देषु घटनावर्णनम्**— गर्दभयात्रायां कालिमामयमुखं रासभासीनं नरमेकं दयानन्दनामधेयं विधाय तदनु करतालं ददतः अभद्रश्चोद्घोषयतः पुरुषान् विलोक्य महर्षेर्भक्तप्रवरः कश्चित् परमवेदनामन्वभवत्। स हि महर्षिमनुप्राप्य कविवरचन्द्रस्य शब्देषु न्यवेदयत्—

**चढ़ाकर इक गधे पर आदमी मुँह कर दिया काला ।**
**दयानन्द नाम लें भगवन्— यह अत्याचार करते हैं ।।**

तस्यैव कविवरस्य शब्देषु महर्षेः प्रत्युत्तरम्—

**मुनव्वर[1] चाँद-सा मुखड़ा तो है असली दयानन्द का ।**
**वे मस्नूई[2] दयानन्दों की मिट्टी ख़्वार[3] करते हैं ।।**

**प्रोफेसरमोनियरविलियम्समहाभागेन समं सम्भाषणम्**— पूनातः प्रस्थाय सातारानगरमनुगच्छन्महर्षिः मुम्बईनगरं सम्प्राप्तः। १८७६ ईस्वीयवर्षस्थमार्चमासस्य पञ्चमे दिनांके "वेदानां श्रेष्ठता पवित्रता च" इति विषये तस्य विशेषप्रवचनमभवत्। प्रवचनेऽस्मिन् अनेकेषु सुशिक्षितेषु सुप्रतिष्ठितेषु च महापुरुषेषु विशिष्टः संस्कृतविद्वान् प्रोफेसरविलियम्समहाभागोऽपि समुपस्थित आसीत्। प्रवचनानन्तरं प्रोफेसरमहोदयो महर्षिणा समं चिरं यावत् संस्कृते सम्भाषणमकरोत्। विसृष्टः स न केवलं परां सन्तुष्टिमभ्यजनयत्, महर्षेर्विविध–विद्यावैदुष्यं प्रवचनसरणिञ्चापि बहुतरं प्राशंसत्।

**फर्रुखाबादनगरेऽवस्थानम्**— चिरकालं मुम्बईवासिषु वेदोपदेशामृतमभिवर्षन् महर्षिप्रवरः १९३३तमसंवत्सरस्य ज्येष्ठकृष्णप्रतिपत्तिथौ तदनु १८७६ वर्षस्थमईमासस्य नवम दिनांके पञ्चमावसरे फर्रुखाबादनगरं सम्प्राप्य लालाजगन्नाथमहाभागस्य विश्रान्तघाटस्थले समाससाद। साम्प्रतं चत्वारि प्रवचनान्यत्र

१. ज्योतिर्मय, २. नक़ली, ३. अपमानित

प्रवृत्तानि, पाठशालानिरीक्षणं च विहितम्। अध्यापकानां छात्राणाञ्च प्रच्छन्नं विरुद्धाचरणं विज्ञाय पाठशाला भग्ना।

**घ्नन्तु**– अत्र हि (फर्रुखाबादे) स्वामिमहाभागेन समं धर्मचर्चापरायणः पादरी जे० जे० लूकसमहोदयः श्रीबाबूदेवेन्द्रनाथमहोदयमलिखत् "स हि (महर्षिदयानन्दः) मूर्तिपूजनविषये एतावतोजस्विभावेनात्मविश्वासेन च प्रतिपादनमकार्षीत्; यदहं फर्रुखाबादवासिभिः प्रदर्शितं तस्य हार्दिकस्वागतोपचारं वीक्ष्याश्चर्यचकितोऽभवम्। वारंवारं मत्प्रश्नोत्तररूपमहं तस्य कथनमिदं स्मरामि। मया पृष्टमासीत्— "भगवन्! यदि केचन शतघ्नीमुखे भवन्तमुपस्थाप्य-आदिशेयुः— कुरु नतमस्तकेन मूर्तिवन्दनम्, नोचेत् शतघ्नीगोलकेन हनिष्यामस्तदा किमुत्तरं भवतो भविष्यति? इति। स्वामिनोत्तरितमासीत्– "घ्नन्तु" इत्येवाहमभिधास्यामीति।

फर्रुखाबादतः प्रस्थाय स्वामिप्रवरः काशी-जौनपुर-अयोध्या- लखनऊ-शाहजहांपुर-बरेलीनगरेषु वैदिकधर्मदुन्दुभिं निनादयन्, जनमनोभ्रान्तीर्दूरीकुर्वन्, सद्ज्ञानगंगाञ्च प्रवाहयन् मुरादाबादनगरमुपगम्य राजाजयकिशनदासमहोदयस्य प्रकोष्ठमध्यतिष्ठत्।

**पादरिणा समं शास्त्रार्थः** – पादरी-डब्ल्यू० पार्करेण समं शास्त्रार्थोऽत्रत्यं विशेषं वृत्तम्। शास्त्रार्थोऽयं पञ्चदशदिनानि यावत् प्रतिदिनं द्वित्रिहोरापर्यन्तं प्रवर्तते स्म। स्वामिमहाभागः पादरीमहोदयं निरुत्तरमकरोत्। तेन हि सुसिद्धमिदं कृतम्– "यत्कारणभूतेन मनुष्येण केनचिदन्येषामीश्वरप्राप्तिर्मोक्षप्राप्तिर्वा" इति मतं मूर्तिपूजनादपि गर्हिततरम्। एकदा च 'सृष्ट्युत्पत्तिः' शास्त्रार्थस्य विषयो निर्धारितः। यदा पादरीमहोदयः "सृष्ट्युत्पत्तेः पञ्चसहस्रवर्षाणि व्यतीतानि" इति पक्षं स्थापयितुं प्रायतत तदा महर्षिः बिल्लौरप्रस्तरमेकं प्रदर्श्य पादरिणमपृच्छत् "महोदय! विज्ञानविदो भवन्तो ब्रुवन्तु कियत्सु वर्षेषु प्रस्तरमिदमेतद् रूपमग्रहीष्यत्?" "कतिचिल्लक्षवर्षेषु" इति पादरिणा समुत्तरितम्, पुनश्च संशोधितम्, मानवसृष्ट्युत्पत्तेः पञ्चसहस्रवर्षाणि व्यतीतानि" इति मेऽभिप्रायः। महर्षिः पुनराक्षिपत्; महोदय! सृष्ट्युत्पत्तेरयं प्रश्नः; मानवसृष्टिर-प्येतदन्तर्गता। किमपि वक्तुमशक्नुवन् पादरीमहोदयो निरुत्तरतामभजत्।

**योगसाधनोपदेशः**– महाशयबख्शीरामेण साग्रहं पृष्टेषु योगसाधनेषु श्रीमहाराजो निम्ननिर्दिष्टमभ्यासविधिं निरदिशत्—यथा च **ओम् भूः। ओम् भुवः। ओम् स्वः। ओम् महः। ओम् जनः। ओम् तपः। ओम् सत्यम्। ओम्**

**तत्सवितुर्वरेण्यं, भर्गो देवस्य धीमहि। धियो यो नः प्रचोदयात्। ओम् आपो ज्योतीरसोऽमृतं ब्रह्म भूर्भुवः स्वरोम् इति।**

श्रीमहाशयो महर्षेरादेशानुरूपमाराधनेनानेन परां शान्तिमध्यगच्छत्। मुरादाबादनगरे धर्मप्रचारम्– आर्यसमाजस्थापनाञ्च विधाय कर्णवासादिस्थानेषु प्रविचरन्नृषिवरः दिल्लीनगरं गन्तुमुदयुङ्क्त।

**दिल्लीराजसमारोहः–** १८७७ईस्वीवर्षस्थजनवरीमासस्य प्रथमदिनांके तत्कालीनभारतीयागंलशासकाध्यक्षेण लार्डलिटनमहोदयेन दिल्लीराजधान्यां राजसभासमारोह एकः समायोजितः। समारोहेऽस्मिन् भारतस्य सर्वे नृपतयः प्रान्तीयराज्यपालाः, उपराज्यपालाः, प्रतिष्ठितमहानुभावाश्चागन्तुं निर्दिष्टाः। अस्मिन्नेव समारोहे महिषी विक्टोरिया भारतस्य "राजराजेश्वरी" उद्घोषणीयासीत्। अवसरमिमं वैदिकधर्मप्रचारस्य स्ववसरं मन्यमानो महर्षिर्दयानन्दोऽपि दिल्लीं प्रस्थितः। महर्षिभक्तः ठाकुरमुकुन्दसिंहोऽलीगढ़तः शिविराणि सम्प्रैषयत्। कुतुबरोडस्थितश्रीशेरमलस्य-अनारोपवने महर्षेर्निवासव्यवस्थां व्यदधात्। महर्षिणा समं श्रीमुकुन्दसिंहातिरिक्ताः कर्णवासस्य धनपतिः ठाकुरगोपालसिंहो भूपालसिंहः किशनसिंहप्रभृतयः ठाकुरजनाश्चापि दिल्लीं समाययुः। महर्षेरावासद्वारे "महर्षिदयानन्दसरस्वती निवासस्थानम्" इति लिखितपट्टमायोजितम्। सममेव पण्डितभीमसेनो मुरादाबादनिवासी पण्डित इन्द्रमणिश्च द्वौ महाभागावपि तत्रास्ताम्।

"सत्यासत्यविवेचनेन (निर्णयेन) सर्वैर्मतवादिभिः सम्भूय सार्वभौमधर्म एकः संस्थापनीयः" इति निमित्तमुद्दिश्य महर्षिदयानन्दः सरस्वती विज्ञापनेन सर्वानाजुहाव। सर्वमतानुयायिविद्वज्जनराजमहाराजवर्गेभ्यश्च विज्ञापनमिदं सम्प्रेषितं प्रचारितञ्च। राजमहाराजजनो धनिकवर्गस्तु तदानीं धर्मचर्चाविषयेऽवधानपरो नासीत्। ते हि सर्वे तदानीं साकारदेवाधिदेवमहादेवरूपेण स्थितस्य लार्डलिटनमहोदयस्य समाराधने ह्येव प्रवृत्ता अभूवन्। केवलं डुमरावनरेशः, इन्दौरमहाराजश्चैव महर्षेः पुण्यदर्शनार्थं तत्र समागच्छताम्। वितरितविज्ञापनेन दिल्ल्यां सर्वत्रैव महर्षेः कीर्तिकौमुदी प्रसृताऽभूत्। सहस्रशो जनाः पण्डितवर्याश्च महर्षेरावासे सत्संगलाभाय, धर्मोपदेशश्रवणाय शास्त्रविचारविनिमयार्थञ्च समागन्तुमारभन्त।

महर्षेः प्रयासैरेकदा तस्यावासे प्रसिद्धसमाजसुधारकाणां सम्मेलनमभवत्। सम्मेलनेऽस्मिन् पाञ्चालप्रान्तीयमुंशीकन्हैयालाल-अलखधारी, बंगप्रदेशीयबाबूनवीनचन्द्ररायः केशवचन्द्रसेनश्च, यवनप्रतिनिधिरूपेण सरसय्यद-अहमदखां, मुम्बईनगरस्य बाबूहरिश्चन्द्रचिन्तामणिः, उत्तरप्रदेशीयः पण्डित इन्द्रमणि-

महोदयश्च सम्मिलिता अभूवन्। सर्वे महानुभावा बहुकालं विचारविनिमयम-कुर्वन्। महर्षिरुवाच; सर्वे वयं चेदेकत्रविषये सम्मता भवेम, समानरीत्या च राष्ट्रोद्धाराय प्रयतेमहि, सत्वरमेव सम्पूर्णराष्ट्रस्य समुद्धारो भवितुं शक्यः। महर्षेरभिमतमिदं यत् सर्वे एव वेदचतुष्टयमीश्वरीयज्ञानरूपेण स्वीकुर्वन्तु, वेदानुकूलमेव धर्मप्रचारकार्यं च कुर्युस्तदाऽखिलं राष्ट्रं समुद्धर्तुं शक्नुमः; परं न हि सर्वे विषयेऽस्मिन् सहमता बभूवुः।

दिल्लीप्रवाससमये महर्षेस्तेजस्विस्वरूपदर्शनेन, ओजस्विवाक्प्रवाहेण च पाञ्चालप्रान्तीयभद्रपुरुषा अतितरां प्रभाविताः। एकदा मुंशीकन्हैयालाल-अलखधारी, सरदारविक्रमसिंहः, पण्डितमनफूलप्रभृतयो महानुभावा महर्षेरावासे समागत्य पाञ्चालप्रान्तमपि वेदोपदेशेनानुग्रहीतुं प्रार्थयन्। श्रीमहाराजश्च सहर्षमन्वमन्यत।

**चाँदपुरमेलकम्**— दिल्लीस्थराजसमारोहसमाप्तौ महर्षिप्रवरो मेरठ-सहारनपुरादिनगराणि पर्यटन् चाँदपुरमेलके विराजमानोऽभूत्। शाहजहांपुर-मण्डलस्थचाँदपुरग्रामे मुंशीप्यारेलालमुक्ताप्रसादौ भूमिपती आस्ताम्। जातिरूपेण कायस्थवर्गीयाविमौ स्वपित्रा सममेव कबीरपन्थानुयायिनावास्ताम्। क्रिश्चीनपाद-रिणो ग्रामेऽस्मिन् समागच्छन्तः स्वमतप्रचारपरायणा आसन्। यवनास्तु देशस्याङ्गभूता एवासन्। मुंशीप्यारेलालमुक्ताप्रसादयोरुभयोरेव भ्रात्रोर्यवन-मौलवीभिः क्रिश्चीनपादरिभिश्च समं सदैव धर्मविषयकवार्तालापः प्राचलत्। ज्येष्ठो मुक्ताप्रसादश्च महर्षिदयानन्दस्य विचारसरणिं युक्तियुक्तामन्यत। उभावेव भ्रातृजनौ सत्यतां परीक्षितुं "मेला-ब्रह्मविचारयोजना"-मेकां समायोजयताम्। अस्याञ्च योजनायां विचारविनिमयार्थं यवनक्रिश्चीनार्याणां प्रतिनिधयः समामन्त्रिताः। यवनप्रतिनिधिरूपेण भारतविख्यातो देवबन्दस्थितो मौलवी मोहम्मदकासिममहोदयः समायातः, दिल्लीस्थः सय्यद-अब्दुलमंसूरश्च तस्य सहायकरूपेण समाहूतः। क्रिश्चीनप्रतिनिधिः बरेलीतः रैवरण्ड टी० जी० स्काट-महोदयः समुपस्थितः। अनेन क्रिश्चीनमते काश्चन लघुपुस्तिकाः, बाइबिलधर्मग्रन्थस्य व्याख्या अपि संलिखिता आसन्। वैदिकधर्मसिद्धान्तान्नि-रूपयितुं महर्षिदयानन्दः सरस्वती च समामन्त्रितः, मुंशीइन्द्रमणिश्च महर्षिणा समं समायातः।

**मेलके हि पञ्चसु विषयेषु विचारविमर्शो निर्धारितः—**

१. परमेश्वरेण कदा, केनोपकरेणन, किमर्थम् (केनाभिप्रायेण) च जगदिदं विरचितम्?

२. परमेश्वरः सर्वव्यापको न वेति?

३. कथं परमेश्वरो न्यायकारी दयालुश्च वर्तते?

४. वेद-बाइबिल- कुरानग्रन्थानामीश्वरीयज्ञानसद्भावे किं प्रमाणम्?

५. किं मुक्तेः स्वरूपम्? कानि च तत्प्राप्तिसाधनानि?

१८७७-ईस्वीयवर्षस्थमार्चमासस्य १९–२०तमदिनांकौ सम्मेलनार्थं विनिश्चितौ। मार्चमासस्य १९तमे दिनांके-एकवादनसमये सम्मेलनस्य समारम्भो जातः। सर्वप्रथमं मुंशीप्यारेलालः परमप्रभोर्धन्यवादमकरोद्यस्य प्रसादेन वयं हि एतादृशसाम्राज्यस्य छत्रछायायां निवसामो यत्र हि सर्वधर्माणां गुणावगुणसमूहस्य स्वतन्त्रविवेचनं सुलभम्। ततश्च स्थानीयन्यायाधीशमहोदयाय धन्यवादं व्यतरद्यश्च सम्मेलनमिदमायोजयितुमादिदेश (समादिशत्)। प्रथमदिवसे विनिश्चितप्रश्नेषु नहि कोऽपि विचारविमर्शो जातः। मौलवीमोहम्मदकासिम-पादरीस्काटमहानुभावयोः कुरानबाइबिलयोरीश्वरीयज्ञानावधारणे परस्परं समालोचनमभूत्। १९७७वर्षस्थमार्चमासस्य विंशतितमे दिनांके प्रातः सार्धसप्त-वादनसमये च प्रथमप्रश्ने विचारविमर्शो जातः

**पादरीस्काट उवाच**– न वयं निश्चितरूपेण वक्तुं शक्नुमः, यत्परमेश्वरः केनोपकरणेन, कदा, किमर्थञ्च जगदिदं व्यरचयत्, परमेतद्वक्तुं शक्नुमः, यत्स ह्यस्मान् सुखयितुं सृष्टिमिमामभावरूपतो भावरूपे समानयत्। मौलवीमोहम्मद-कासिममहोदयश्चोवाच–परमेश्वरः स्वस्वरूपतो ह्येव सृष्टिमिमां व्यक्तामकरोत् मानवकृते च सर्वं विश्ववस्तुजातम्, मानवञ्च स्वोपासनार्थं निर्ममे (निरमिमीत)। कदा सृष्टिमरचयत्? इति ज्ञातुं नावश्यकम्। वयं केवलं सांसारिकसुखसमूहं समीहामहे। भोजनाशनमेवास्मदभिमतम्; कदा भोजनं निर्मितमिति प्रज्ञानं नावश्यकम्।

ततः समुपस्थितधर्माधिकारिणो जनवर्गञ्च सम्बोधयन् महर्षिर्दयानन्दः समभाषत- सत्यासत्यं निर्णेतुं पारस्परिकवैरविरोधं विहाय संवादप्रसारो विदुषां धर्मः। प्रथमं प्रश्नं समुत्तरन्महर्षिरुवाच—परमेश्वरोऽव्यक्तप्रकृत्या सृष्टिमिमां व्यरचयत्, प्रकृतिर्हि सृष्टेरुपादानकारणम्। अनादिरनन्ता हि प्रकृतिः। नाभावेन भावोत्पत्तिर्भवितुं शक्या। ईश्वरस्य स्वस्वरूपादपि सृष्टेरुत्पत्तिर्न सम्भवा। एवं सति सृष्टिस्वरूपमपि परमेश्वरस्वरूपमिव भवितव्यम्। यतः सर्वमपि कार्यजातं स्वकारणगुणाननुसरति। एवञ्च परमेश्वररचितसृष्टौ येऽपि चौरा दुराचारिणो घातका वा वर्तन्ते तेऽपि परमेश्वरस्वरूपा भविष्यन्ति। कदा सृष्टेरुत्पत्तिरिति प्रश्नस्योत्तरं प्रत्येकवैदिकधर्मानुयायी पण्डितवर्यः शुभकर्मप्रारम्भे संकल्पमुच्चारयन् प्रददाति। स हि वर्षमासदिवसांश्च परिगणयन् यजमानमुखात् संकल्पमुच्चारयति। एतदनुसारम्– १९६०८५२९७६वर्षाणि सृष्टिक्रमात् व्यतीतानि। २३३३२२७०२४

वर्षाणि सृष्टिरियं स्थास्यति। परमेश्वरो जीवात्मनः स्वस्वशुभाशुभकर्मानुरूपाणि नानायोनिषु विभिन्नपरिस्थितिषु च जन्मानि ग्राहयति। स हि सृष्टेर्निमित्तकारणम्, नियामको नियन्ता च वर्तते। सृष्टेरुत्पत्तिः प्रलयश्चापि क्रमप्रवाहेणानादित्वं भजतः। सृष्टिरचनासामर्थ्यं सर्वेश्वरे स्वाभाविकम्। स हि स्वसामर्थ्येन सृष्टिं निर्मिमीते। "मानववर्गो यज्ञकर्माणि कुर्वन् धर्मार्थकाममोक्षरूपचतुर्वर्गसिद्धिमनुतिष्ठन् परमानन्दं लभेत" इति सृष्टिरचनायाः समुद्देश्यम्। एवं प्रथमं प्रश्नं विवेचयन्महर्षिः पादरीमौलवीमहानुभावयोः शंकाजालं भ्रान्तिजालञ्च तर्कपूर्ण-युक्तिभिः सन्तोषजनकरूपेण समदधात्। महर्षेस्तेजस्विवाक्प्रवाहं प्रशान्तभावेन शृण्वन् जनसमुदायः परमसन्तोषं परमाह्लादञ्चान्वभूत्। दिवसस्यैकादशवादनसमये किञ्चित् कालार्थं सम्मेलन कार्यक्रमः स्थगितः।

मध्याह्ने पुनः सम्मेलनारम्भोऽभवत्। चाँदपुरमेलकमप्यद्यैव समाप्तिम-गमिष्यत्। नहि सर्वविषयेषु विचारविमर्शसम्भवः। फलतः सर्वसम्मतभावेन विनिश्चितमिदम्; यत् पञ्चमप्रश्ने "किं मुक्तेः स्वरूपम्? कानि च तत्प्राप्तिसाध-नानि? इति विषये विचारविमर्शो भवेत्। सर्वप्रथमं महर्षिः दयानन्दः सरस्वती स्ववक्तव्ये प्राभाषत—

मुक्तभावो ह्येव मुक्तेरर्थः; अर्थात् जीवात्मनां सर्वदुःखेभ्यो विमुक्तिः सच्चिदानन्दस्वरूपं परमात्मानमधिगम्यानन्दमयीस्थितावस्थानम्, सुचिरं यावज्जन्म-मरणचक्रेऽनापतनमेव मुक्तिः। मुक्तेः साधनानि च यथा—

**प्रथमं साधनम्**— सत्याचरणम्।

**द्वितीयम्**— सत्यविद्यानां (ईश्वरकृतवेदविद्यानाम्) यथावत्स्वाध्यायेन सद्ज्ञानावाप्तिः, तदनुरूपाचरणञ्च ।

**तृतीयम्**— सत्संगः, आचारनिष्ठजनानां संगतिः।

**चतुर्थम्**— योगाभ्यासेन मन इन्द्रियाणि संयम्यात्मानमसत्यतः परावर्त्य सत्येऽवस्थापनम्।

**पञ्चमम्**— ईश्वरस्तुतिः, परमेश्वरस्य गुणानां श्रवणं मननमाचरणा-नुष्ठानञ्च।

**षष्ठम्**— ईश्वरप्रार्थना, यदा हि कश्चित् सत्यहृदयेन परमेश्वरं भजते, करुणामयः प्रभुस्तं परमानन्दभावे सुस्थिरं विधत्ते। धर्मार्थकामैः सत्पुरुषार्थेनैव मुक्तिर्लभ्यते, नान्यथा, इति।

तदनन्तरं स्वविचारं प्रस्तुवन् **पादरी महोदयोऽवदत्**—

दुःखेभ्यो विमुक्तभाव एव मुक्तिः, परमेश्वरः "आदमम्" (आदिमानवम्)

पवित्रं निरमिमीत. परं शैतानस्तं भ्रान्तपथे परावृत्य पापकर्माणि न्ययोजयत; ततस्तदपत्यम् ''आदमी'' अपि पापकर्मसु प्रवृत्तः। देवं यीसुमसीहं विश्वस्य पापेभ्यो निवृत्तिर्भवति, मानवः मुक्तिं च लभते।

**मौलवी महोदयोऽकथयत्–** परमेश्वरो यस्मै स्निह्यत्यभिवाञ्छति च तस्मै मुक्तिं प्रददाति; यस्मै च नेच्छति न स मुक्तिं लभते। मुक्तिर्हि-ईश्वरेच्छामपेक्षते। प्रशासको हि येषामुपरि प्रमुदितो भवति तेभ्यः कृतापराधेभ्योऽपि क्षमादानं प्रयच्छति; येषु चाप्रसन्नस्तेभ्यो दण्डं प्रयुङ्क्ते। प्रशासके हि पूर्णविश्वासः स्थिरी कर्तव्यो येन सम्राडपि (राजाधिराजोऽपि) प्रमुदितस्तिष्ठति। पैगम्बर-मोहम्मदश्चास्माकं प्रशासकः, तस्योपरि पूर्णविश्वासेन स्वयमीश्वरः -(अल्लाहः)- अपि प्रसीदति; मानवश्च मुक्तिं लभते। अन्ततः स्वप्रभाविनस्तर्कवादान्, ओजस्विनीं वाचञ्च प्रयुञ्जन् महर्षिर्दयानन्दः क्रिश्चीनयवनमते खण्डयन् वैदिकधर्मस्य सत्यमतं प्रावर्णयत्। श्रोतृवर्गश्च महर्षेः सम्भाषणं शृण्वन्, वैदिकधर्मस्य श्रेष्ठताञ्च हृदयस्थां कुर्वन् परमप्रमुदितेन मनसा तदर्थं श्रद्धाभावं प्रादर्शयन्।

**पाञ्चालप्रदेशं प्रति प्रस्थानम्–** चाँदपुरतः प्रस्थाय सहारनपुरनिवासिनो जनानुपदेशामृतेनाभिषिञ्चन् महर्षिः १९३४तमसंवत्सरस्य वैशाखकृष्णपञ्चम्यां तदनु १८७७ वर्षस्थमार्चमासस्य ३१तमे दिनांके लुधियानानगरमाजगाम। श्रीकन्हैयालाल-अलखधारी– अतीवप्रेमभावेन तस्मै ससम्मानं स्वागतं व्याजहार। लालावंशीधरवैश्योद्याने च महर्षेरावासव्यवस्थां व्यदधात्। श्रीजटमलखजाञ्ची-(कोषाध्यक्ष)-गृहे प्रवचनव्यवस्था व्यवस्थिता। प्रवचनप्रारम्भ एव महर्षिरुद-घोषयत्– अत्र हि सप्तप्रवचनानि प्रवर्तयिष्यन्ते; प्रवचनान्तराले नहि कोऽपि प्रश्नादिकं कुर्यात्; अष्टमे हि दिवसे केवलं शंकासमाधानमेव प्रचलिष्यति सर्व एव स्वैरं प्रश्नान् पृष्टुं प्रभविष्यन्ति।

**भगवतः श्रीकृष्णस्योपरि मिथ्यादोषारोपणम्–** महर्षेः सप्तस्वेव प्रवचनेषु सहस्रशो जनाः समागच्छन्, अतीव प्रभाविताश्च परावर्तन्त। एकदा पादरीवेरीमहाशयः स्वसहयोगिभिर्वृतो महर्षिमन्वगच्छत्; वार्तालापप्रसंगे सोऽकथयत्– ''स्वामिमहाभाग! श्रीकृष्णस्य यानि कर्माणि लोकोऽयमुपवर्णयति तैर्हि न तस्य महामहिम-(महात्म)-भावो बुद्धिगम्यः, प्रत्युत सन्देहास्पदमेव प्रतीयते। महर्षिः समुदतरत्– यैर्दोषैः भगवान् श्रीकृष्ण आक्षिप्यते, सर्वाणि मिथ्याप्रयुक्तानि निर्मूलानि च सन्ति। बुद्धिगम्यत्वविषये तु न किमपि वक्तुं शक्यं बुद्धिर्यावत्स्वीकरोति यत् ''परमेश्वरस्यैवात्मा कपोतरूपेण मनुष्य एकस्मिन् समापतत्'' तावत् श्रीकृष्णस्य लीलास्वीकरणे कियान् विक्षेपः?

**पुनर्जन्मसिद्धिः–** पादरी महोदयः कश्चित् पुनर्जन्मविषये विविधप्रश्नान्-

अकरोत्। प्रश्नानुत्तरयन् महर्षिः पर्यपृच्छत् "अशनपानश्रवणदर्शनादिकर्माणि देहधारिषु भवन्ति देहरहितेषु वा?" "सर्वाणि कर्माण्येतानि देहधारिष्वेव सम्भवन्ति न हि देहरहितेषु" पादरी समुदतरत्। "देहमेकं विहाय देहान्तरधारणमेव पुनर्जन्म?" आम्, एतदेव पुनर्जन्म पादरीरुवाच। तदा महर्षिरुवाच "स्वीकृतं भवता यदशनपानादिकर्माणि देहधारिष्वेव सम्भवन्ति, अथ च देहमेकं विहाय देहान्तरधारणमेव पुनर्जन्मेति"। सम्प्रति भवता एतदपि स्वीकर्तव्यं यन्मानवदेहं विहाय ये हि (आत्मानः) युष्मत् क्रिश्चीनमतस्य स्वर्गधाम्नि नानाभोगान्भुञ्जन्ति तेषां हि पुनर्जन्मैव तत्र भवति। पादरी महोदयो मौनमभजत्।

**भूतप्रेतखण्डनम्**— भूतप्रेतभ्रमं विखण्डयन् श्रीमहाराज एकदा कौतुकमेकं प्रादर्शयत्। महर्षेरावासे त्रीणि द्वाराणि, द्वौ च भित्त्यन्तर्बद्धगवाक्षौ (आले या ताक) आस्ताम्। स हि तयोर्बद्धगवाक्षयोर्दीपकद्वयं प्रज्वाल्य परस्पराभिमुखम-स्थापयत्। ततश्च दीपकमेकं निरवापयत्। द्वितीयञ्च निर्वापयितुमादिदेश। यावद् द्वितीयो दीपको निर्वापितस्तावत् प्रथमो दीपकः स्वयमेव प्रज्वलितः। एवमेव निर्वापिते एकस्मिन् प्रदीपेऽन्यः प्रदीपः स्वयमेव प्रज्वलति स्म। दर्शकाश्च साश्चर्यं दृश्यमिदं चिरमैक्षन्त। ते हि चकिता आसन् यद् विंशतिपञ्चविंशतिहस्तान्तरस्थितयोः प्रदीपयोरयं कीदृशश्चमत्कारः। कौतुकसमाप्तौ श्रीमहाराजः सर्वानेवं समबोधयत् "यद्धि सर्वं भवद्भिर्दृष्टम्, इन्द्रजालविद्याकृतमेतत्, नहि भूतप्रेतनामकं वस्तुजातं किञ्चित्। नैतादृशे भ्रमजाले पतितव्यम्।"

**लवपुरे (लाहौरनगरे) अवस्थानम्**— लुधियानावासिनां हृदयेषु धर्मांकुरान् प्रारोहयन् महर्षिस्ततः प्रस्थाय १९३४तमसंवत्सरस्य वैशाखशुक्लषष्ठीतिथौ लवपुरम् (लाहौरनगरम्) आजगाम। पण्डितमनफूल प्रभृतयो भद्रजनाः वाष्पयानपत्तने महर्षेर्भव्यं स्वागतमकुर्वन् सम्मानपुरस्सरञ्च श्रीरत्नचन्ददाढीवालामहोदयस्योद्याने समावासयत्। तदानीं चतुश्चक्रैकयान-प्रभारमिताः ग्रन्थाः स्वामिनः समीप आसन्। श्रीमहाराजस्य तत्र प्रथमं प्रवचनम्, १८७७वर्षस्य-एप्रिलमासस्य पञ्चविंशतितमे दिनांके "वेदोक्तधर्म" विषये सम्पन्नम्। यस्मिन् संघशः स्थिताः सहस्रशो जना उपस्थिता आसन्। महर्षेरत्युत्तमरीत्या विषयवर्णनेनातीव प्रभाविताः श्रोतृजना साधुवादं वितरन्तो गृहानगच्छन्। १९३४तमसंवत्सरस्य वैशाखपूर्णिमायां बावलीस्थले एव महर्षेरपरं प्रवचनमभवत्। प्रवचनेऽस्मिन् पूर्वतोऽप्यधिकाश्रोतृजनसंख्या आसीत्। विद्युत्स्फुलिंगानीव श्रीमहाराजस्य वचनानि पाञ्चालीयजनान्तःकरणेषु सञ्चरितानि। सत्यावेशस्फुरणशीलाः खलु लोकाः। अदृष्टपूर्वमहामहिमपुरुषस्य पुण्यदर्शनैः, अश्रुतपूर्वोपदेशामृतैरभिषिक्ताः सुप्रभाविताश्च विमुग्धजनाः सर्वत्र

मुनिवरस्यैवगुणकीर्तनमकुर्वन्। समाचारपत्रेष्वपि तस्यैवानुरागरागाः प्रगीयन्ते स्म। बहुशो जनाः पूजनार्थं संरक्षिताः प्रस्तरप्रतिमा इरावती-(रावी)-सरितायां प्रावाहयन्।

**ब्राह्मसमाजिनो रुष्टाः—** महर्षेर्लवपुरामन्त्रणे ब्राह्मसमाजिनामेव प्रमुखं योगदानमासीत्। निवासादिप्रबन्धोऽपि तैरेव व्यवस्थितः, परं स्वपक्ष-(सद्ज्ञानप्रचारस्थिरसंकल्प)- धुरन्धरो महर्षिरेतावान् परिनिष्ठित आसीत् यन्नहि स्वसहायकजनमन्तव्यमतानामभिरुचीनाञ्चापि किञ्चित्पक्षपातमकार्षीत्। स हि न्यायानुरूपं स्पष्टमेव सर्वमवादीत्। तस्य प्रवचनद्वयं ब्राह्मसमाजिभिः स्वधर्ममन्दिर एव समायोजितम्। महर्षिः प्रथमप्रवचने "वेदा ईश्वरीयज्ञानम्" द्वितीये च "पुनर्जन्मयुक्तियुक्तम्" इति सिद्धमकरोत्। द्वयमेव प्रवचनजातं नितान्तं ब्राह्मसमाजस्य मन्तव्यविरुद्धम्। फलतस्ते पूर्णतोऽप्रसन्ना महर्षिविरोधे सन्नद्धा अभूवन्।

**प्रकोष्ठान्निष्कासितः—** महर्षिदयानन्दः स्वभाषणेषु पुराणग्रन्थानां निर्मूल-कल्पनास्तीव्रमालोचयत्; येन पौराणिकजनेषु महान् विक्षोभः। बहवः पण्डितास्त्वेतावन्तो विघ्नविरोधे प्रवृत्ता यन्महर्षिनिवासस्थानस्वामिनं श्रेष्ठिनं रत्नचन्द्रं व्यक्षोभयन्। "श्रेष्ठिन्! कोऽयं नास्तिको भवता स्वोपवनमधिवासितः? स हि विनिन्दति सर्वानपि देवान्; न जाने कश्चित् क्रिश्चीनोऽन्यो वा धर्महीनः" श्रुत्वैतल्लोकापवादभिया श्रेष्ठीरत्नचन्द्रः श्रीमहाराजं स्वोपवनं परित्यक्तुं विवशमकरोत्। महर्षिभक्तास्तं डाक्टररहीमखाँ-महोदयस्य प्रकोष्ठं समानयन्। प्रकोष्ठोऽयं छज्जूभक्तस्याट्टालिकासमीपे स्थित आसीत्।

**जम्मूकश्मीराधिपतिं प्रसादयेयं सर्वशक्तिमन्तं सर्वेश्वरं वा—** पण्डित-मनफूलमहाभागो महर्षेरातिथेयेषु- (अतिथिसत्कारकर्तृषु)- प्रमुखः। रुष्टैर्ब्राह्म-समाजिभिरवरुद्धे महर्षेरातिथ्यव्ययभारे पण्डितमनफूलमहाभाग एव सर्वं व्ययभारमवहत्। परमृषिवरो नहि कस्याप्यनुचिताग्रहबन्धममन्यत। एकदा पण्डितमनफूलमहाभागोऽवदत् "भगवन्! सर्वेऽपि नगरनिवासिनो मूर्तिपूजन-खण्डनेन रुष्टाः, अतो नेतो यावद् भवान् मूर्तिपूजनं विनिन्दतु, अनेन जम्मूकश्मीरा-धिपतिरपि भवते प्रमोदिष्यते"। महर्षिस्तुरन्तं समुदतरत् "जम्मूकश्मीराधिपतिं प्रसादयेयम्, ईश्वरीयज्ञानं वेदादेशं वानुसरेयम्, कामं यथास्यान्नाहं वेदादेशम-वज्ञास्यामि (उल्लङ्घयिष्यामि)। श्रुत्वैतत् पण्डितमनफूलमहाभागोऽपि मनोमा-लिन्यं भजन् महर्षेः सम्पर्कममुञ्चत्।

**पादरी हूपरमहाभागेन समं वार्तालापः—** डॉ० रहीमखाँ-महोदयस्य प्रकोष्ठे महर्षिरेकस्मिन् दिने प्रवचनमन्यस्मिन् दिने च शंकासमाधानमकार्षीत्।

सत्संगेषु सहस्रश आर्यजनाः क्रिश्चीनाः, यवनाश्च समेत्य धर्मोपदेशमशृण्वन्, संशयजातञ्च दूरीकुर्वन्तः परमप्रमुदिता अभूवन्। एकदा पादरी हूपरमहोदयो महर्षिमुपगम्यापृच्छत्, "भगवन्! वेदेष्वश्वमेधगोमेधयज्ञयोर्वर्णनं प्रति किं भवतः समाधानम्? महर्षिः समुदतरत्; न क्वापि वेदेषु पशुबलिवर्णनम्; "न्यायपूर्वकं प्रजापालनमश्वमेधस्याभिप्रायः। अन्नोपार्जनम्, इन्द्रियाणां शुचीकरणम्, भूमेः शुद्धिः, मृतकदाहकर्माणि च गोमेधस्यार्थाः।

**नास्ति वेदेषु-उलूककथानकम्**— एकदा पण्डितशिवनारायणः स्वामिनमवदत्, न भवन्तो वेदेषु कथानकं मन्यन्ते परं सामवेदे उलूककथानकं वर्तते। नहि सामवेदे किञ्चिदुलूकादिकथानकमिति महर्षिणा प्रतिषिद्धेऽपि स हि यदा वारंवारं दुराग्रहमकरोत्तदा महर्षिः सामवेदसंहितां तद्धस्ते समर्प्योवाच— किं विवदसि, तव हस्ते स्थितैषा सामवेदसंहिता, अस्यां प्रदर्शयतु सर्वसमक्षं तदुलूककथानकम्। किञ्चित्कालं पृष्ठानि परावर्त्यापि पण्डितमहोदयः न किमपि कथानकं प्रदर्शयितुमशक्नोत्। महर्षिणा धृतेऽपि मौनभावे लोकैरतितरामसौ धिक्कृतः।

**आर्यसमाजस्थापनम्**— महर्षिप्रवरस्य धर्मप्रचारेणानेके भद्रपुरुषास्तस्यानुयायिनोऽभवन्। आर्यसमाजसंस्थायाः संस्थापनप्रयासः सञ्जातः। तदा हि एतदप्यावश्यकं जातं यत्समाजसंस्थापनात्प्राक् तन्नियमेषु नवसंस्कारो विधेयः, अतो महर्षिः स्वयमेव नियमानां नवसंस्कारमकरोत्। यथा च—

१. सत्यविद्या हि सर्वाः पदार्थाश्च ये विद्यया विज्ञायन्ते, परमेश्वरो हि सर्वेषां तेषामादिमूलम्।

२. ईश्वरः सच्चिदानन्दस्वरूपः, निराकारः सर्वशक्तिमान्, न्यायकारी, दयालुः, अजन्मा, अनन्तः, निर्विकारः, अनादिः, अनुपमः, सर्वाधारः, सर्वेश्वरः, सर्वव्यापकः, सर्वान्तर्यामी, अजरः, अमरः, अभयः, नित्यः, पवित्रः, सृष्टिकर्ता च विद्यते, तस्यैवोपासना करणीया; अर्थात् स एव ह्येकः सर्वेषामुपास्यदेवः।

३. वेदो हि नाम सर्वसत्यविद्यानां ग्रन्थः (पुस्तकम्), वेदस्य पठनपाठनम्, श्रवण-श्रावणञ्च सर्वेषामार्याणां परमो धर्मः।

४. सत्यमभिगृहीतुमसत्यञ्च विमोक्तुं सर्वदा समुद्यतैर्भाव्यम्।

५. कार्यजातं सर्वं धर्मानुरूपमर्थात् सत्यासत्यविवेचनपुरस्सरमेव विधेयम्।

६. सर्वसंसारोपकारः (सृष्टेरुपकारः) समाजस्यास्य परमलक्ष्यम्, अर्थात् सर्वैरेव दैहिकाऽऽत्मिकसामाजिकसमुन्नतिर्विधेया।

७. सर्वैः समं प्रीतिपूर्वकं धर्म- (स्वकर्तव्य)- अनुरूपं यथायोग्यं च

व्यवहर्तव्यम्।

८. अविद्याविनाशो विद्याभिवृद्धिश्च सर्वदा विधेया।

९. नहि मानवमात्रेण स्व-(आत्म)-समुन्नतावेव सन्तुष्टेन भाव्यम्, किन्तु सर्वोन्नतावेवात्मोन्नतिरभिमन्तव्या (विभावनीया)।

१०. सर्वहितकरसामाजिकनियमपरिपालने सर्वैः प्रतिबद्धैः (परतन्त्रैः) भाव्यम्, प्रतिहितकरनियमपरिपालने च सर्वे स्वतन्त्रा भवेयुः।

मुम्बई-निर्मितनियमशृंखला प्रलम्बिता अपूर्णा चासीत्, अथ च सा पारिखमहाशयकृता, न महर्षिनिर्मिता, अतएव सिद्धान्तदृशा अनार्षास्ते नियमाः। फलतः लवपुरे नवसंस्कृतनियमैरार्यसमाजस्याधारो महर्षिणा सुदृढशिलासु संस्थापितः।

**उपासनायामनुचितमभ्युत्थानम्**— एकदा प्रचलिते साप्ताहिके सामाजिकसत्संगे प्रार्थनायां च प्रवृत्तायां महर्षिप्रवरस्तत्र समुपागतः। समागच्छन्तं गुरुदेवं निरीक्ष्य सर्वे सभासदोऽभ्युत्थानेन तस्य स्वागतमकुर्वन्। यदा प्रार्थना परिसमाप्ता तावत् श्रीमहाराजः समुपादिशत्; उपासनासमये ह्युपासकजनाः परमात्मसत्संगे निमग्ना भवन्ति; स हि सर्वेश्वरो महतो महीयान्; न कोऽपि तस्मान्महत्तरः; अत उपासनाकाले समागच्छति कियत्यपि महापुरुषे नोचितमभ्युत्थानम्। समये तस्मिन् व्यक्तिविशेषायाभ्युत्थानमुपासनाधर्मस्य तिरस्कारः। सर्वैरेव सभासद्भिर्विनीतभावेन श्रीमहाराजस्यादेशः शिरोधृतः।

**नहि कश्चिद् गुरुपीठो मठो वा संस्थापितः**— यद्यप्यार्यसमाजस्य सर्वेऽपि नियमादिपरिवर्तनाधिकारो महर्षेः स्वायत्तस्तथापि स हि एतावान् निरभिमानो निर्लेपश्चावर्तत यत्तस्य साम्यमतिदुर्लभम्। लवपुर- आर्यसमाजस्य साधारणाधिवेशने श्रीमहाशयशारदाप्रसादः "महर्षिप्रवर आर्यसमाजस्य संस्थापकपदेन विभूषयितव्यः" इति प्रास्तौत्। सभासदश्च सर्वे प्रमुदितमनसः प्रस्तावमिमन्वमोदयन्; परं श्रीमहाराजः प्रहस्योवाच, "न मया नवपथः(पन्थः) प्रवर्तनेन कश्चिद् गुरुपीठो मठो वा संस्थापितः। मतवादिमठेभ्यो लोकस्वातन्त्र्यमेव मे लक्ष्यम्। एतादृक् पदवीजालमन्ततो हानिप्रदमेव सेत्स्यति।

**परमेश्वरं किमभिवक्ष्यथ ?**— "श्रीमहाराजोऽस्य समाजस्य परमसहायक-रूपेण वरणीयः" इति द्वितीयं प्रस्तावं श्रीशारदाप्रसादः प्रास्तौत्। महर्षिरुवाच; यदि परमसहायकं मामभिमंस्यथ किं तं परमपितरं परमेश्वरमभिवक्ष्यथ? परमसहायको हि स सर्वेश्वर एव। यदि मामपि क्वचित्परिगणयितुमभिवाञ्छथ एव तदा सहायकपंक्तौ ममोल्लेखं विधत्त।

**सर्वथा वेदविरुद्धानि पुराणानि**— एकदा डॉ० रहीमखाँ-महोदयस्य प्रकोष्ठे

पण्डितवर्गः श्रीमहाराजं प्रार्थयत् "भगवन्! अतिश्रेयस्करं हि वेदप्रचारकार्यं भवान् विदधाति; परं पुराणसमन्वयोऽपि यदि तेन समं स्यात्तदा सुवर्णे सुरभिः प्रवर्तेत"। श्रीमहाराजः प्रोवाच– भूयांसि वर्षाण्यहमचिन्तयं यत् कथञ्चित् श्रुतिभिः समं पुराणसंगतिरपि प्रसज्येत, परं यावन्न मया कथञ्चिदपि वेदपुराणसंगतिसम्भवो निरीक्षितस्तावत्तेषां (पुराणानाम्) प्रामाण्यं परित्यक्तम्, यतः सर्वथा श्रुतिविपरीतानि (वेदविरुद्धानि) पुराणानि।

**अमृतसरनगरे पदार्पणम्–** लवपुरवासिषु सत्याश्रितार्यगौरवमुत्पाद्य महर्षिः १९३४तमसंवत्सरस्याषाढकृष्णनवम्याम्-अमृतसरे पदार्पणमकरोत्। श्रीदयालदासमजीठियाप्रबन्धेन रामोपवने मियांमोहम्मदखाँ-महोदयस्य प्रकोष्ठे विरराज। शुभागमनेन तस्य अमृतसरवासिषु जागृतं धर्मप्रेम। शतशः सहस्रशश्च पुरुषाः पुण्यदर्शनाय समागन्तुं प्रवृत्ताः। श्रीमहाराजश्च जनश्रद्धां समीक्ष्य तत्सायन्तनकालतो ह्येव प्रवचनशृंखलां प्रारभत। सर्वोऽपि नरनारीसम्मर्दः सश्रद्धं धर्मोपदेशमशृणोत्। अत्र ऋषिवरः प्रतिमापूजनम्, अवतारवादमृतकश्राद्ध-प्रभृतिमिथ्यामूलकमन्तव्यानखण्डयत्। येन तत्रत्यपण्डितम्मन्येषु विक्षोभः। यजमानगणश्च पुरोहितवर्गं शास्त्रार्थकृते विवशमकरोत्; परं पण्डितम्मन्याः स्थाने स्थाने सभाः समायोजयन्तः स्वामिमहाभागं नास्तिकं क्रिश्चीनं च ब्रुवाणाः अगणितदुर्वचनानि प्रायुञ्जन्, परं न कोऽपि तेषु शास्त्रार्थ कृते साहसमकरोत्।

**वञ्चिता बालछात्राः प्रस्तरेष्टिकाशकलान् प्राक्षिपन्–** एकदा पाठशालाध्यायकः कश्चित् स्वबालशिष्यान् प्रवञ्चन् समादिशत्; अद्य वयमपि धर्मकथां श्रोतुं प्रचलिष्यामः, युष्माभिः स्वीयकञ्चुकपुटेषु लघ्विष्टिकाशकलाः प्रपूरणीयाः, मत्संकेतेन च कथावाचकोपरि प्रक्षेपणीयाः, विनिमये श्वो युष्मभ्यं मोदकान् प्रदास्यामि। मोदकप्रलोभग्रस्तास्तेऽबोधबालाः स्वकञ्चुकपुटेष्विष्टिका-खण्डान् प्रापूरयन् सन्नद्धाश्च भूत्वा प्रवचनस्थले चागच्छन्। रात्रावष्टवादनसमये प्रवचनप्रपूर्तिरभवत्। स्वल्पे ह्येव तमःप्रसारे तेऽबोधबाला अध्यापकसंकेतेन महर्षेरुपरि प्रस्तरशकलान् प्रावर्षन्। अकस्मात् क्षणं प्रविचलिताऽपि सभा महर्षिणा सत्वरं प्रशान्ता। आरक्षिभिश्च तेषु केचनोपद्रविणो बाला निगृहीताः, प्रवचनान्ते च महर्षेः सम्मुखं समुपस्थापिताः। आरक्षिजनपाशपतितान् करुणक्रन्दनपरान-बोधबालान् परिसान्त्वयन् दयालुर्दयानन्दः प्रस्तरप्रक्षेपणकारणमपृच्छत्। सकरुणं रुदन्तस्तेऽबोधबाला अध्यापकस्य प्रवञ्चनामयं मोदकप्राप्तिलोभकारणमवर्णयन्, दयानिधेर्दयानन्दस्य हृदयं द्रवितम्; स हि सत्वरं मोदकान्- अभिप्राप्य तेष्वबोधबालकेषु व्यतरत्; अब्रवीच्च; युष्मदध्यापकस्तु सम्भवतो न युष्मभ्यं मोदकान् प्रयच्छेत् परमहमवश्यं प्रयच्छामीतिब्रुवंश्च तानबोधबालानारक्षिजने-भ्योऽमोचयत्।

**अयसोऽपि सुदृढो हिन्दूधर्मः**— आयुक्त- (कमिश्नर)- महोदयस्य प्रार्थनया एकदा श्रीमहाराजस्तस्य भवने समागतः। वार्ताप्रसंग आयुक्तमहोदयोऽब्रवीत् "भगवन्! किं सूत्रतन्तुमिव विशृंखलं हिन्दूधर्मं वदन्ति? महर्षिरुवाच; नायं धर्मः विशृंखलसूत्रसमः; अपित्वयसस्तुल्यः सुदृढः; काममयोभग्नं भवेत्; परं नायं धर्मः कदापि प्रभंक्तुं शक्यः। आयुक्तमहाभागोऽपृच्छत् "भगवन्! कथमिमं सुदृढं वदन्ति भवन्तः? श्रीमहाराजोऽब्रवीत्; महासिन्धुरिव हिन्दूधर्मः; अस्मिन् ह्यनेकभद्राभद्रमतपन्थानां तरंगमालास्तरंगायन्ते। धर्मेऽस्मिन्नतीव करुणामयाः, परोपकारपरा निराकारं परमेश्वरमेकं स्वमनोमन्दिरेषु ध्यायन्तः देवपुरुषा अपि वर्तन्ते, विपरीताचरणशीला अपि धर्मेऽस्मिन् स्थिताः। अथ योगिनो ध्यानिनस्तपस्विनो नैष्ठिक-(आजीवन)-ब्रह्मचारिणोऽपि धर्मेऽस्मिन् विद्यमाना; सांसारिकविषयसुखमामोदप्रमोदमेव बहुमन्यमाना अपि बहवोऽत्र तिष्ठन्ति। अत्र हि स्पृश्यास्पृश्यविचारधारिणः सर्वैः समं सस्नेहं सहभोजिनोऽपि विद्यन्ते। सर्वोच्चस्थानस्थितास्तत्त्वज्ञानिनोऽपि परमार्थदर्शिनो धर्मेऽस्मिन् सुलभाः; सममेव ज्ञानशून्याः पशुसमा अपि बहवः सम्मिलन्ति। उत्तममध्यमाधमाचार-विचारयुतमतानि तदवलम्बिनश्चापि बहवो हिन्दूधर्ममार्गे प्रविचरन्ति। सर्वे ह्येव ते हिन्दूमतमन्तारः, नहि कोऽपि तान् हिन्दूधर्मतो बहिष्कृतान् कर्तुं शक्नोति। अतोऽहं ब्रवीमि नायं निर्बलो हिन्दूधर्मः, अपितु नितान्तसबलः। आयुक्तमहोदयः पुनरपृच्छत्; कीदृशं धर्मं भवन्तः प्रसारयितुमिच्छन्ति?" महर्षिरुवाच— एतावन्मात्रमहमिच्छामि, यल्लोकाः (जनाः) परमपुनीतान् वेदादेशान् परिपालयेयुः। एकं निराकारं परमेश्वरमुपासीरन्। दुर्गुणान् विहाय सद्गुणांश्चाभिगृह्णीरन्।

**क्रिश्चीना भवन्तश्चत्वारिंशद् युवजनाः सुरक्षिताः**— क्रिश्चीनविद्या-लयेष्वध्यापकाश्चत्वारिंशदार्ययुवकाः मनसा प्रायः क्रिश्चीना संवृत्ता आसन्। तर्हि "प्रार्थनासभा" नाम्ना सभाऽप्येका सुस्थापिता आसीत्। यत्र ते रविवासरे क्रिश्चीनरीत्या प्रार्थनादिकमकार्षुः। महर्षेरुपदेशवचनामृतैः सुप्रभावितानां तेषां हृदयेभ्यः क्रिश्चीनमतविचारा निर्मूलतां गताः। पुनश्च ते स्वपुरातनं धर्मं श्रद्धयाभ्यनन्दन्।

**नहि सहभोजनेन प्रीतिः संवर्धते**— पादरीक्लार्कमहोदय एकदा महर्षिमु-पगम्य प्राब्रवीत् "प्रसीदतु भगवन्! एकस्मिन्नेव काष्ठपट्टे सम्मिलितसंयुतसह-भोजनेनावयोरतितरां परस्परं सम्प्रीतिः प्रवर्धेत"। महर्षिरुवाच— शियासुन्नी-भावापन्नयवना एकस्मिन्नेव पात्रे भोजनं भुञ्जन्ति, अथ च रूसदेशीयाः बृटिशाङ्ग्लाश्च तथा भवन्तः प्रोटैस्टण्टकैथोलिकक्रिश्चीना अप्येकस्मिन्नेव

काष्ठपट्टे सहाशनपराः परस्परं कीदृशं वैरविरोधभावं कियतीञ्च शत्रुतां धारयन्ति– इति सर्वेषामेव समक्षमपि व्यक्तो विषयः। पादरी महोदयो मौनमभजत्।

**भविष्यद्ज्ञानम्–** एकदा स्वीयैकस्मिन्नावासकक्षे स्थितः पण्डितमहोदयान् वेदभाष्यश्चालेखयन्महर्षिप्रवरो मध्यान्तर एव समुत्थाय कर्मचारिवर्गं सकलमपि पुस्तकाद्युपकरणजातं सत्वरमेव तत्कक्षतो बहिः संस्थापयितुमादिदेश। आदेशं परिपालयन्नपि कर्मचारिवर्गो महर्षेर्व्यर्थश्रमायास-प्रदानेन स्वमनसि परमखिन्नता-मन्वभूत्। यावत्सर्वाण्यप्युपकरणान्यन्यस्मिन् कक्षे स्थापितानि तावदेव पूर्वकक्षस्यो-पर्यावरणं (आच्छादनम्) धरणीसादभवत् (अपतत्)। कर्मचारिवर्गः श्रीमहाराज-स्यादेशोपयुक्ततामभिभाव्यातीवविस्मितोऽभवत्।

**गुरुदासपुरनगरेऽवस्थानम्–** महर्षेर्धर्मोपदेशैः-अमृतसरे आर्यसमाजस्य स्थापनाभवत्। अनेके श्रद्धालवो ज्ञानचक्षूंषि सम्प्राप्नुवन्। पवित्रं परोपकारपथम-भ्यगृह्णन्, लोककल्याणकरा सुमतिश्च तेष्वजागरत्। एवममृतसरवासिन उपदेशामृतेनाभिषिञ्चन् महर्षिप्रवरो गुरुदासपुरवासिभिः संप्रार्थितः १९३४तम-संवत्सरस्य श्रावणशुक्लनवम्यां तदनु १८७७तमवर्षस्थ- अगस्तमासस्याष्टा-दशतारिकायां गुरुदासपुरनगरं सम्प्राप्नोत्। प्रवचनानि प्रवृत्तानि, प्रवचनेषु च शतशः श्रोतृजनाः समागच्छन्। उच्चकर्मचारिणोऽपि श्रोतृष्वासन्। महर्षेरावासेऽपि दिवानिशं सत्संगसरित्प्रावहत्। तदानीं मिस्टर (श्री) काकमहोदयस्तत्राभि-यन्तृरूपेण व्यराजत; सोऽपि महर्षिप्रवचनेषु श्रोतृरूपेण निरन्तरं समागच्छत्। एकदा प्रवचन प्रसंगे महर्षिणा प्रोक्तम्– भूयान् कालो देशेऽस्मिन् समागतानामांगल-देशीयानां व्यतीतः; परं साम्प्रतमपि एतेषां वर्णोच्चारणं सदोषमेव। एते हि तकारस्थाने टकारमेवोच्चारयन्ति। एतेन काकमहोदयः रुष्टः सन् प्रगच्छन्नब्रवीत् "पश्चिमस्यां दिशि पेशावरप्रदेशे गच्छेयुश्चेद् भवन्तः प्रमुदिता न स्थास्यन्ति", "बृटिशप्रशासने ह्येव स्वतन्त्रा स्वच्छन्दा चाभिव्यक्तिः सम्भवा" इति सम्भवतः काकमहोदयस्याभिप्रायः। महर्षेरुपदेशवचनैः प्रभावितेन जनवर्गेण तत्र गुरुदासपुरेऽपि आर्यसमाजस्य संस्थापनं कृतम्।

**अद्भुतं ब्रह्मचर्यबलम्--** गुरुदासपुरतः अमृतसरमनुभ्रमन् श्रीमहाराजः १९३४तमसंवत्सरस्य भाद्रपदशुक्लषष्ठयां तदनु १८७७ वर्षस्थसितम्बरमासस्य त्रयोदशतारिकायां जालन्धरनगरं समुपागतः। श्रीसरदारसुचेतासिंहमहाभागस्य भवने सुशोभितोऽभूत्। अत्र हि तस्य चतुस्त्रिंशत्पञ्चत्रिंशत्प्रवचनानि प्रवृत्तानि। एकस्मिन् प्रवचने महर्षिणा प्रोक्तम्– यश्च राजाऽपि वाराङ्गनानुरक्तः सोऽपि वारांगनासमो वारपुरुष एव। स हि तीर्थमाहात्म्यं गंगास्नानफलमपि भ्रान्तिमूलकमेवाकथयत्। अमृतसरस्य दरबारसाहेब-(हरमिन्दर)-विषये तेनोक्तम्

"दीपावलीदिवसे शिष्य-(सिख)- जनास्तत्र सकेशं स्नानमाचरन्ति; मम मनस्तु तत्राचमनं कर्तुमपि न समीहते"। प्रवचनान्ते च सरदारविक्रमसिंहेनोक्तम् "भगवन्! अद्यतन प्रवचने तु वयमपि भृशमालोचिताः। श्रीमहाराज उवाच- "नहि प्रवचने प्रचलति पक्षपातः; सत्यं हि सर्वथा प्रवक्तव्यमेव।"

सरदारविक्रमसिंहः एकदा न्यवेदयत्; "भगवन्! ब्रह्मचर्येण महाबलिनो भवन्तीति श्रूयते किं सत्यमेतत्?" महर्षिरुवाच; शास्त्रेषूपवर्णितं ब्रह्मचर्यधारणमहत्त्वं पूर्णतः सत्याश्रितम्। सरदार महोदयः पुनरुवाच. "क्षमस्व भगवन्! भवानप्याजन्म-(अखण्ड)-ब्रह्मचारिरूपेण विराजते; न वयं भवति किमपि बलप्रकर्षं पश्यामः। महर्षिस्तदा किमपि न प्रत्युदतरत्। सरदारमहोदयः बहुकालं यावत्सत्संगे समुपाविशत्। गृहागमनकाले यावत्स महर्षिमभिवाद्य स्वीयाश्वयाने समारुरोह तदा महर्षिः पृष्ठभागतस्तद्यानमगृह्णात्। विक्रमसिंहो भृशमंकुशेनाश्वान् प्राताडयत्; परं न ते पदमेकमपि यानप्रकर्षणे समर्थाः बभूवुः। सरदारमहाभागो यावत्परावृत्य पृष्ठभागमपश्यत् तावन्महर्षिणा यानं प्रमुक्तं पृष्टश्च "सम्प्राप्तं ब्रह्मचर्यबलप्रमाणम्?" इति। सरदारमहाशयस्तस्य सामर्थ्याति-शयेन विस्मितोऽभूत्।

अत्र हि महर्षिः क्रिश्चीनमेकं शुद्धाचरणं विधाय वैदिकधर्मे प्रावेशयत्। ततो जालन्धरतो लवपुरमनुभ्रमन् महर्षिः १८७७तमवर्षस्य- अक्टूबरमासस्य षड्विंशतितमे दिनांके फिरोजपुरनगरमाजगाम। अत्र हि श्रीमहाराजस्याष्टौ प्रवचनानि प्रवृत्तानि। प्रवचनैः सममेव शंकासमाधानमपि प्रवर्तितम्।

**सर्वव्यापकश्चेदीश्वरः क्व घटिकायां विराजते?** एकदा पण्डितः कृपारामोऽपृच्छत् "भगवन्! एकदेशी परमेश्वरः सर्वव्यापको वा? "सर्वव्यापकः परमेश्वरः" इति महर्षिणा समुत्तरिते कृपारामः स्ववस्त्रान्तःपुटात् घटिकां निष्कास्य काष्ठपट्टेऽवास्थापयदपृच्छच्च; "भगवन्! सर्वव्यापकः परमेश्वरश्चेत् क्व ह्यस्मिन् घटिकायन्त्रे विराजते?" श्री महाराजोऽवदत्; आकाशवत् परमसूक्ष्मः सर्वव्यापकश्च परमेश्वरश्चर्मचक्षुर्भ्यामगोचरः। पुनश्च स्वदण्डमुत्तोलयन्नुवाच "आकाशो हि यथा सर्वव्यापको दण्डेऽस्मिन् बहिरन्तश्च रममाणस्तिष्ठति; अथ च दण्डेऽस्मिन् स्थितोऽप्याकाशो यथा न परिदृश्यते तथैव युष्मद्घटिकायन्त्रेऽपि स्थितो हीश्वरः परमसूक्ष्मत्वान्नेन्द्रियैः परिगृहीतुं शक्यते। श्रुत्वैतत् श्रीकृपारामः सन्तुष्टोऽभवत्।

**पुजारी शब्दस्यार्थः** – एकदा हि फिरोजपुरसैन्यशिविरे बृहन्मन्दिरपूजकः श्रीरघुनाथो महर्षिमुपगम्य प्रश्नपरायणो महर्षिणा पृष्टः; प्रश्नकरणात्प्राक् पुजारीशब्दस्यार्थं ब्रूहि। मौनाश्रिते रघुनाथे मुनिवरोऽवदत्; "पूजायाः अरिः"

इति पूजारी "पूजाशत्रुः" इत्यर्थः सम्पद्यते; कथं भवन्त एवंविधानि नामकरणानि विदधति?

**योगरहस्यप्रशिक्षणम्**– श्रीभक्तस्वरूपसिंहोऽतीवप्रभुभक्तिपरायणः, सत्संग-रसरसिकश्चावर्तत। श्रीमहाराजेन समं योगचर्चां प्रकुर्वन्ननेकानि बहुमूल्यानि योगमौक्तिकान्यलभत; कृतार्थश्चात्मानममन्यत।

**नाहं सम्मतिप्रदानाधिकारी**– फिरोजपुरवासिनो धर्ममयं जीवनरसं वितीर्य महर्षिप्रवरः १९३४तम संवत्सरस्य कार्तिकामावास्यायां सायंकाले ततः प्रस्थाय आगामिनि प्रातःकाले लवपुरमागच्छत्। आगामिनि दिवसे (कार्तिकशुक्ल-प्रतिपदि) लवपुरार्यसमाजस्यान्तरंगसभाधिवेशनमासीत्। अधिवेशने ह्यार्यसमा-जस्य नवनिर्मितसंशोधितपरिवर्तितनियमाः सदस्यानां पुरः समुपस्थापनीया आसन्। सभासदश्च तेषु नियमेषु स्वमतामतं प्रादर्शयन्। संयोगवशात् सभायां महर्षिप्रवरोऽपि विराजमान आसीत्। सभासद्भिर्विनीतभावेन स्वमतिं पृष्टः श्रीमहाराजोऽवदन्नाहं भवतामन्तरंगसभासदस्योऽतो न सम्मतिप्रदानेऽधिकृतः। महर्षेरमूल्यसम्मत्यालभ्यलाभमुपलब्धुं सभासदस्तत्क्षणमेव श्रीमहाराजं सर्वसम्मत्या सभासदमन्तरंगसदस्यश्चाचिन्वन्।

**रावलपिण्डीनगरे धर्मोपदेशः**– लवपुरतः प्रस्थाय ऋषिराजः १८७७ वर्षस्थनवम्बरमासस्य सप्तमदिनांकस्य प्रत्यूषे रावलपिण्डीनगरमागत्य श्रीजानसनजीपारसीकभवने समासीनः। अत्र हि महर्षेः विंशतिदिनानि यावत् प्रतिसायं प्रवचनान्यभूवन्। स हि स्वप्रवचनेषु मूर्तिपूजनम्, अवतारवादश्च तीव्रमखण्डयत्। यवनक्रिश्चीनमतयोर्दोषान् प्रदर्शयन् वैदिकधर्मस्य श्रेष्ठतां प्रामाणयत्। अत्रापि आर्यसमाजस्थापनाभवत्।

**हीरकोऽपि पंके पतितः**– रावलपिण्डीनगरे वैदिकनादं निनादयन्नृषिवरः गुजरातनगरमनुगच्छन् मार्गे झेलमनगरेऽवस्थितः! प्रवचनानि प्रवृत्तानि । एकदा श्रोतैको न्यवेदयत्, भगवन्! आज्ञप्तश्चेत्संगीतमेकं प्रस्तुयाम्? महर्षिणाज्ञप्ते संगीतं प्रवृत्तम्, श्रोतारो विमुग्धाः, महर्षिरपि भावमयो जातः, सत्संगसमाप्तौ भक्तप्रवरेणैकेनोक्तम्; भगवन्! अद्यतनसंगीतप्रस्तोता ह्यत्रत्योप-मण्डलाधिकारी। अतिसरसं गायति; परमतीव चरित्रहीनः, दुराचारग्रस्तश्च वर्तते। गृहिणीं परित्यज्य वारांगनासु रमते, सुरापी, आमिषसेवी, उत्कोचग्रहीता च वर्तते। अग्रिमदिवसेऽपि महर्षिणाऽनुज्ञातेन भद्रपुरुषेण तेन पुनरपि संगीतमेकं प्रस्तुतम्। मधुमयमिवाभूत् सर्वम्, स्वामिश्रोतारश्च सर्वे पुनरपि रससिक्ता इवाभूवन्। परिसमाप्ते संगीतप्रवाहे ऋषिराजस्तं भद्रपुरुषं सम्बोधयन्नुवाच "अमीचन्द! हीरकोऽपि पंके सम्पतितः" विद्युत्स्फुलिङ्गानीव ऋषिवचनानि

हृदयान्तरे प्राविशन्। तुरन्तमुत्थाय स हि प्रचलन्नुवाच; भगवन्! साम्प्रतं पापपंकबहिर्भूत एव श्रीमत्पुण्यदर्शनमधिगमिष्यामि। गृहं प्राप्य सुराशीशकपात्राणि भग्नानि। वारांगनाश्च बहिष्कृताः। सुरामिषसेवनं परिहर्तुं प्रतिज्ञातम्। तारसन्देशसम्प्रेषणेन सहधर्मिणी समाहूता। सम्पूर्णेऽपि नगरे प्रचलिता प्रवदन्ती "परिवर्तितभावः सच्चरित्रनिष्ठश्चोपमण्डलाधिकारीति"। अयमेव भद्रपुरुषस्ततः परं महता- अमीचन्दनाम्ना विख्यातिं गतो यस्य सुमधुराणि संगीतानि **"आज मिल सब गीत गाओ उस प्रभु के धन्यवाद"** इत्यादीनि– अस्माभिरतिश्रद्धया प्रेमभावेन च सर्वेष्वपि शुभावसरेषु गीयन्ते।

**गुजरातनगरे धर्मप्रचारः**– डॉ० विशनदासमहोदयस्यामन्त्रणे १८७८ वर्षस्थजनवरीमासस्य त्रयोदशे दिनांके ऋषिराजो गुजरातनगरमागत्य फतहसार-नामोपवने विरराज। सर्वत्र रथ्यावीथीविपणिषु च महर्षिशुभागमनस्य चर्चा समारभत। नगरेऽस्मिन् शिक्षितहिन्दूवर्गे क्रिश्चीनमतप्रभावोऽभ्यवर्तत। महर्षिः क्रिश्चीनमतस्य दूषणान्युद्धृत्य मिथ्यासिद्धान्तानखण्डयन्। पादरिभिः शास्त्रार्थोऽपि समभवत्। हिन्दूधर्मस्य कुरीतीरालोचयन् वेदमहत्त्वम्, ब्रह्मचर्यम्, सन्ध्योपासना-दिकञ्च सप्रभावं प्रत्यपादयत्। महर्षेः प्रवचनैः प्रभावितो मौलवीरेको गायत्री मन्त्रजपनसंकल्पमग्रहीत्।

**पुरुषार्थो हि प्रारब्धतो महीयान्**– एकदा हि शालवस्त्रं परिदधत् सिखसाधुरेक ऋषिराजमुपगम्य प्रारब्धवादे शास्त्रचर्चां प्रारभत। महर्षिर्युक्ति-प्रमाणैस्तदुभयं (प्रारब्धं पुरुषार्थश्च) समर्थयत्। "सञ्चितकर्मणां भोगो हि प्रारब्धम्,अस्मिन् जन्मनि च यानि शास्त्रविहितकर्माणि क्रियन्ते, स हि पुरुषार्थः। पुरुषार्थो ह्यवश्यमनुष्ठेयः। दुराग्रही स साधुः श्रीमहाराजस्य कथनमनभिनन्दन् पुनः पुनः "पुरुषार्थो हि नावश्यकः"। यद्धि भवितव्यमवश्यमेव तद् भवतीत्येव समवदत्। महर्षिः स्वसेवकमादिदेश; "महात्मनोऽस्य शालवस्त्रमवतार्य राजपथे प्रक्षिपतु; पश्यामस्तावत् विना पुरुषार्थेन कथं वस्त्रमिदमस्य पार्श्वे समापतति। यदा हि स्वामिसेवकस्तस्य शालवस्त्रं गृहीतुं प्रायतत तदा हि साधुः वस्त्रेण तथासक्तो यन्न खलु सेवकस्तद् गृहीतुमशक्नोत्।

**ज्ञानी भवानज्ञानी वेति**–एकदा संहता अनेके मनुष्या ऋषिवरं निग्रहस्थानमानेतुमचिन्तयन् "अयं हि सर्वानस्मान् निरुत्तरीकरोत्यतोऽस्माभि-रेतादृशः प्रश्नः कश्चिदुपस्थातव्यो येन सर्वतो हि निग्रहस्थानेऽयं समापतेत्—यथा हि "ज्ञानी भवानज्ञानी वेति" वयं प्रक्ष्यामः। यदि हि स्वामी "ज्ञानी-अहम्" इति वदति तदा वक्तव्यम् "न ज्ञानिनो महापुरुषा अहंकारमाचरन्तीति"। यदि च स "अज्ञानी-अहम्" इति वदेत्तदाऽस्माभिर्वक्तव्यम् "स्वयमज्ञानीचेद् भवान्

किमस्मान् प्रबोधयितुं शक्नोति;'' इति निश्चयमिमं विधाय प्रश्नोऽयं यदा महर्षिसन्मुखे समुपस्थापितस्तदा तत्कालमेव महर्षिरुवाच ''कतिपय विषयेष्वहं अज्ञानी कतिपयेषु च ज्ञानी; यथा च वेदादिशास्त्रीयज्ञानविषयेऽहं ज्ञानी, फारसी-अरबी-इंगलिशभाषादिज्ञान विषयेष्वनभिज्ञोऽहं तत्राज्ञानी एव। उत्तरमिदं शृण्वन्तः प्रश्नकर्तार आश्चर्यचकिता अन्योऽन्यमपश्यन्। एतेन गुजरातवासिनो निश्चयं गता यत् सर्वथाऽजेय ऋषिराजः, यतश्चमत्कारिणी तस्य स्फुरणशक्तिः।

**परहितसाधनमेव मनुष्यत्वम्**— द्वावुच्चराजकर्मचारिणावेकदा महर्षि सम्मिलितुमागच्छताम्, वार्तालापप्रसंगे च सकटाक्षमवदताम्; स्वामिमहाभाग! किं निहितं खण्डनप्रपञ्चे, समुद्विग्ना भवन्ति लोकाः, आवां हि स्वलाभकरं कर्मजातमेव बहुमन्यावहे। परहितचिन्तनं परोपकारादिकञ्च सर्वं दम्भजातम्। गम्भीरभावेन् महर्षिरुवाच; ''यदि हि स्वहितसाधनमेवाभीष्टम्; तदा किं नाम मनुष्यत्वम्? गर्दभादिष्वपि स्वहितसाधनं दृश्यते, परहितसाधनं परोपकारो ह्येव वस्तुतः मानवभावः। उत्तरेण सन्तुष्टौ तौ प्रशान्तभावेनागच्छताम्।

**गुजराँवालानगरे वैदिकनादः**— १९३४तमसंवत्सरस्य माघशुक्ल-पञ्चम्यामृषिराजो गुजराँवालानगरमाजगाम। सरदारसन्तसिंहधर्मसिंहप्रभृतयो भद्रपुरुषाः तस्मै स्वागतं व्याहर्तुं वाष्पयानपत्तने समुपगताः। ततश्च महर्षि सम्मानेन सत्कुर्वन्तः सरदारमहासिंहस्य विशालभवने समावासयन्। प्रतिसायन्तनं प्रवचनानि प्रवृत्तानि। पाञ्चालप्रान्ते हि स सर्वत्र बहुधा ''आर्योद्देश्यरत्नमाला''-लिखितविषयेषु क्रमशः एकैकशः कृत्वा विस्तृतव्याख्यानमकरोत्, मध्यान्तराले वेदमन्त्रदर्शनसूत्रधर्मग्रन्थ- (स्मृति)- श्लोकांश्च समुदहरत्। पाखण्डखण्डनमपि सममेव प्रवृत्तमासीत्। तत्तत्समये युक्तिप्रत्युक्तिशृंखलां प्राकरणिकमनोरमकथा-जातम्, हास्यरसमयप्रहासकोक्ति समूहमपि प्रास्थापयत्। तत्रहि स आर्योद्देश्यरत्नमालास्थितानि सर्वविषयाणि अष्टादशदिनेषु समाप्तान्यकरोत्। उपदेशानन्तरं भद्रजनास्तद्विषयसम्बद्धतर्कजालं शंकासमाधानञ्चाकुर्वन्। सर्वतर्कशंकादीनामुत्तराणि महर्षिरतिकोमलशब्देषु तुरन्तमेव व्यतरत्। न ह्युत्तरप्रदानाय महर्षये कश्चिच्चिन्तनायासोऽपेक्षित आसीत्।

**ब्रह्मचर्यमहत्त्वम्**— ब्रह्मचर्यमहत्त्वमुपवर्णयन्नेकदा महर्षिरकथयत्— ''एतावान् वीरपुरुषः सरदारहरिसिंहः पञ्चविंशतिवर्षाणि यावद् ब्रह्मचर्यपालनेनैव सञ्जातः। साम्प्रतं ममायुर्यद्यपि पञ्चाशद् वर्षेभ्योऽधिकमेव वर्तते, तथाऽपि समागच्छतु कश्चिद् बलिष्ठतमपुरुषो यो हि मया गृहीतं तस्य हस्तं मोचयितुं प्रभवेत्; अथवा स्तब्धामिमां मे भुजां सन्नमयेत्। बहवो हि

महामल्लास्तत्र सभायामुपविष्टा आसन्, परं न कश्चित् स्वबलपरीक्षणस्य साहसमकरोत्।

**यवनस्य भवने यवनमत-(इस्लाम)-आलोचनम्**—एवं गुजराँवाला-नगरेऽनेकभद्रजनानां भ्रमजालं परिहरन्, संशयान् छिन्दन् आर्यसमाजस्थापनाञ्च विधाय ऋषिराजः १९३४तमसंवत्सरस्य फाल्गुनकृष्ण चतुर्दश्यां पुनर्लवपुर-मागतो नवाबनवाजिश-अली-खाँ-महोदयस्य भव्यभवने विरराज। अत्रैवैकदा प्रवचनप्रसंगे स यवनमतं प्रत्यालोचयत्; तदानीं नवाबमहोदयोऽपि तत्रैवोपवने समागतोऽवर्तत। प्रवचनान्ते भद्रपुरुषः कश्चिन्न्यवेदयत् "भगवन्! नहि कश्चिदपि आर्यो यवनः क्रिश्चीनो वा भवन्तं स्थातुमावासं प्रयच्छति; नवाबमहाशयस्य महानयमुपकारः, यत्तेनावासाय स्वभवनं प्रदत्तम्, परं भवानत्रैव यवनमतालोचनं विधत्ते। अद्य हि नवाबमहाशयोऽपि श्रोतृषु वर्तते, न खलु सोऽप्रसन्नतां धारयिष्यति? महर्षिरुवाच—वैदिकधर्मप्रचारप्रसारायाहमागतः; तस्यैवोपदेशं प्रदास्यामि। अत्रागमनप्रयोजनमपि यवनमतप्रशंसनम्, अन्यमतान्तरयशोगानं वा न वर्तते; उपदेशं शृण्वन्तं नवाबमहोदयमहमपश्यम्। मया हि सावधानेन मनसा आर्य-(वैदिक)-धर्मस्य महत्त्वमुपवर्णितम्। नाहं सर्वेश्वरं विहाय नरनारीविशेषात् कस्मादपि बिभेमि।

**मुलताननगरे धर्मोपदेशः**— मुलतानसैनिकशिविरस्थभक्तजनैः प्रार्थनापूर्वकं श्रीमहाराजः समामन्त्रितः। तेषामाग्रहेण १९३४तमसंवत्सरस्य फाल्गुनशुक्लाष्टम्यां महर्षिः मुलतानसैनिकशिविरं सम्प्राप्तः। स्वागतार्थमनेके भद्रपुरुषाः वाष्पयानपत्तने समुपस्थिता आसन्। ते हि स्वागतं व्याहरन्तः श्रीमहाराजं वेगी-उद्याने समावासयन्। तत्सायन्तनसमयादेव प्रवचनशृंखला समारब्धा। तस्य धर्मोपदेशैर्नागरिकाः शिविरस्थाश्च श्रोतारोऽतीव प्रभाविता अभूवन्। धर्मकार्येषु विघ्नविधातारश्चापि तत्र बहव आसन्। एतादृशा धूर्ता रथ्यासु वीथीषु च परिभ्रमन्तोऽब्रूवन्— "स्वामिमहोदयोऽयं क्रिश्चीनानां भृत्यः, क्रिश्चीनजनैर्हि भारतस्य क्रिश्चीनीकरणार्थं लक्षमुद्राभिरयं क्रीतः, नास्य प्रवचनानि श्रोतव्यानि"। गोस्वामिनस्तु सीमातीतोपद्रवकारिण आसन्। एकदा प्रवचनप्रवृत्ते महर्षिप्रवरे ससेवकास्तत्र समागता गोस्वामिनः शंखघड़ियालनिनादैर्जयघोषैश्चातीवोपद्रवमकुर्वन्। ऋषिराजस्तेषां कलहजनककलुषितक्रीडासु न किमप्यवधानमदात्, गम्भीरभावेन च धर्मोपदेशपरोऽतिष्ठत्। अन्तत आरक्षिजनैस्ते धूर्तजनाः (उपद्रविणः) ततोऽपसारिताः।

**सभमेव प्रत्युत्तरम्**— एकदा हि संहता यवनाः क्रिश्चीनाश्च सभमेव महर्षिमभिलक्ष्य नानाविषयेषु बहुप्रश्नान् प्राक्षिपन्। तैर्हि विचिन्तितमासीद्

यदेकदा बहुप्रश्नप्रवाहेणास्तव्यस्तः स्वामिमहाभागस्तूष्णींभूतो न किमपि प्रत्युत्तरणे प्रभविष्यति, परं मुनिवरस्तेषां प्रतिप्रश्नं तदुत्तमरीत्या समदधाद् यत्ते ह्याश्चर्यचकिता मुक्तकण्ठतस्तस्य योगबलमाहात्म्यं प्रशंसन्तः परमसन्तुष्टा अभूवन्।

**वेदभाष्यालोचनाप्रत्युत्तरम्—** मुलतानशिविरनगरवासिनो वेदोपदेशामृतेनाभिषिच्य महर्षिः पुनर्लवपुरमाजगाम। अत्र हि प्रतिदिनं प्रभावपूर्णप्रवचनानि प्रवृत्तानि। स्वामिनाचिन्तितम्—"मत्कृतवेदभाष्यं यदि विद्यालयेषु महाविद्यालयेषु च पाठ्यपुस्तकरूपेण स्वीक्रियेत तदा हि सुगमो वेदप्रचारप्रयासः" इत्यवधार्य स पाञ्चालप्रान्तीयराज्यपालं सररार्बर्ट-आजर्टनमहोदयममिलत्। राज्यपालेन काश्चित् प्रतीरभिक्रीय स्वदेशीयविदेशीयविदुषां पुरश्च समुपस्थाप्य तेषां सम्मतयोऽभियाचिताः ताश्च सम्मतयः प्रायो महर्षेर्मन्तव्यविरुद्धाः; अतो राज्यप्रकाशनविभागतो यावत्तासां प्रकाशनमभूत्तावन्महर्षिणा तासां सन्तोषजनकप्रत्युत्तरमपि प्रकाशितम्।

**युष्मच्चिन्तया कृशोऽहं जातः—** एकदा स्वभक्तजनेषु वार्तालापप्रसंगे महर्षिरुवाच; भवन्तो हि साम्प्रतं मामतिहृष्टपुष्टं सुस्वस्थं वा मन्यन्ते; परमहं गंगातीरावासापेक्षया कृशमात्मानमनुभवामि; वस्तुतो भवतां हितचिन्तया दुर्बलोऽहं सञ्जातः।

**कथं सत्संगे निद्रा (तन्द्रा) समायाति ?—** एकदा हि भक्तप्रवर एको महर्षिमपृच्छत् "भगवन्! यत्र हि नृत्यनाट्यं, रंगरागः, हासविलासो वा प्रवर्तते तत्र सर्वापि रात्रिरुपवेशनस्थितावेव व्यत्येति; परं यत्र सत्संगो धर्मोपदेशो वा प्रवर्तते तत्रस्वल्पेनैव कालेन जनवर्गस्तन्द्रामनुभवति, किमत्र कारणम्? महर्षिरुवाच— प्रभुकीर्तनं सत्संगस्थलञ्च सुकोमलपुष्पशयनमिव तत्र यदि तन्द्रानिद्रा वा न समापतेत्तदा क्व तदाश्रयः? नृत्यगीतादिसमुत्तेजकभावाश्चात्मार्थे कण्टकास्तरणं, कथं तत्र निद्रागमनसम्भवः?

**प्रस्तरेष्टिका वर्षकाः पुष्पाणि वर्षयिष्यन्ति—** लवपुरतो महर्षिरमृतसरं प्राप्य सरदारभगवानसिंहस्य भवने व्यराजत। पौराणिकपण्डितम्मन्याः साम्प्रतमपि विरोधं प्रादर्शयन्। एकदा सप्ताष्टौ तिलकधारिणः पण्डितम्मन्याः सशिष्याः समुपगम्य शास्त्रार्थकृते स्तब्धाः सम्मुखमुपाविशन्। शास्त्रार्थस्तु क्व तेषां कार्यक्रमः, तच्छिष्यवराः प्रस्तरेष्टिकाः प्रक्षेप्तुं प्रारभन्त, सभास्थलञ्च धूलिधूसरितमकुर्वन्। श्रीमहाराजस्यानादरमनुभवन्तो भक्तजनाः प्रकुपिताः, परं भक्तजनान् प्रशान्तयन् देवर्षिरुवाच— "मदिरोन्मत्तेषु कियान् कोपः? चिकित्सकस्येवास्मत्कार्यम्, उन्मत्तरोगिणेऽपि चिकित्सक औषधं प्रयच्छति। सुस्थिरमवगच्छन्तु; ये हि साम्प्रतं

प्रस्तरेष्टिकारजांसि प्रक्षिपन्ति; त एव समयान्तरे पश्चात्तापमाचरन्तः पुष्पवर्षणं करिष्यन्ति। यदा महर्षिः स्वावासे समागच्छत्, तदाभक्तप्रवरो ह्येकोऽकथयत् "भगवन्! अद्य हि भवन्तमभिलक्ष्य दुष्टजनैर्बहुतरं धूलिरंजो भस्मादिकं प्रक्षिप्यातीवानादरभावः प्रदर्शितः; दुःखतरमेतत्। महर्षिरुवाच– परोपकारकरणे परहितसाधनसमये च स्वमानापमानं, परनिन्दनञ्च विस्मर्तव्यमेव; नान्यथा सुधारसम्भवः। मया हि आर्यसमाजोपवनमारोपितम्, उपवनपालकस्येव मे स्थितिः। उपवनक्षुपेषु-उर्वरकमभिसिञ्चतो ह्युपवनपालकस्य शिरसि मृद्रजःकणानि पतन्त्येव। नाऽहं स्वशिरसि पतितानि धूलिरजःकणानि परिगणयामि। उपवनमिदमंकुरितं पल्लवितं, पुष्पितं, फलितञ्च स्यादित्येव मे प्रबलो मनोऽभिलाषः।

**एकलः (एकाकी) एवाहमासम्**– पण्डितपोलोरामो हि महर्षेरतिप्रेम-परायणो भक्तप्रवर एकदा बद्धाञ्जलिर्न्यवेदयत्– "भगवन्! सीमितसंख्याका एव पुरुषा आर्यसमाजे सम्मिलिताः; कथमेतत्स्वल्पसंख्यया महत्कार्यं सम्पद्येत? श्रीमहाराज उवाच, "भूयांसो भवन्तः सहस्रशो जनान् सहयोगिनो विधातुं समर्थाः, किञ्चिन्मदीयामपि स्थितिं विवेचयन्तु, वेदप्रचारकार्यारम्भे सर्वथैकाकी निःसहायो वाहमासम्; साम्प्रतं परमप्रभोरनुकम्पया भवद्विधाः सहस्रशो जनाः मत्सहयोगिनो वर्तन्ते, आर्य-(वैदिक)-धर्मकृते च स्वसर्वस्वं समर्पयितुं समुद्यताः। पण्डितवर्य! सर्वेभ्यः शुभमिच्छन्तु, परिणामञ्च परमेश्वरार्पणं कुर्वन्तु, अवश्यमेव सफलमनोरथा भविष्यथ।

**प्रभुरेव संरक्षकः**– पूर्वस्यां दिशि प्रचारयात्राप्रवृत्ते मुनिवरे पाञ्चाल-प्रान्तीयभक्तजनाः खिन्नतामन्वभवन्। एको हि भक्तप्रवरो न्यवेदयत् "भगवन्! भवता हि प्रान्तेऽस्मिन् स्थाने स्थाने आर्यसमाजोपवनमारोपितम्, परमितः प्रयाते भवति कोऽस्योपवनस्य संरक्षकः? महर्षिरुवाच, पाञ्चालप्रान्तीयाः साहसिन उत्साहशीलाश्च वर्तन्ते; श्रद्धालवो वीरपुरुषाश्चैते। एतेषु पूर्णविश्वस्तोऽहम्, सुस्थिरा मे प्रत्याशा; मया हि सकलसामर्थ्येन भूमिं संशोध्य- (आर्यसमाज)– उपवनमारोपितम्; उर्वरकं प्रक्षिप्तम्, जलसेचनमपि कृतम्, साम्प्रतं नाहमस्य म्लानभावं किञ्चिदपि परिचिन्तयामि। पाञ्चालवासिषु पूर्णाशान्वितोऽहम्; अथ च सर्वाण्यपि कार्याण्येवंविधानि परमेश्वराश्रितानि क्रियन्ते, समाजस्यास्यापि स एव संरक्षको यो हि सूर्यचन्द्रमसावभिरक्षति सञ्चालयति च।

**पाञ्चालभ्रमणस्य सिंहावलोकनम्**– पाञ्चालप्रान्ते महर्षेः सद्धर्मप्रचार-प्रसारयात्राऽतीवसफला। प्रान्तेऽस्मिन् समागते स्वामिनि क्रिश्चीनपादरिणः परिपक्वां धर्मान्तरणकृषिं हस्तद्वयेनालुनन्। पाञ्चालीयशिक्षितसमाजः सम्मानमयं

जीवनं व्यत्येतुं क्रिश्चीनमतं प्राविशत्, महर्षिश्च क्रिश्चीनान् भृशमत्यवर्तत। आर्यजनांश्च धर्मान्तरणतः समरक्षत्। स्वभावतः श्रद्धाशीलः सहृदयश्च पाञ्चालजन-समुदायः, स्नेहेन सविवेकयुक्तिवादेन च तेषां मनो मस्तिष्कञ्च विजेतुं शक्यते। पाञ्चालीयाः पौर्वापर्यं विचार्य विनिश्चयेन कार्यकरणे विलम्बं न विदधति। अन्यप्रान्तीया नैतत् ज्ञातुं प्रभवन्ति यत्पाञ्चालीयाः कदा कार्यजातं विचिन्तयन्ति कथयन्ति कुर्वन्ति च। यावत्ते (अन्यप्रान्तीयाः) चिन्तनपरा एव तिष्ठन्ति; पाञ्चालाः कार्यपूर्तिं विदधते।

समुन्नतसुशोभिताकारम्, सुगठितमांसपेशिसंयुतसर्वसंपुष्टदेहम्, तेजो-विभासितमुखमण्डलम्, स्वर्णगैरिकवस्त्रविभूषितम्, दिव्यदेवसमम्, दयानन्दसरस्वती-स्वामिनं दर्शं दर्शं जनवर्गः सर्वत्रैवातिश्रद्धया नतमस्तकोऽभूत्। स हि विगतभयः (निर्भयः) सत्यप्रवक्ता, दूरीकृतसर्वस्वार्थप्रलोभनप्रपञ्चः, जनकल्याणं कामयमानः, विहितवैदिकधर्मपुनरुत्थानविनिश्चयः, भारतीयातीतगौरवजागरणलालसः, श्रुति-शास्त्रज्ञानधुरन्धरः, स्पृहणीयोहायुतः, प्रतिभापूर्णतर्कनिष्ठश्चासीत्। पाञ्चालजनता दयानन्दमहर्षेरोजास्विनीवाचा वैदिकधर्मस्य सत्यस्वरूपमशृणोत्; हृदयङ्गमञ्चा-करोत्। क्रिश्चीनमतं प्रति प्रवाहितविश्वासधाराऽवरुद्धा। हिन्दूधर्मस्य पाखण्ड-लीलाकुरीतिभिश्च विरक्तो जनसमुदायो दयानन्दमहर्षेश्चरणशरणमभजत्। जनवर्गो हि सोत्साहं हृदयेन दयानन्दसरस्वतीमहाभागस्य सुस्वागतमकरोत्। प्रतिनगरमार्यसमाजस्य संस्थापनमभवत्, वैदिकनादो निनादितः। सम्पूर्णे भारतराष्ट्रे पाञ्चालप्रदेशो दयानन्दसरस्वतीशिष्य-(भक्त)-गणनायामग्रणीर्जातः। पाञ्चालप्रदेशे दयानन्दसरस्वतीसमागमनस्य सफलतायाश्च विषये सर्वोत्तमं वाक्यमिदं प्रयोक्तुं शक्यते— He came, he saw and conquered. अर्थात् स हि समागतः, सर्वमपश्यत्, अजयच्च, इति।

## आर्यसमाजस्य विस्तारः

**रुड़कीनगरेऽवस्थानम्**——पाञ्चालवासिषु स्वस्थप्राणसञ्चारम्, यवन-क्रिश्चीनजनप्रत्याशापद्मिनीषु च हिम-(तुषार)-पातं विधाय सर्वप्रमुखनगरेषु वैदिकधर्मदुन्दुभिं निनादयन्नृषिराजः १८७८ ईसवीवर्षस्थ-जौलाईमासे रुड़की नगरमाजगाम। नगरं प्राप्त एव महर्षिः धर्मोपदेशे प्रवृत्तः। प्रथमदिवसे स "ईश्वरीयज्ञानमिति" विषयमधिकृत्य प्रवचनमकरोत्। तद् हृदयग्राहिप्रवचनं निशम्य यवना अपि मुक्तकण्ठेन तस्य विद्वत्तां प्राशंसन्। अभियान्त्रिकमहा-विद्यालयस्य छात्राः प्रवक्तारश्चापि महर्षिप्रवचने समागच्छन्; विज्ञानविषयमधि-कृत्य वार्तालापं कुर्वन्तः स्वोपस्थापितप्रश्नानां सन्तोषप्रदसमुत्तराणि प्राप्नुवन्तः सन्तुष्टा अभूवन्। एकदा च ऋषिराजः "प्राचीनार्यावर्ते विज्ञानम्" इति विषये प्रवचनमुद्गिरन् श्रुतीनामार्षग्रन्थानाञ्चानेकप्रमाणानि समुद्धरन् सुसिद्धमिदम-करोत्, यत्सर्वेऽप्याधुनिकविज्ञानिनां कृते गर्वावहा वैज्ञानिकसिद्धान्ता अस्मदार्ष-ग्रन्थेषु विद्यन्ते। एकदा च महर्षिः डारविनमहोदस्य विकासवादमपि युक्तियुक्तं समालोचयत्।

**नियमपालने सुदृढता**— नियतसमये महर्षिर्व्याख्यानं प्रारभत; नोपस्थितिं प्रत्यैक्षत। श्रोतारः स्वल्पा अधिका वा स्युः, स हि स्वसमयनियमं प्रत्यपालयत्। एकदा हि संयोगवशात् प्रवचनारम्भसमये श्रीबलदेवसहाय-उमरावसिंहश्च द्वावेव श्रोतारावुपस्थितावास्ताम्। तौ हि श्रीचरणयोर्विनयमकुरुताम्; भगवन्! दश पञ्चदश वा पलानि (क्षणानि) प्रतीक्षस्व, समापतन्त्येव श्रोतारः; परं महर्षिर्न्यषेधीत्। स हि नियतसमय एव प्रवचनं प्रारभत। तत आरभ्य श्रोतारोऽपि नियमिता अभूवन्; ते हि नियतसमयात्प्रागेवोपातिष्ठन्।

**अद्वैतवादखण्डनम्**— भोटूसिंहनामधेयो वेदान्ती कश्चित् महर्षिमुप-गम्योवाच " न भवान् परां विद्यां जानाति, पराविद्याभिज्ञश्चेद् भवान् न कदापि द्वैतवादं प्राचारयिष्यत्। स हि अनेकान्युपनिषद्वचनानि प्रब्रुवन्नुवाच- "अयं जीवात्मैव ब्रह्म नापरः" इति। महर्षिः पर्यपृच्छत् "भोटूसिंह! भवानपि किं ब्रह्मैव"? स हि "निःसन्देहमहं ब्रह्मैवास्मि" इत्युदतरत्। महर्षिः पुनः पर्यपृच्छत् "क इमां चराचरसृजनां (सृष्टिम्) ससर्ज?" भोटूसिंह उवाच "ब्रह्मणैव सृष्टिरियं सृष्टा।" तदा हि महर्षिः पार्श्वपतितां मृतमक्षिकामेकामादाय तमुवाच "ईश्वरश्चेद् भवान् मक्षिकायामस्यां प्राणसञ्चारं कुरुताम्" येन भवतः ब्रह्मत्वं प्रमाणीभवेत्। मौनो लज्जितश्च भोटूसिंहोऽभवत्।

**अन्तरंगसभायामुपदेशः**— अन्तरंगसभासदस्यानामाग्रहेणैकदा महर्षि-स्तानुपादिशत्; सभायां हठचारो दुराग्रहो वा न कर्तव्यः, स्वपक्षपोषणे यथेच्छं

युक्तीरुपस्थापयन्तु, परं स्वभावो हृदयं (अन्तकरणं) च छलछद्ममयं न स्यात्। प्रसंगं कमपि न तथा परिकर्षयेत् येन भ्रातृभावतन्तुरेव विच्छिन्नतामियात्। बहुमतेन च यन्मतं परिपुष्टं भवेत्, न तस्मिन् पुनर्दुराग्रहो विधेयः। न ह्यन्तरंगसभामन्तव्यानि प्रकाशनीयानि। स हि नरोऽतितरां जघन्यो यो हि गुप्तसम्मतिं सुगुप्तामेव न परिपालयति। नरो हि स- (गुप्तसम्मतिप्रकाशकः) न हि विश्वासपात्रतामर्हति।

**मेरठनगरे धर्मप्रचारः–** रुड़कीनगरतः प्रस्थाय श्रीमहाराजोऽलीगढ़-नगरमनुभ्रमन् मेरठनगरमाजगाम; श्रेष्ठिदामोदरदासस्य भवने च सुशोभितोऽभूत्। तद्दिवसादेव महर्षेः प्रवचनानि प्रारब्धानि। स हि स्वप्रभावपूर्णप्रवचनेषु मतमतान्तरदम्भप्रदर्शनम्, काल्पनिककथाचित्रम्, असत्यकथनप्रसंगेषु च मनोरमविवेचनम्-(टीका-टिप्पणीम्)-अकरोत्। एतेन पौराणिकपण्डितम्मन्य-वर्गेऽतितरां संक्षोभः, परं न हि कोऽपि शास्त्रार्थकृते समागन्तुं साहसं व्यदधात्।

**उत्थापयन्तु मे पादम्–** तरुणावस्थास्थितो महाशयवेणीप्रसादः प्रतिदिनं सत्संगे समागमत्। एकदा हि रात्रौ नववादनसमये षट्सप्तमित्रैः समं श्री-सेवायामुपस्थितो न्यवेदयत्, भगवन्! अद्य वयं भवच्चरणसंवाहनसेवनमिच्छामः; "मदीय दैहिकबलपरीक्षणकामाः खल्वेते" इति महर्षिरजानात्। स हि सस्मितमुवाच "चरणसंवाहनं तु पश्चाद् विधेयम्; पूर्वं सर्वे यूयं संहता भूमौ स्थितं पादमिममुत्थापयन्तु। प्रसृतं स्वामिपादं सप्ताष्टौ युवजनाः सम्पूर्णेनापि दैहिकबलेन नोत्थापयितुमशक्नुवन्। अन्ततः प्रस्वेदस्विन्नास्ते सन्तः प्राहसन्।

**ज्योतिर्विदवागतिष्ठत्–** ज्योतिर्विद् गौरीशंकर एकदा मध्याह्ने समित्रजनः स्वामिनमुपागच्छत्। महर्षिरुवाच "पञ्चविंशतिपलानि (मिनट) यावदहं निद्रामुपलभ्य युष्माभिर्वार्तालापं करिष्ये, तावत् ससुखं भवन्तो बहिर्विराजन्ताम्, स्वल्पान्तरेणैव महर्षिभक्त उपमण्डलाधिकारी एको दर्शनार्थमागतः। गौरीशंकरोऽब्रवीत्– "पञ्चविंशतिपलानि यावत् श्रीमहाराजः शयिष्यते। पञ्चदशपलानि व्यतीतानि, दशपलानि यावन्महर्षिरवश्यं प्रबोधिष्यते, भवानपि तावत्प्रतीक्षताम्"। पूर्णेषु पञ्चविंशतिपलेषु महर्षिरुदबोधत। तस्य निद्रा प्रभग्ना, निद्रावशीकरणेनैतेन तेऽतीवाश्चर्यचकिता बभूवुः। ततः श्रीमहाराजो वार्ताविनोदे गौरीशंकरमपृच्छत्; किमर्थं भवानुपागच्छत्? स न्यवेदयत्– भगवन्! ज्योतिर्विद्याविदहम्, कामपि लालसामादायैव समागतः। उच्चैः प्रहसन्महर्षिरुवाच; अत्रोपस्थानकाले यदि "सम्प्राप्तिः काचिद् भविष्यति" इति प्रज्ञानं भवद्हृदि स्थितं तदा मिथ्यैव भवतो ज्योतिष-शास्त्रम्, नाहं भवते किमपि प्रदातास्मि। यदि भवतो ज्योतिष्शास्त्रमेतदवादीत् "यन्न किमपि

प्राप्तिस्थानम्'' इति तदा निरर्थककर्मपरा एव भवन्तः। अथ चैवं सति कथं न भवन्तो ज्योतिष्विद्यया मिथ्याजालं न वितन्वते? गौरीशंकरः किमपि प्रत्युत्तरप्रदाने न प्राभवत्।

**स्वामिनो योगबलम्**—एकदा कुल्याविभागस्य कर्मचारी महोदयः सेवारामः श्रीमहाराजमुपगम्य न्यवेदयत्, भगवन्! अहं यदि स्वविभागे 'जिलेदार' पदं प्राप्नुयां तदा प्रथममासवेतनं वेदभाष्यकृते समर्पयिष्यामि। स्वल्पेनैव समयान्तरेण तस्य मनोऽभिलाषपूर्तिरजायत। स हि इतो यावत् स्वेष्टमित्रजनानपि नासूचयत्; तावन्नवीनपदप्राप्तये साधुवादसहितं स्वप्रण-स्मारकञ्च महर्षेः शुभाशीषपत्रम् सम्प्राप्नोत्। विषयेऽस्मिन् महर्षेः प्रत्यभिज्ञानं विज्ञाय सेवारामो विस्मितोऽभूत्।

**क्वास्मत्कृते कुशलम्?**— कदाचिदनेके मालातिलकधारिणो ब्राह्मणा मुनिवरसमीपे समुपाविशन्। तदैव भद्रपुरुषः कश्चित्समागत्य सादरमभिवादयन् कुशलं पप्रच्छ। महर्षिरुवाच— क्वास्मत्कुशलम्? भक्तजनः पुनरपृच्छत्; भगवन्! किं कश्चित् मानसः क्लेशः? महर्षिः सुदीर्घं निःश्वस्य प्राह; किमतो यावद् दुःखमयो विषयः; यदेते मत्पार्श्वस्थिताः ब्राह्मणाः स्वकर्तव्यकर्मतः सुदूरे स्थिताः बाह्याडम्बरं पाखण्डजातञ्चैव बहुमन्यन्ते। नैते सद्धर्मप्रचारध्यानपराः। आर्यसन्ततीनां दीनहीनदशां निरीक्षतामेतेषां हृदयानि न दूयन्ते। एतावान् प्रकृतिकोमलः मृदुहृदयश्च श्रीमहाराज आसीत्, यदार्यजातेरार्यधर्मस्य दुःखकथां दुर्दशां च वर्णयतस्तस्य हृदयं करुणाविह्वलं लोचने चोभेऽश्रुकणविमोचनपरे ऽभवताम्।

मेरठनगरं समागते मुनिवरे तत्र बृहद्धर्मान्दोलनमभूत्। लोकमानसे जागृता सत्यजिज्ञासा। अनेके भद्रपुरुषाः सम्प्राप्नुवन् परमोन्नतजीवनलक्ष्यम्। समभूत् संस्थापनं पावनार्यसमाजसंस्थायाः। ततश्च ततः प्रस्थाय मुनिवरः दिल्लीनगरं सम्प्राप्तः। दिल्लीस्थितं जनसमुदायं स्वोपदेशामृतेनाभिषिञ्चन्नार्य-समाजस्थापनां च विधाय स जयपुरमनुगच्छन् अजमेरनगरं सम्प्राप। अत्रापि च वेदप्रवचनामृतवर्षां व्यदधात्। अत्र हि तस्य विविधविषयेषूत्तमोत्तमप्रवचनान्यभूवन्। प्रवचनमेकं क्रिश्चीनमतालोचनपरमपि समभवत्। पादरिणैकेन समं प्रश्नोत्तराणि च जातानि। येन प्रभावितजनवर्गस्य सम्मुखे क्रिश्चीनमतस्य दम्भमयं वस्तुतत्वस्वरूपमाविर्भूतम्।

**सार्धद्वयपृष्ठात्मको धनुर्वेदः**— अजमेरनगरे प्रवचनपरायणो महर्षिरेकदा प्रोवाच— ''एष सार्धद्वयप्रपत्रात्मको धनुर्वेदः, अखिलार्यावर्तराष्ट्रेऽन्वेषण-परेणापि मया सार्धद्वयपृष्ठात्मको ह्येव धनुर्वेदोऽयमधिगतः। यदि मे सुचिरं

प्रचलिता जीवनशृंखला स्यात्तदाहमवश्यमेव वेदेभ्यो धनुर्वेदं प्रकाशयिष्यामि।

**दयालुर्दयानन्दः–** भारतीयनिर्धनवर्गकृतेऽपारकरुणामयं महर्षेर्मानसम्। एकदा हि प्रचलिते प्रवचने स हि वृत्तमलभत यद् भरतपुरीय चर्मकाराणां घासनिर्मितानि कुटीरसंघट्टानि भस्मीभूतानि, भस्ममात्रावशिष्टानि'' इति शृण्वन्नेव दयानिधिर्दयानन्दः करुणापरोऽभूत्। स हि स्वपार्श्वतो धनराशिं प्रयच्छन्नन्यानप्येतदर्थं सम्प्रैरयत्। तत्प्रेरणया च भूयान्धनराशिरेकत्रितः।

**विगतभयो दयानन्दः–** अजमेरतः प्रस्थाय मसूदा-नसीराबाद-निवासिनो वेदामृतोपदेशेनाभिषिञ्चन् महर्षिर्जयपुरनगरमाजगाम। अत्र हि तस्य खण्डनात्मकप्रवचनैः जयपुराधीशोऽप्रसन्नः। तेन भयभीतः ठाकुरो लक्ष्मणसिंहः प्रोवाच– भगवन्! एतस्यां स्थितौ भवतो नात्रावस्थानमुचितम्, कदाचित् राजकोपेन न काचित् कष्टपरम्परा भवत्कृते स्यादिति तर्कयामि। महर्षिरुवाच; ठाकुरमहोदय! अस्मत्कृते सर्वथा निश्चिन्तेन भवता भाव्यम्। नाहं विघ्नविपत्कारणात् स्वलक्ष्यविचलितो भवामि नाऽपि च स्थितिमेतादृशीं भयावहां परिकल्पयामि।

**प्रथमगोशालास्थापनम्–** ततः प्रस्थाय ऋषिवरः रिवाड़ीनगरमभिप्राप्य नगरतः सुदूरमुपवनमेकं सम्प्राप्तः; अत्र हि तस्य एकादश प्रवचनानि प्रवृत्तानि। एतेषु कुरीतीनां प्रबलतमं खण्डनमकरोत्। गायत्री महत्त्वञ्चाधिकृत्यात्युत्तमं प्रवचनमेकं प्रवर्तितम्। महर्षेरुपदेशैः आर्यसमाजस्य संस्थापनमभूत्। रावयुधिष्ठिराय प्रेरणां प्रदाय गोशालाया अपि संस्थापनमभवत्। इतः प्राक् समस्तेऽपि भारते न क्वापि गोशाला संस्थापिता आसीत्।

**हरद्वारकुम्भसम्मेलने–** रिवाड़ीतो दिल्लीमनुभ्रमन्नत्र च त्रीणि प्रवचनानि प्रावृत्य ऋषिराजो हरद्वारस्थितकुम्भसम्मेलने प्रातिष्ठत। मध्यान्तरे मेरठनगरे विश्रम्य मुद्रापितानि विज्ञापनपत्राणि च समानीय रुड़की-सहारनपुर-प्रभृतिनगरेषु परिभ्रमन् १९३५तमसंवत्सरस्य फाल्गुनकृष्णचतुर्दश्यां स ज्वालापुरमगच्छत्। तत्र च मूलामिस्त्रीभवने विराजमानः प्रतिदिनं धर्मप्रवचनेषु प्रवृत्तः।

**यवनोऽप्यामिषाहारमत्यजत्–** ज्वालापुरे राव-ओजखाँ-नामधेयः सम्भ्रान्तो भद्रपुरुष एको महर्षेः प्रवचनेषु प्रत्यहं समागच्छत्; स हि प्रार्थयत् ''भगवन्! किं गोरक्षणं सकलजीवसंरक्षणे श्रेयस्करम्? महर्षिरब्रवीत्, निश्चितमेव गोरक्षणं सर्वोत्तमं कर्म, सर्वाधिकलाभकरञ्च। एतद्धि (गोरक्षणम्) सर्वेषामेव नराणां प्रथमो धर्मः। श्रीओजखाँ पुनरपृच्छत् ''आर्यजनेषु नित्यस्नाननियमस्य क ७धारः? ''महर्षिरुवाच'' आयुर्वेदविद्यानुरूपं नित्यस्नानमारोग्यबलबुद्धि-

वर्धकम्, पुष्टिकरम्, ओजस्तेजःसम्भरणम्, इन्द्रियस्वच्छतामानसशुचितासञ्चारकम्, समस्तदेहांगेषु स्फूर्तिप्रदं च भवति। रावमहाशयेन महर्षेः कथनमङ्गीकृतम्, सदुपदेशप्रभावाच्चामिषाहारोऽपि परित्यक्तः।

**हरिद्वारकुम्भसम्मेलने महर्षेर्महामहिमप्रभावः–** १९३५तमसंवत्सरस्य फाल्गुनशुक्लषष्ठीतिथौ तदनु १८७९तमवर्षस्थफरवरीमासस्य सप्तविंशति-तारिकायां महर्षिः हरद्वारनगरमाजगाम, सर्वसाधारणजनो विज्ञापनैः संसूचितः— "महर्षिर्दयानन्दः सरस्वती हरद्वारे मूलामिस्त्रीक्षेत्रेषु विराजते, पुण्यश्लोकस्य महर्षेः पुण्यदर्शनार्थिनः सद्धर्मोपदेशार्थिनश्च तत्रोपतिष्ठेयुः" इति। प्रसृते ह्येव विज्ञापने सकलसम्मेलने महर्षेः महामहिमपुण्यप्रभावः प्रसृतः। सहस्रशो नरनारीगणस्तस्य प्रवचनेषु समागच्छत्। यदा हि ऋषिराजेन प्रचलितकुरीतयः प्रत्यालोचिताः, कुप्रथासु च कठोरकुठाराघातो विहितः, वेषमात्रोपजीविनः संन्यासिनामधारिणश्च समालोचितास्तदा सर्वोऽपि साधुम्मन्यजनसागरः संक्षुब्धः। महन्तजनानां स्थिरासनानि प्रकम्पितानि। समण्डलामण्डलेश्वराश्च भयभीताः। तदानीं हि सर्वत्र गमने भ्रमणे प्रेक्षणे च दयानन्दस्वामिनो ह्येव यशोवर्णनमश्रूयत। कतिपयपौराणिकपण्डितम्मन्या विरोधमाचरितुं बद्धपरिकरा अपि सर्वसामर्थ्येन किमपि कर्तुमशक्नुवन्तो नैराश्यं गताः।

**परमहंस आनन्दवनः परास्तः–** अनावृतद्वारशिविरे कार्यप्रवृत्ते च मुनिवरे एकदा-आनन्दवननामधेयः परमहंसः कश्चिद् हस्तयोर्दण्डकमण्डलुधरः, परमोज्ज्वलप्रलम्बगैरिकवसनसुशोभिततनुः, दशसंख्यामितशिष्यजनैर्वृतः महर्षिशिविरे प्रविवेश। शिविरान्तःपदार्पणं कुर्वन्तमेव परमहंसम्-आनन्दवनं वीक्ष्य महर्षिः सत्वरमासनादुत्थाय शिविरद्वार एव तस्मै स्वागतं व्याजहार। समुचितासने च तमुपावेशयत्। तदैवोभयोः शास्त्रार्थः प्रवृत्तः। दिवसस्यैकादशवादनसमये सेवकवरः भोजनप्रस्तुतिं न्यवेदयत्। मुनिवरेण भोजनग्रहणार्थं प्रार्थितः स्पृहणीयोऽतिथिरुवाच, "प्रचलितप्रश्नस्यानिर्णयान्तं नाहं भोजनं गृहीष्यामीति। द्वैताद्वैतविषये च शास्त्रार्थः प्रचलित आसीत्। गृहीतचतुर्वेदसंहिता पञ्चाशत्षष्ठिसंख्यामितग्रन्थसमूहो महर्षिप्रवरः प्रबलप्रमाणास्त्रपातैः परमहंसानन्दवनस्य सघनसंशयवनं समूलमच्छिनत्! प्रचलितवाग्युद्धे दिवसस्य द्विवादनवेलायां समागतायां परमहंस-(महात्म)-युगलमुदतिष्ठत्। ततश्च स्वल्पवार्तालापानन्तरं परमहंस आनन्दवनः स्वशिष्यान् सम्बोधयन्नुवाच "मया हि दयानन्दमहर्षेर्द्वैत-सिद्धान्तः स्वीकृतः, अद्य 'परमहंसदयानन्दयुक्तिप्रवातैर्मेऽहंब्रह्मवादगर्वघोरघन--घटाटोपो विविच्छन्नः सन्नुदपतत्; युष्माभिरपि तथैवानुष्ठेयम्' ततः प्रभृति परमहंस-(महात्मा)-आनन्दवनः प्रायः प्रतिदिनं श्रद्धान्वितो महर्षेः प्रवचनेषु समुपातिष्ठत्। संलग्नमनसा च प्रवचनान्यशृणोत्। अयं ह्यशीतिवर्षदेशीयो

धुरन्धरः संस्कृतमनीषी (विद्वान्) अवर्तत।

**स्वागतं वः काष्ठपूजकबान्धवाः–** बहुसंख्यायां निर्मलसाधवो महर्षिप्रवचनेषु समुपागमन्। बहवस्तु तेषु महर्षिणा सममतीवस्नेहेन सम्बद्धाः। निर्मलसाधवो हि स्वसाधानावासस्थितं काष्ठध्वजं प्रणमन्ति। यदा ह्येकदा निर्मलसाधुदलं प्रवचने समागच्छत्तदा स्मयमानो महर्षिप्रवरोऽवदत् "स्वागतं वः काष्ठपूजकबान्धवाः"। श्रुत्वैव सर्वेऽपि निर्मलसाधव उच्चैरट्टहासमकुर्वन्। ततश्च महर्षिः सर्वांस्तानुपादिशत्– "दिवानिशं भवन्त आत्मवादस्य गीतं गायन्ति; उपनिषद्वचनान्यधीयते; वेदान्तसूत्रविवेचने प्रवीणतां प्रदर्शयन्ति; कर्मकाण्ड-विषयेषु न्यूनाधिक्यं कुर्वन्ति; तथाप्येतावन्तो भ्रमग्रस्ताः, यज्जडवस्तून्यभि-वन्दन्ति। महर्षेः प्रकथनस्य तेषु महान् प्रभावो जातः।

**कियत्यतोऽधिकवेदना ?–** साम्प्रदायिकाडम्बरं दम्भजालञ्च विचिन्तयन्-महर्षिर्देशाधःपतनविषयेऽतीवखिन्नतामभजत्। सोऽन्वभूत् "विविधमतानुयायि-भिर्धर्मस्य सन्मार्गो विलोपितः। एते हि स्वमहिमानं कामयमानाः पृथगेव स्वस्वरागमालपन्ति। न हि जनवर्ग एकमतेऽवतिष्ठते।" श्रीमहाराजो भारतस्य सामाजिकविषमतायामपि मर्मवेदनामन्वभूत्। एकदा हि यदा स उपविशन्नेव क्षणं विश्रम्य पुनरुत्थायाभ्रमत्तदा विनीतः कश्चिद् भक्तवरोऽपृच्छत्; "भगवन्! काञ्चिद्वेदनां भवाननुभवति?" दीर्घं निःश्वस्य महर्षिरुवाच; "कुत इतोऽधिका हृदयविदारकदारुणवेदना यद्विधवानां करुणनिःश्वासैः, अनाथानामार्तनादैः, गोवधसदृशजघन्यपापैश्च राष्ट्रं सर्वनाशगर्तगमनोन्मुखं वर्तते।" कविवरस्य कस्यचित् शब्देषु महर्षेर्मर्मवेदनैवं वक्तुं शक्यते—

**काँटा लगे किसी को तड़पते हैं हम ऐ 'मीर ।'**

**सारे जहाँ का दर्द हमारे जिगर में है ।।**

रुड़कीनगरस्योपमण्डलाधिकारी श्रीनजफअली महर्षेरुपदेशैर्विमुग्धः। स हि सिद्धपुरुषं तममन्यत। तेन हि स्वमनसि निश्चितं यद् यादृगध्यात्मज्ञानं संस्कृत-धर्मग्रन्थेषूपलभ्यते न तादृशमन्यधर्मपुस्तकेषु लब्धुं शक्यम्।

**हिन्दीभाषां राष्ट्रभाषागौरवेण सम्मानयिता प्रथमो महानुभावः–** आर्यभाषायाः सर्वप्रथमप्रचारप्रसारे महर्षिदयानन्दस्य सर्वप्रथमः स्पृहणीयः प्रयासः। गुर्जर-(गुजरात)-प्रदेशे लब्धजन्माऽपि विभिन्नप्रदेशेष्वार्यसमाजस्य स्थापनानन्तरं स आर्यभाषामेव स्वभाषाममन्यत; इति तस्यानुपमं कर्म। गुजराती-भाषायाः परिपूर्णपण्डितोऽपि महर्षिः दयानन्दः स्वमुम्बईप्रवासे यावतोऽपि ग्रन्थान् व्यरचयत; सर्वेषामेव तेषां ग्रन्थानां रचना-आर्यभाषायामेव विहिता। स्वलिखितग्रन्थेषु-एकमपि गुर्जरभाषायां नालिखत्। अथच स हि स्वीयगुजरातप्रान्तेऽपि स्वमातृभाषां

विहाय आर्यभाषायामेव जनवर्गं धर्ममुपादिशत्। तस्य सर्वपुस्तकानां प्रकाशनमपि आर्यभाषायामेवाभवत्। सर्वस्यैतस्यैतिहासिकदृशादर्शनेन मुक्तकण्ठतः प्रवक्तुं शक्यते, यदार्यभाषां जीवितां बद्धमूलाञ्च कर्तुं महर्षेर्दयानन्दस्य प्रथमः प्रयासः। निम्नांकितप्रश्नोत्तरेण तस्यार्यभाषां प्रत्यसीमस्नेहभावोऽभिव्यज्यते—

"हरद्वारे कदाचिदासनस्थ ऋषिवरः सत्संगिनः समुपादिशत्, मध्यान्तरे भद्रपुरुषः कश्चिन्न्यवेदयत्; "भगवन्! यदि भवान् फारसी-अक्षरेषु (वर्णमालायाम्) स्वग्रन्थानुवादं प्रकाशयेत्तदा पाञ्चालादिप्रान्तेषु नागरी-(देवनागरी)-वर्णमालाऽनभिज्ञजना अपि सुविधापूर्वकमार्यधर्मं विजानीयुः।" महर्षिरुवाच– अनुवादो हि विदेशिनां कृते सम्भवति। देवनागरीवर्णमाला स्वल्पैरेव दिवसैरधिगन्तुं(शिक्षितुम्) शक्यते। किमार्यभाषाप्रशिक्षणं दुष्करं कर्म? अरबी-फारसी-शब्दान् विहाय आर्यभाषैव ब्रह्मावर्तस्य सभ्यभाषा। अतिकोमला, सरला, सुगमा च भाषैषा। भारतराष्ट्रे समुत्पन्नो यो हि स्वराष्ट्रभाषाप्रशिक्षणे न कमपि परिश्रमं विधत्ते किं तेन कर्तुमाशासितं स्यात्? किं स कर्तुं प्रभविष्यति? तस्य स्वधर्मे रुचिरपि सन्दिग्धैव। भवन्तोऽनुवादं परामर्शन्ति "दयानन्दस्य लोचने ह्येतद् द्रष्टुं समुत्सुके; यावदटकतः कटकपर्यन्तं काश्मीरतश्च कन्याकुमारीपर्यन्तं नागरी-अक्षराणां (वर्णमालायाः) प्रचारप्रसारो भविष्यति। मया हि सम्पूर्णेऽपि आर्यावर्ते भाषैक्यसम्पादनकृत एव स्वीयसकलग्रन्था आर्यभाषायामेव विरचिताः प्रकाशिताश्च।"

**देहरादूननगरे धर्मोपदेशः**– हरद्वारनगरे धर्मप्रचारं विधाय महर्षिः किञ्चित्कालं विश्रामलाभाय देहरादूननगरं सम्प्राप्तः। तत्र गमनानन्तरमेव सर्वतस्तस्य शुभागमनवृत्तं प्रसारितम्। सत्संगार्थिनां श्रेणयश्च समागन्तुं प्रवृत्ताः। अस्वस्थोऽपि ऋषिवरः समागन्तुकैः सस्नेहं वार्तालापमकरोत्। कतिचिद् दिनानि विश्रान्तः स पुनः धर्मोपदेशे प्रवृत्तः। महर्षेः प्रवचनानि शृण्वन्तोऽनेके भद्रपुरुषास्तस्यानुगामिनोऽभूवन्। आर्यसमाजसंस्थापनस्य च प्रयासः प्रचलितः।

**राजनीतिविषये मार्मिकप्रकथनप्रवचनम्**– देहरादूनतः प्रस्थाय महर्षिः सहारनपुर-मेरठ-नगरेऽनुभ्रमन् मुरादाबादनगरमागत्य श्रीजयकृष्णस्य भव्यभवने सुशोभितोऽभूत्। इतो यावदपि स न पूर्णस्वस्थः, अतस्तस्य त्रीण्येव प्रवचनानि प्रवृत्तानि। महर्षिप्रवरो यथा अद्वितीयदार्शनिकः, परमयोगी, अनुपमधर्ममर्मज्ञः, तत्कालीनो महान् सुधारकः, सम्पूर्णेऽपि देशेऽद्वितीयप्रवक्ता आसीत्तथैव स राजनीतिनिष्णातः, राजधर्मधुरन्धरश्चाप्यवर्तत। श्रीमहाराजस्य कालः राजतन्त्र-शासनस्य दमननीतेश्च यौवनकाल आसीत्। निर्भयाः (विगतभयाः) केचन-परिव्राजो यद्यपि समयानुरूपां तीव्रालोचनां सामयिकसमीक्षाञ्चाप्यकुर्वन्, परं तेषां

प्रकथनानि दार्शनिकानि , निश्छलानि, मानवस्वभावव्यापीनि चाभूवन्न किमपि क्रान्तिकराणि, अतो राजकर्मचारिणोऽपि तेषां प्रकथनेषु गम्भीरतायाः स्थाने प्रसन्नतामेवान्वभूवन्।

एकदा मुरादाबादमण्डलोपायुक्तः श्रीस्पैण्डिगमहोदयो महर्षिमुपगम्य राष्ट्रनीतिविषये प्रवचनमेकं कर्तुं न्यवेदयत्, प्रबन्धभारं च सर्वं स्वयमवहत्। महर्षेः स्वीकृतौ मण्डलोपायुक्तमहानुभावः शिविरप्रदेशे सर्वप्रबन्धव्यवस्थां व्यदधात्। जनप्रवेशाय च प्रवेशपत्राणि वितरितानि। सर्वैरेव भद्रनागरिकैरार्यजनैश्च प्रवेश-पत्राण्यधिगतानि। नियतसमये महर्षिप्रवरः भारतीयान् योरोपीयांश्च श्रोतृजनान् सम्बोधयन् राष्ट्रनीतेरुदात्तादर्शान् सिद्धान्ताँश्च न्यरूपयत्। शासकशासित-सम्बन्धान्, शासननीतिसुलभपक्षपातजनितदोषांश्च प्राकाशयत्। प्रवचनमिदं कतिपय होरापर्यन्तं प्रावर्तत; देशीयविदेशीयमहानुभावाश्च सावधानेन मनसाऽशृण्वन्। प्रवचनान्ते च श्रीस्पैण्डिगमहोदयः समुत्थाय सधन्यवादं महर्षिं प्राशंसदब्रवीच्च, पूर्णतः सत्याश्रितमेव महर्षिणोपवर्णितम्। नीतिमिमामनुसृत्य शासकशासितयोः सम्बन्धाश्चेत् समभविष्यन्; न कापि परस्परसंघर्षजनिता कष्टपरम्परा समापतिष्यत्।

**स्वभाषायामेव वार्तालापः सर्वोत्तमः–** कालीप्रसन्ननामधेयं पार्श्व-स्थितमेवाधिवक्तारम् (**Advocate**) कञ्चिदांगलभाषायां वार्तालापपरायणं वीक्ष्य स्वामिमहाभागोऽवदत् ''महाशय! स्वभाषायामेव वार्तालापः सर्वोत्तमः।'' स्वदेशीयमित्रेषु स्थितेन विदेशीयभाषायां सम्भाषणं न समुचितं प्रतीयते-अपितु-अशोभनमेतद् गर्वभावञ्च जनयति। अथ चेद् गोपनीयं किञ्चित्तदपि न वरमेतत्, अत्र ह्यनेके आंगलभाषाभिज्ञा वर्तन्ते, कस्माच्चित् सुगुप्तं कर्णे जपत्वञ्च धर्मविरुद्धं चौर्यकर्मेव गर्हितं भवति।

**सर्वत्र समुचितं सर्वश्रेयष्करञ्च 'नमस्ते' इत्यभिवादनम्–** श्री-इन्द्रमणिः स्वामिनं न्यवेदयत्; ''भगवन्! भवान् हि सर्वत्रैव परस्परं ''नमस्ते'' इत्यभिवादनमादिशति; अस्माभिश्च प्रथमं ''जयगोपाल'' इति ततश्च ''परमात्मा जयते'' इत्यभिवादनं प्रवर्तितम्। पूर्वशब्देष्वेव जनसमूहः बहुकटाक्षान्नकरोत्, साम्प्रतं पुनर्यदि ''नमस्ते'' इति नवाभिवादनं प्रवर्तयिष्यामस्तदा जनसमुदायोऽतीवपरिहासपरो भविष्यति। अथ चैवमपि परस्परं सम्मिलने ''परमात्मा जयते'' इति कथनमतीवसमुचितं प्रतिभाति न तथा ''नमस्ते'' इत्यभिवादनम्। अपि च कनीयान् हि ज्यायांसं ''नमस्ते'' इति ब्रुवाणस्तु सुशोभते; परं पिता स्वपुत्रम्, स्वामी च भृत्यम्, नृपो हि स्वसेवकं ''नमस्ते'' इति प्रब्रुवन्न सुशोभते। महर्षिरुवाच— इन्द्रमणिमहोदय!

नाभिमानपरो महीयान् भवति, स एव वस्तुतो महान् यो हि स्वाहंभावं विजयते। ये हि वस्तुतो महीयांसो न ते स्वयं स्वमहामहिमभावं प्रकाशयन्ति। अस्मत्पूर्वजा येऽपि ऋषयो महर्षयो राजानो महाराजाश्चाभूवन्न हि कोऽपि स्वमुखेन स्वमहत्त्वं प्राकाशयत्। "नमस्ते" इति शब्दस्य नहि चरणस्पर्शनमर्थः; सम्मानसत्कारप्रदर्शनमेवास्यार्थः। सर्वेऽपि उत्तमाधमाः कनीयोज्यायांसः परस्परसम्मिलने सम्मानसत्कारभाजो भवन्ति। सर्वत्र चैवं भवति, भवानेव स्वान्तःकरणे स्थितो ब्रवीतु; यदा हि कश्चिद् भवदावासे भवन्तमुपयाति किं भवान् स्वहृदयेऽनुभवति? श्री-इन्द्रमणिर्मौनमेवास्त। महर्षिः पुनरुवाच, महाशय! सर्व एतदवगच्छन्ति, यद् यदा कश्चित् पूज्यगुरुजनः प्रतिष्ठितभद्रपुरुषो वा गृहमागच्छति तदा तस्मै-अभ्युत्थानं विनतसम्मानं वा प्रदातुं मनोऽभिलषति। पुत्राय वात्सल्यभावमुद्वेलयितुं समीहा समुत्पद्यते, भृत्यसेवकजनांश्चोपस्थितान् अन्नजलप्रदानप्रश्नैः "आयन्तु, उपविशन्तु" इत्यादिशब्दैश्च सत्कर्तुं मनः समीहते। उपर्युक्तसर्वभावप्रकाशनं "नमस्ते" इति पदेन सम्भवति। तदा हि परमेश्वरस्य नामोच्चारणमसंगतमात्मगतभावविरुद्धञ्च वर्तते। अन्तःस्थित-भावप्रकाशनमेव श्रेयः। पुरातनकालेऽपि आर्यजना "नमस्ते" इति पदमेव प्रायुञ्जन्। साम्प्रतमपि आर्यजनेष्वस्यैव शब्दस्य प्रचारो भवितव्यः।

कायमगञ्जनिवासी श्रीरामलालो महर्षेः करकमलाभ्यां यज्ञोपवीत-धारणेच्छया वर्षर्तोः कष्टपरम्परां सहमानो मुरादाबादनगरे श्री-इन्द्रमणि-मुपागच्छत्। एकदा श्री-इन्द्रमणिस्तेन समं महर्षिसेवायामुपस्थितोऽब्रवीत् "भगवन्! अतीवश्रद्धाशीलोऽयं भक्तजनः (श्रीरामलालः) भवतो धर्मप्रशिक्षणं कामयमानः वर्षर्तोः कष्टपरम्परामपरिगणयन्नत्र भवच्चरणशरणं सम्प्राप्तः। श्रुत्वैतत् श्रीमहाराजो रामलालस्य धर्मभावम्, दृढधारणाञ्च समीक्ष्य शुभसमये तस्मै विधिपूर्वकं यज्ञोपवीतं प्रयच्छन् गायत्रीमहामन्त्रोपदेशेन शुभशिक्षणं प्रादात्। तेन हि शुद्धसमुच्चारणेन श्राविते गायत्री महामन्त्रे महर्षिरतिवात्सल्यभावेन तस्मै शुभाशीर्वचनं व्यतरत्। स्वपुनीतहस्तेन च सस्नेहं तस्य पृष्ठभागं संस्पृशन्नुवाच, वत्स! नाहं शरीररूपेणातिचिरंजीवी; त्वया ह्याजीवनमस्मद्ग्रन्थेभ्य उपदेशो ग्राह्यः। यथासम्भवं धर्मपथभ्रान्तस्वबन्धुवर्गायापि सद्धर्मपथः प्रदर्शयितव्यः।

श्रीरामलालो गुरुदेवस्योपदेशामृतं सश्रद्धं शिरसि संधारयन्नन्तः-करणमध्यवासयत्। दिनदशकं गुरुचरणशरणे स्थितः सम्प्राप्तसत्संगलाभः स एकदा बद्धाञ्जलिर्न्यवेदयत्– "भगवन्! भवत आरोग्यं कश्चिदाघातमनुभवतीति प्रतीयते। महर्षिरुवाच; वत्स! देहेऽस्मिन् अनेकवारमतिघातकं विषमविषं प्रवेशितम्। एवंविधानि कालकूटविषाणि योगक्रियाभिर्वमनवस्तिकर्मादिभिश्च बहिष्कृतान्यपि रक्तविमिश्रितं हलाहलविषं नहि सर्वांशतो देहान्निसरति; तस्य

दुष्प्रभावश्चांशतः स्थीयते ह्येव। एतदेव कारणं यन्ममारोग्यस्याधारशिला संचलिता। यद्येतादृशभीषणविषप्रयोगाणि मत् शरीरे न प्रायोक्ष्यन्त तदा देहेऽस्मिन्नाशतायुष्यं शैथिल्यचिह्नं नाद्रक्ष्यत्। नापि च जरावस्था देहमिममाक्रान्तुं प्राभविष्यत्।

**कथं न भवान् शिष्यपरम्परां निर्वहति ?**— रामलालः प्रार्थयत्, गुरुदेव! साम्प्रतं भवान् स्वभक्तजनान् नैराश्यनिशायां भ्रामयितुं प्रवृत्तः; कथं न भवान् स्वशिष्यपरम्परां संस्थापयति ये च सुयोग्यशिष्यजना भवद्धर्मनावो निपुणनाविका भवितुं शक्नुयुः, सर्वस्वसमर्पणेन च भवदुद्देश्यं पूरयितुं बद्धपरिकरा भवेयुः। श्रीमहाराजो गम्भीरभावेन प्रोवाच, वत्स! मया हि पूर्वं पाठशालाः संस्थाप्यानेके पण्डितशिष्या विनिर्मिताः (प्रशिक्षिताः) ते हि सन्मुखेऽतितरामनुनयं विनयञ्च प्रादर्शयन्, परं पृष्ठतस्तथैव पौराणिकाः संवृत्ता अतिष्ठन्। कतिपये तु मद्विरोधेऽपि स्वप्रपञ्चजालं व्यरचयन्। साम्प्रतमहं विनिश्चये स्थितो यन्नास्मिन् जन्मनि सुयोग्यशिष्यमलभिष्ये। प्रबलकारणमप्यस्यैकम् "अहं हि प्रबलवैराग्यवशात् स्वयौवनकाल एव पूज्यपितरौ परिवारजनं च परित्यज्य मृत्युचक्रं विजेतुं योगाभ्यासपरायणोऽभवम्, गृहं परित्यजता मया मातुर्ममता नाभिनन्दिता नापि पितृऋणं परिपूरितम्। एतानि प्रतिबन्धककर्माणि मम सुयोग्यशिष्यसम्प्राप्तिं प्रतिबध्नन्ति। पुनरपि नास्ति नैराश्यावकाशः; आर्यसमाज-(वैदिकधर्म-)-स्य क्षेत्रेऽवश्यमेवैतादृशा समर्पितजनाः प्रादुर्भविष्यन्ति; ये च मे परमलक्ष्यं पूर्णतः प्रतिपालयिष्यन्ति।

**पादरीस्काटमहोदयेन समं संवादः**— मुरादाबादतः प्रस्थाय महर्षिः बदायूँ नगरमनुगच्छन् १९३६तमसंवत्सरस्य भाद्रपदकृष्णद्वादश्यां तदनु १८७८ वर्षस्थ-अगस्तमासस्य चतुर्दशदिनांके बरेलीनगरे श्रेष्ठिलक्ष्मीनारायणस्य भवने सुशोभितोऽभवत्। चाँदपुरसम्मेलने तस्य पादरीस्काटमहाभागेन समं संवादः प्रावर्तत। ततः प्रभृत्येव स्काटमहोदयः स्वामिनः श्रद्धाशीलः भक्तप्रवरो बभूव। बरेलीनगरेऽपि स स्वामिमहाभागेन समं "पुनर्जन्मविषये, अवतारवादे, ईश्वरः पापानि क्षमते" इति त्रिषु विषयेषु त्रिदिवसं प्रशान्तं शास्त्रार्थं प्रावर्तत। अनेन जनजीवने चातितरां सुप्रभावोऽभ्यवर्धत।

**बालबालानां दोषः**— स्वप्रणपालने महर्षिरतीवदत्तावधान आसीत्; एकस्मिन् शनिवासरे श्रोतारो न्यवेदयन्, "भगवन्! श्वो ह्यवकाशदिवसः, अतः नियतसमयत एकहोराप्रागेव प्रवचनं प्रवर्तेत चेन्महाननुग्रहः। महर्षिरुवाच, नगरात् सार्धैकक्रोशदूरेऽहं निवसामि, नियतसमये यानं प्रस्तुतं चेद् यथासमयं सम्प्राप्तुं शक्नोमि, श्रेष्ठीलक्ष्मीनारायणो यानव्यवस्थां प्रत्यशृणोत्। आगामिनि

दिवसे सर्वेऽपि श्रोतारो नियतसमये प्रस्तुताः, परं स्वामिप्रवरो हि पादोनहोरामितं समयं विलम्बतः सार्वजनिकभवने सम्प्राप्तः। प्रवचनारम्भ एव स उवाच, प्रस्तुतोऽहमासं नियतसमयोपस्थितये, परं न यानं सम्प्राप्तम्, अन्ततः पदातिनैवागच्छता मध्यान्तरे यानमधिगतम्, अतः समयातिक्रमणे न मे दोषः, अपितु बालबालानामेवैष दोषः, अर्थात् बालविवाहजनितसन्ततीनामेतादृशी निर्बलता नाश्चर्यकरा।

**सत्यमेव प्रवक्ष्यामि (निर्भयो दयानन्दः)**– एकदा पुराणकथाः समालोचयन् महर्षिरुवाच– एतैर्हि ग्रन्थकर्तृभिः कुन्तीप्रभृतिकन्यकाः कथं कपोलकल्पितकलंकैः कलङ्किताः। तारा-मन्दोदरी च कथं मिथ्यारोपैरारोपिते इति खेदमयो विषयः। महर्षिः प्रकथनेष्वेतावद् हास्यरसपुटं प्रापूरयद् यदतिप्रलम्बितमपि प्रवचनं नहि लोकोद्विग्नकरमभवत्। नाऽपि कश्चित् श्रोतृजनो विरक्तिं प्रादर्शयत्। कदाचित् सर्वोऽपि सभासागरो हास्यरसतरङ्गैस्तरंगायितोऽभवत्। पुराणालोचनं शृण्वन्तः पादरी, समाहर्ता, आयुक्तादियोरोपीयजना उन्मुक्तहास्यमुकर्वन्। तेषां कुटिलतापूर्णं हास्यमभिलक्ष्य महर्षिरुवाच एतावत् पुराणालोचनं संवृत्तम्, साम्प्रतं क्रिश्चीनानां लीलाजालं संशृणुत। एते हि कुमारीगर्भतो ह्येव पुत्रप्रसवमभिवर्णयन्ति, सर्वज्ञे शुद्धस्वरूपे सर्वशक्तिमति सर्वेश्वरे च दोषमारोपयन्ति; एतादृशे जघन्यपापकर्मणि नहि लेशतोऽपि लज्जन्ते। श्रुत्वैतत् क्रोधावेशेनायुक्तमहोदयस्य मुखमण्डलमारक्तमभूत्, परं निर्भयो दयानन्दस्तथैव वाग्धाराप्रवाहेण प्रवचनं कुर्वन् प्रवचनान्तं यावत् क्रिश्चीनमतमेव प्रत्यालोचयत्।

आयुक्तमहोदयो ह्यागामिनि दिवसे श्रेष्ठिनं लक्ष्मीनारायणं समाहूय अकथयत्– "सन्दिश पण्डितमहाभागं दयानन्दं; नातिकठोरशब्दाः मतमतान्तरखण्डने प्रयोज्याः; सभ्याः सहिष्णवश्च वयं क्रिश्चीनजनाः, परं यद्यशिक्षितहिन्दूयवनजनेषु च समुत्तेजनेयं प्रावर्तयत्तदा शान्तिभंगभयेन पण्डितदयानन्दस्य सर्वमपि प्रचारकार्यमवरुद्धं स्यास्यति" श्रेष्ठीलक्ष्मीनारायणः सन्देशमिमं स्वामिने प्रदातुं प्रतिश्रुत्य परावर्तितः; परन्तु कः खलु सन्देशमिमं स्वामिने प्रदेयादित्यसमञ्जसम्। सोऽनेकमित्रजनान् सम्प्रार्थयत्; अन्ततो नास्तिक एकः सन्देशप्रदानार्थं सन्नद्धोऽभूत्। श्रेष्ठी महोदयः कतिपयमित्रजनैर्वृतः तेन समं स्वामिसेवायामुपस्थितः। नास्तिको हि महर्षेस्तेजोमयीं भव्यमूर्तिं निरीक्ष्यमाणोऽतितरां प्रभावितश्चातिकृच्छ्रेण कतिपयशब्दानेव वक्तुं शशाक "भगवन्! आयुक्त-महोदयेन सन्दिष्टः कोषाध्यक्षमहोदयः किञ्चिन्निवेदयितुमभिलषति। क्लान्तो लक्ष्मीनारायणोऽचिन्तयद्; दुर्भाग्यवशात्तस्यैव गण्डस्योपरिस्फोटोऽयं संवृत्तोऽतः स्वयमेवोपचारो विधेयः। स ह्यतीवक्षुभितः शिरःकण्डूयमानः कासश्लेष्मणश्च

गलमार्गं स्वच्छीकुर्वन्नतिकृच्छ्रेणोवाच, "भगवन्! कट्वालोचनया विरम्येत् चेत् काऽसुविधा? प्रभावोऽप्यधिकतरः स्यात्, आंगलशासका अप्यप्रसन्ना न स्युः, शासकजनाप्रसन्नता न श्रेयस्करी"। महर्षिर्विहस्योवाच; अरे! किमेतावद् वृत्तम्, येनैवं दीनायसे? एतावान् समयश्चातिवाहितः; आयुक्तमहोदयेन प्रोक्तमभविष्यत्; सत्यं तव पण्डितो ब्रवीति, प्रवचनकार्यमवरुद्धं भविष्यति; यथालथा भवितुं शक्यम्; इत्यादि। भद्र! नाहं रक्षोयोर्नि प्राप्तः कश्चिद्विभीषिकामयो यो ह्यत्स्यति त्वाम्, तेन हि यत् सन्दिष्टं, त्वया हि तथैवाहं वक्तव्यः, व्यर्थमेवातिवाहितः समयः। विश्वासी पौराणिकहिन्दूजनस्तत्र स्थितोऽवदत्, "दृष्टं भवता, कस्याश्चित् शक्तेरवतारोऽयं कश्चिद् यो हि हृदयस्थितमपि भावं वेत्ति।

आगामिनि दिने– "आत्मस्वरूपम्" इति विषये प्रवचनमासीत्; महर्षिप्रवरः श्रोतृभिः परिपूर्णे नागरिकभवने समायातः। पादरीस्काटमहोदयं विहाय गतदिवसस्थिताः सर्वेऽपि योरोपीयमहानुभावास्तत्र समुपस्थिता आसन्। प्रारम्भे श्रीमहाराज आत्मनो गुणान् वर्णयन् सत्यस्वरूपं विशेषेण व्याख्यात्। पश्चादावेशपूर्णा वाग्धारा प्रस्फुटिता– "प्रवदन्ति जनाः, न सत्यं ब्रुवन्तु, समाहर्तामहोदयः क्रुद्धो भविष्यति, आयुक्तमहाभागोऽप्रसादं गमिष्यति; राज्यपालश्च कष्टपरम्परायां पातयिष्यति। महानुभावाः! गच्छत्वप्रसादं राजाधिराजोऽपि (राजराजेश्वरोऽपि) पूर्णतः सत्यमेव वयं वक्ष्यामः"। ततश्च "नात्मानं कानिचित् शस्त्राणि छिन्दन्ति नाऽपि पावको दग्धुमेनं प्रभवति" इत्यादि उपनिषद्वाक्यानि समुद्धरन् सिंहगर्जनं कुर्वन्नुवाच; अनित्यमिदं शरीरम्, एतद्रक्षणप्रवृत्तेनाधर्माचरणं व्यर्थम्, (नाचरणीयम्) यतो हि शरीरमिदं कश्चिदपि विनाशयितुं शक्तः; पुनरभितो ज्वलितनेत्रज्योतिः प्रक्षिपन् सिंहनादेनावदत्; अस्ति कश्चित् शूरवीरः पुरुषसिंहो यो ह्यात्मानं मे विनाशयितुं शक्तः? यावन्नैतादृशः शूरवीरः संसारेऽस्मिन् दृश्यते तावन्नाहं चिन्तनक्लेशमपि कर्तुं प्रस्तुतो यन्मया सत्यापलापो विधेयो न वेति। महर्षेः सिंहनादेन सर्वमपि भवनं निनादितम्। सर्वत्र तस्य शब्दानां प्रतिध्वनिरेवागुञ्जत्। स्तब्धा सर्वाऽपि सभा। प्रवचनसमाप्तावपि तस्यायं सिंहनादः श्रोतृणां कर्णकुहरेष्वगुञ्जत। (गुञ्जायमानोऽतिष्ठत्)।

**मुंशीराम-(स्वामिश्रद्धानन्द)-स्य जीवनपरिवर्तनम्।** बरेलीनगरे धर्मोपदेशामृतवर्षां वर्षयति मुनिवरे मुंशीरामस्य जनकः (श्रीनानकचन्द-महोदयः) नगरपालरूपेण व्यराजत। पित्रा सममेव वर्तमानो मुंशीरामस्तत्रत्य-राजकीयमहाविद्यालयेऽध्ययनपरायण आसीत्। ईश्वरधर्मवेदादिविषयेषु स न कामपि श्रद्धामरक्षत्; आस्थां वामन्यत। महर्षेः प्रवचनव्यवस्थां मुंशीरामस्य पितैव व्यवस्थापयत्। तस्य प्रथमप्रवचनश्रवणानन्तरं स हि गृहमागत्य स्वपुत्रमुवाच, "मुंशीराम! अत्र हि दण्डीस्वामी एकोऽतिविशिष्टविद्वान् योगी च समायातः।

तस्योपदेशश्रवणेन ते सर्वेऽपि संशयाः निवर्त्स्यन्ते। पुत्रो विनीतभावेन पितुराज्ञां स्वीकृत्य श्वो दिवसे प्रवचनं श्रोतुं निरचैषीत्, परं मनसि चेमामेव धारणाम-धारयत्; "यत् संस्कृतभाषामात्राभिज्ञः स साधुः कां बुद्धिगम्योक्तिं वक्तुं शक्ष्यति।" आगामिनि दिवसे सत्संगोपस्थितः स महर्षेर्दिव्यदर्शनेनैवातितरां प्रभावितः; तथा च पादरीस्काटप्रभृतिसम्भ्रान्तयोरोपीयजनानां हृदयेषु स्वामिनो महत्त्वं संवीक्ष्य तस्याभिरुचिरतितरामवर्द्धत। यदा च घटिकापादं स महर्षेः प्रवचनमशृणोत्तदा तस्य विचारपरम्परैव परिवर्तिता। स हि महर्षेर्युक्तिपूर्णप्रकथने-ष्वाश्चर्यचकितोऽभूत्। संयोगवशात्तद्दिवसीयप्रवचनविषयोऽपि "परमात्मदेवस्य प्रमुखं नाम "ओ३म्" इत्यासीत्। अश्रुतपूर्वं तद् व्याख्यानं तस्य, अतः स हि अपारप्रसन्नतामन्वभूत्। ततश्च प्रतिदिनं महर्षेः प्रवचनेषु गन्तुं प्रवृत्तः। साम्प्रतं स महर्षेर्जीवनचर्यां द्रष्टुं समुत्सुकोऽभवत्। एतन्निश्चित्य तल्लग्नमग्नः स प्रथमवारं रात्रेः सार्धद्वयवादनसमये एव स्वयानं सज्जीकृत्य महर्षेरावासोद्यानं जगाम। यदा च कौपीनमात्रधरो मुनिवर उद्यानद्वारतो बहिर्भ्रमणार्थं गन्तुं प्रवृत्तस्तदा मुंशीरामस्तमन्वगच्छत्। महर्षेस्तीव्रवेगमयीं गतिमनुसरतो मुंशीरामस्य श्वासोच्छासप्रवाहः शिथिलः। अतः स परावृत्य स्वयानमारुह्य गृहं परावर्तत। परमागामिनि दिने च सोऽतिप्रवृद्धरुचिरर्धरात्रावेव जाग्रदुपवनमनुप्राप्तः। साम्प्रतं स पर्याप्तदूरं महर्षिमन्वगच्छत्, किञ्चित्कालञ्च ध्यानावस्थितमपि श्रीमहाराजमपश्यत्।

स्वतर्कशक्तिगर्वभरो मुंशीरामो महर्षिणा सममीश्वरविषये प्रश्नपरम्पराम-करोत्, परं महर्षेर्युक्तिभिः स दशपलमिते काले ह्येव मौनमभजत्। ततः स त्रिवारं (त्रिधा) वाक्यमिदमुवाच "भगवन्! भवत् पार्श्वे किञ्चिद् वक्तुमसमर्थ-स्यापि मे मनोभूमौ विश्वासांकुरो नांकुरितः"। महर्षिरुवाच—महोदय! मया हि स्वयुक्तिभिर्भवद् युक्तयो विखण्डिताः। विश्वासोत्पत्तिः स्थिरता च परमप्रभोरनुकम्पयैव सम्पत्स्यते।

**महर्षेरुपदेशेन वेश्यापरित्यागः—** श्रेष्ठी लक्ष्मीनारायणो वेश्यामप्येकाम-सेवत। एतदभिज्ञानमुपलभ्यैकदा महर्षिः स्वपार्श्वस्थितं श्रेष्ठिनमपृच्छत्, श्रेष्ठिवर्य! कस्ते वर्णः? स उवाच; भगवन्! गुणकर्मानुरूपं भवान् वर्णाभिज्ञानं मन्यते, किमहं ब्रूयाम्? महर्षिरुवाच; यं ते वर्णं जनवर्गो ब्रवीति, तमेव ब्रवीतु; श्रेष्ठी उवाच; भगवन्! जनवर्गस्तु क्षत्रियं मां वदति। श्रुत्वैतद् गम्भीरभावेन श्रीमहाराजोऽवदत्, श्रेष्ठिन्! यद्यप्यस्मद्यजमानरूपेण भवान् वर्तते तथापि नास्माकं सत्यप्रकथने संकोचः; चिन्तयतु; क्षत्रियतेजसा वेश्यायामुत्पन्नो बालः कां वर्णसंज्ञां ग्रहीष्यति? महर्षेर्वचनैः श्रेष्ठिवरोऽतीवलज्जितः सन्नधोमुखोऽभूत्। गृहमागत्य च तुरन्तमेव वेश्यां (गणिकाम्) निरगमयत्।

**शंखासुरोऽपाहरत् वेदान्**— बरेलीवासिनः कृतार्थान् विधाय महर्षिः शाहजहांपुरं सम्प्राप्य धर्मपिपासुभ्यो धर्मोपदेशामृतमयच्छत्। एकदा श्रीलक्ष्मण-शास्त्री स्वामिनमुपगम्य मूर्तिपूजाविषये शास्त्रार्थे प्रवृत्तः। महर्षिः शास्त्रिमहोदयं स्वपक्षपोषणे वैदिकप्रमाणोपस्थापनाय समादिशदत्; शास्त्रिमहोदयोऽवदत् ''वेदास्तु शंखासुरेणापहृताः कुतो वेदानां प्रमाणमुपस्थापयामि? महर्षिस्तत्कालमेव चतुर्वेदसंहिता हस्ते समादायोवाच; ''पण्डितवर्यः! भवदालस्यप्रमादशंखासुरं निहत्य चतुर्वेदसंहिता इमा मया जर्मनदेशतः संगृहीताः। गृह्णन्तु, सुचारु निरीक्ष्य प्रमाणं किञ्चिदुपस्थापय। हास्यरससिक्ता सर्वाऽपि सभा उच्चैर्जहास। पण्डितवरश्च मौनसाधने ह्येव कल्याणममन्यत।

**आंगलराज्यमिदं न यावनराज्यम्**— कियानपि उच्चपदासीनो मानवो दमनतर्जनामादिशेत्, श्रीमहाराजस्तुरन्तमेव तथैव तीक्ष्णं समुत्तरन् तं मौनमकार्षीत्। एकदा उपसमाहर्ता आलीजानमहाशयः प्रवचनस्थलमार्गेण गच्छन् महर्षिमुवाच; पण्डितवर्य! सावधानेन प्रवचनशब्दाः प्रयोज्याः। महर्षिस्तत्कालं समुदतरत्; ''न कुतोऽपि भयम्, आंगलराज्यमिदं न औरंगजेबीयं यावनं राज्यम्।

**सत्यात्मकं दानस्वरूपम्**— शाहजहांपुरे वेदामृतवर्षणानन्तरं लखनऊ-नगरमनुगच्छन् श्रीमहाराजः फर्रुखाबादनगरे श्रीकालीचरणस्योद्याने विरराज। प्रतिदिनं धर्मप्रवचनानि प्रवृत्तानि। सहस्रशो जनाः सद्धर्मोपदेशं शृण्वन्तः प्रभाविता अभूवन्। एकदा दानप्रसंगे प्रब्रुवन् महर्षिरुवाच ''अन्नजलदानं सामान्यतः सर्वबुभुक्षितपिपासितेभ्यः प्रदेयम्। एतादृशं दानं प्रथमं स्वपार्श्ववर्तिदीनदुःखित-बुभुक्षितपिपासितेभ्यः प्रदेयम्। पार्श्ववर्तिनां दारिद्र्यदूरीकरणेन सदनुकम्पाया उदारतायाश्च प्रकाशनं भवति। नानेन प्रशस्तिः प्राप्यते, अतो नास्ति गर्वमानयो-रप्यवकाशः। समीपस्थदुरवस्थं जनं पीडितश्च संवीक्ष्यैव दयाऽनुकम्पासंवेदनादयो हृद्गतभावाः प्रगटीभवन्ति। ये हि समीपवर्तिदीनदुःखितजनान् विहाय दूरस्थजनेभ्यो दयादिभावान् प्रदर्शयन्ति ते हि न दयावन्तः, अनुकम्पापराः, संवेदनशीलाश्च वक्तुं शक्यन्ते। एतादृशानां दानं बाह्य प्रदर्शनम्, औपरिकाडम्बर-मात्रमेव भवति। दीपज्योतिरिवदानादिवृत्तीनां प्रसारः समीपतो दूरान्तं यावदेव समुचितः। अत्र हि प्रश्नोऽयमुत्पद्यते; ये हि निर्धनाः, अन्नादिदानं कर्तुमशक्ताः किं तेऽन्येभ्यः प्रददतु। अत्रावधेयम्— ये हि अन्नादिदानेऽसमर्थास्ते हि स्वपार्श्ववर्तिनः कष्टक्लेशादिषु परिचरितुं शक्ताः। ते हि निर्बलानां पृष्ठपोषणं कुर्युः; विपत्तिस्थि-तानाधिव्याधिग्रस्तांश्च जनान् सेवन्ताम्; मधुरवचनैस्तान् सान्त्वनां प्रददतु; परपीडितान् व्याकुलजनांश्च प्रति प्रेमभावं प्रदर्शयेयुः; सर्वाण्येतानि दानान्यात्मनः सम्बद्धानि निर्धना अपि प्रतिदिनं दातुं प्रभवन्ति।

अत्र हि पौराणिकैरपि पञ्चविंशतिप्रश्नाः स्वामिनं सम्प्रेषिताः, येषां युक्तियुक्तोत्तराणि विलिख्य सम्प्रेषितानि।

**कथं कर्मफलाभिज्ञानम्–** फर्रुखाबादस्य न्यायाधीशः पादरीस्काटमहोदयोऽतिभद्रपुरुषः, उदारचेताः, महर्षिचरणयोरतिप्रीतिपरश्चासीत्। स हि प्रतिदिनं महर्षिप्रवचनेषु समागच्छत्, यदा च प्रवचनं नाभवत्तदा तस्य पुण्यदर्शनार्थमेवोपस्थितोऽभूत्। तस्यैकस्मिन् पादे समुद्भूतदोषेण केनचित्स खञ्ज इव प्राचलत्। एकदा स्काटमहोदयः स्वामिनमपृच्छत् "भगवन्! कथं कर्मफलाभिज्ञानं भवति? महर्षिः पर्यपृच्छत्; कुतो भवत्पादे खञ्जत्वमायातम्? स हि "ईश्वरेच्छा" इति प्रत्युत्तरं प्रादात्, परं श्रीमहाराजोऽवदत्– "नेयमीश्वरेच्छा, कर्मफलमेवैतत्।" सुखदुःखयोर्भोग एव कर्मफलं नाम; यस्य हि भोगस्य नात्र जन्मनि (अस्मिन् जन्मनि) किञ्चित् कारणं दृश्येत, स हि पूर्वजन्मकृतकर्मणामेव परिणामः।

**मानवमनोमन्दिरेभ्यो जडमूर्तिनिष्कासनं मे कार्यम्–** फर्रुखाबादस्य विपणेः परिमितिरक्रियत। राजपथे लघ्वी एका मन्दिरकुटी-अवर्तत, यस्यां हि भक्तजना धूपदीपदानमकार्षुः। श्रीमनमोहनलालः स्वामिनमुवाच– "भगवन्! स्काटमहाभागोऽतितरां सम्मानयति भवन्तं, भवतः संकेतमात्रेणैव मन्दिरकुटीयं मार्गतः परिमार्जयितुं शक्या, भ्रमस्थानं च विनष्टुं शक्यते। महर्षिस्तमुवाच; नायं विपरीतपथो मे प्रदर्शनीयः; एतादृशैर्विषमविपरीततीक्ष्णमार्गैः कस्यचिन्मतविशेषस्य हानिरधर्मः, द्रोहः, अधमभावः, अन्यायश्चैव वर्तते। यवनसम्राजो मूर्तिसहितानि शतशो मन्दिराणि विध्वस्तान्यकुर्वन्; परं न हि ते मूर्तिपूजनप्रतिबन्धे सफला बभूवुः। मानवमनोमन्दिरेभ्यो जडमूर्तिनिष्कासनमेव मे कार्यम्, न हि प्रस्तरेष्टिकानिर्मितदेवालयानां ध्वंसः।

**कथं मतमतान्तरप्रत्यालोचने विरामः कर्तुं शक्यः–** फर्रुखाबादे धर्मोपदेशं वितीर्य पर्यटन्नृषिवरो दानापुरं प्राप्तः। वाष्पयानपत्तने बहवो भद्रपुरुषास्तस्मै सुस्वागतं व्याहरन्तः ससम्मानं नगरं समानयन्। तत्र हि "ईश्वरः" आद्यनेक विषयेषु महर्षेः सारगर्भितानि, मनोहराणि च प्रवचनानि प्रावर्तयन्। प्रवचनान्तरेषु मतमतान्तरप्रत्यालोचनमपि समभवत्। श्रीगुलाबचन्द्रलालः श्रीमहाराजस्य परमभक्तेषु स्थितः कदाचिन्न्यवेदयत् "भगवन्! न यवनमतविषये किमपि प्रत्यालोचनं विधेयम्; एते हि सत्वरकलहकारिणः संघर्षपराश्च भवन्ति। महर्षिस्तदानीं मौनमास्थितः; परं प्रवचनसमये यवनमतमभिलक्ष्य तीक्ष्णतर्कशरवर्षामकरोत्; अकथयच्च किशोरबाला मां वदन्ति; "भगवन्! न यवनमतं प्रत्यालोचयतु," कथमहं शाश्वतसत्यं परिहरामि; यदा हि यवनानां साम्राज्यमासीत्ते हि खड्गधाराभिरस्मत्सद्धर्ममखण्डयन्; परं

दुःखास्पदो विषयो यन्मां वाचाऽपि खण्डयितुमवरुन्धन्ति। असत्यमतमतान्तरालोचने कथमहं स्वात्मानमवरोद्धुं शक्नोमि।

**योगासनेन रोगनिवृत्तिः–** श्रीठाकुरदासमहोदयोऽस्तव्यस्तप्राणायामैरस्वस्थोऽभवत्। स हि निरन्तरं नाभिकमले वेदनामनुभवन्नतीवकृशो दुर्बलश्च जातः। स ह्येकदा योगिराजं दयानन्दं स्वपीडामवर्णयत्। महर्षिस्तं समाश्वासयद् योगासनेनाहं ते त्रिवर्षस्य पीडां त्रिष्वेव पलेष्वपहरिष्यामि। स हि तं कक्षे एकस्मिन् पृष्ठानुवर्तिनमस्वापयत्; जानुनी च स्थितेऽस्थापयत्। ततश्च स तस्य पादयोः स्वपादौ निधाय दमनभारं प्रादात्; शिरश्चोपरि चकार; अनया प्रक्रियया स तुरन्तं स्वस्थोऽभवत्तस्य रोगनिवृत्तिश्चाभूत्।

**पादरीजोन्समहाशयस्य मांसभक्षणपरित्यागः–** एकदा कतिपयपादरिणः महर्षेरावासे समागता गोरक्षा विषये वार्तालापं प्रारभन्त। महर्षिर्जोंसमहाशयमपृच्छत् "किन्नाम कल्याणं कर्म?" परं स हि महर्षिमवदत्, "भगवन्! भवानेव सुचारुतया वक्तुं शक्नोति।" श्रीमहाराजोऽवदत्– "येन कर्मणाधिकाधिकमानववर्गस्योपकारातिशयः सम्पद्येत तदेव कल्याणमयं कर्म"; सिद्धान्तमिमं जोंसन्महाशयोऽपि प्रत्यग्रहीत्। तदा च महर्षिरत्युत्तमप्रकारेण "गोरक्षयाधिकाधिकमानववर्गस्य महान् लाभो भवति" इति सिद्धमकरोत्। महर्षेरुपदेशैः जोंसन्महाशयस्तत्रैव गोमांसाशनपरित्यागव्रतमग्रहीत्।

**रात्रावहं रोदिमि–** एकदा ह्यर्धरात्रावेव जाग्रत् श्रीमहाराजो व्याकुल इव इतस्ततो भ्रमितुं प्रवृत्तः। तस्य पादध्वनिं निशम्य प्रबुद्धः सेवको महर्षिमत्यन्तव्याकुलं विक्षुब्धमिव विलोक्य प्रार्थयत्; "भगवन्! वेदनाचेत् काचिदनुभूयते समादिशन्तु, सेवकोऽयमौषधोपचाराय प्रस्तुतः, अथादेशश्चेद् भिषग्वरं समाह्वयामि। महर्षिरतिदीर्घं निश्वस्योवाच; "भद्र! अतिवेगेन प्रवर्द्धमाना वेदनेयं नहि ते औषधोपचारेण प्रशमयितुं शक्या। इयं वेदना भारतस्य परिश्रमशीलजनानां दुरवस्थां चिन्तयतो मे मनसि समुत्पन्ना; क्रिश्चीनपादरिणः कोलभीलप्रभृतिभारतवासिनो जनान् क्रिश्चीनान् कर्तुं बहुशः कल्पनाजालं वितन्वन्ति। जलप्रवाह इव तेषामर्थप्रवाहोऽपि प्रवर्तते। इतश्चार्यजातेः पुरोहितजनाः कौम्भकर्णीं प्रगाढनिद्रां समाश्रिताः स्वपन्ति। नहि लेशतोऽपि स्वजातिह्रासस्य विनाशस्य वा विषये चिन्तापरायणाः। साम्प्रतं "राजमहाराजगणं सन्मार्गे समानीय सुधारकार्यं कुर्याम्; आर्यजातिं समानोद्देश्यसुदृढसूत्रे प्रतिबध्नीयाम्" इति मेऽभिलाषः। कविवरस्य कस्यचित् शब्देषु महर्षेः स्थितिरियमासीत्—

**इक हूक-सी दिल में उठती है, एक दर्द जिगर में होता है ।**

**हम रात को उठकर रोते हैं, जब सारा आलम सोता है ।**

**भंगभवानीभृङ्गारमन्यमेकं सेवस्व—** ऋषिवरः समागन्तुकजनमनोभाव-परिज्ञानेऽतीवकुशलोऽवर्तत। कदाचिद् भक्तप्रवरः कश्चिन्न्यवेदयत्; "भगवन्! अतितरामभ्यासे मनो नियोक्तुं प्रयते; परमस्य तरलतरंगा अभंगा एव वर्तन्ते। नहि संकल्पविकल्पाश्च प्रशाम्यन्ति। महर्षिः सव्यंग्यं समुदबोधयत्, मनश्चेन्न स्थिरतामापद्यतेऽन्यमेकं भंगभवानीभृङ्गारं सेवस्व। प्रत्युत्तरेण स हि साश्चर्यं स्वमनस्यचिन्तयत्; महर्षिस्तु न केनापि प्रकारेण मे भंगासेवनं विजानाति, पुनः कथमिदं प्रोक्तम्; वस्तुतो नहि कोऽपि महापुरुषाभिज्ञानसागर्थ्यसीमानं विज्ञातुं प्रभवति।

दानापुरे धर्ममुपदिश्य महर्षिः काशी-लखनऊ-फर्रुखाबाद-मैनपुरी-मेरठ-देहरादूनप्रभृतिनगरेषु परिभ्रमन्, जनसमुदाये धर्मभावनाम्चोद्बोधयन्-आगरानगरं सम्प्राप्तः।

**दृढनास्तिकोऽवागभूत्—** अनिर्वचनीयरसभरितानि महर्षेः प्रवचनान्यासन्। प्रायस्त्रिचतुरक्रोशतः समागत्य समवेताः श्रोतारस्तस्य मनोहार्युक्तिसमूहम्, अकाट्ययुक्तिजालञ्च शृण्वन्तो विमुग्धा अभूवन्। न तस्य तर्कवादाभिमुखं कश्चिदपि स्थातुं समर्थ आसीत्। आगरानगरे ह्येको दुराग्रही दृढनास्तिकश्च बंगप्रदेशीयश्चिकित्सकोऽपि कश्चिन्न्यवसत्। प्रबलतर्कशक्तिशीलतया ज्ञानविज्ञान-क्षेत्रे स हि लोकैरतितरां सम्मानित आसीत्। स हि एकदा स्वदलबलयुतो महर्षेः प्रवचनस्थलमगच्छत्। प्रवचनानन्तरं शंकासमाधानार्थं समयो निर्धारित आसीत्। तस्मिन् दिने च बंगीयचिकित्सकः प्रथमः शंकाशील आसीत्। परस्परं निरीक्षमाणो जनसमुदायोऽतीवसमुत्सुकोऽचिन्तयत्— अद्य हि वज्रशिलातो महर्षेः संघर्षः। नायं महाशयः पराजेतुं शक्यः, परं स्वल्पेनैव कालेन जनवर्गस्याश्चर्यं सीमानमलंघयत्। सर्वेऽपश्यन्; बंगीयचिकित्सको द्वित्रिवारं कतिचिद्वाक्यान्युक्त्वा मुखात्फेनजालमुद्गिरन् परास्तः समुपाविशत्। तद् दिवसतः श्रीमहाराज आगरानिवासिनां हृदयेषु स्वीयस्थिरप्रभावमारोपयत्। सर्वे च श्रोतारो महर्षिं धन्यं धन्यं वदन्तः परावर्तिताः।

**पादाभ्यामुपानहौ विमोक्तुं शक्नोमि—** एकदा- आगरास्थितविशप-(पादरीप्रमुख)-महोदयेन समं सम्मिलता महर्षिणा परामृष्टम् "परस्परं सम्मिलन्तो वयं पूर्वं धर्ममेकं संस्थापयन्तो नास्तिकवादस्योन्मूलनं कर्तुं शक्नुमः" इति। विशपमहोदय एकतामार्गे बहून् प्रतिबन्धानवर्णयत्। प्रत्युत्तररूपेण महर्षिरुवाच "सर्वेऽपि महानुभावा यदि वेदस्याधारं (धर्मस्य केन्द्रबिन्दुम्) स्वीकुर्वन्तु तदा सर्वेऽपि प्रतिबन्धाः स्वयमेव दूरीभविष्यन्ति। वार्तालापानन्तरं महर्षिस्तेषां बृहद्गिर्जागृहं (उपासनागृहम्) द्रष्टुमगच्छत्। तत्र गिर्जान्तःप्रविशन्तं

स्वामिनं क्रिश्चीन एकः प्रावदत् "महाभाग! शिरस उष्णीषमवतार्यैव प्रवेष्टव्यम्"। महर्षिरग्रेऽगच्छन् तं व्याजहार "एषा हि अस्मद्देशीया प्रथा, यत् शिरसि-उष्णीषं सन्धार्यैव क्वचिद् गमने प्रतिष्ठाचिह्नं, नाहं स्वदेशीयप्रथाविरुद्ध-माचरिष्यामि। यदि यूयं वदथ, तदा स्वोपानहौ उत्तारयितुं शक्नोमि। स उवाच-उभयमेव वस्तुजातं परित्यक्तुमुचितम्। तदा महर्षिर्नान्तः प्राविशत्, बहिरायामत एव क्रिश्चीनमूर्तीर्निरीक्ष्य परावर्तत।

**सर्वतो महीयान् तत्त्वदर्शी**– श्रीब्रह्मानन्दो यदा हि आगरानगरस्य महाविद्यालयेऽध्ययनरत आसीत्तदा तत्र महर्षेर्धारासारप्रवचनान्यभूवन्। एकदा हि ब्रह्मानन्दः सत्संगलाभाय महर्षेरावासमगच्छत्। तत्र हि महर्षेरनुपस्थितौ श्री-भीमसेनज्वालादत्तप्रभृतयः पण्डितवर्या आत्मचर्चां चर्चन्तः समुपस्थिताः। ब्रह्मानन्दोऽपृच्छत्। "कञ्चिदात्मदर्शिनं ज्ञानिनं भवन्तो निर्दिष्टुं शक्नुवन्ति?" श्रीज्वालादत्तः समुदतरत्– "साम्प्रतमस्मन्महर्षिप्रवरः सर्वतो महीयान् आत्मदर्शी वर्तते। अनेकधा सोऽस्माभिरचलध्यानपरायणः संदृष्टः। स हि सकलयोगसिद्धिसम्प्राप्तो देव-(आप्त)-पुरुषः। वेदभाष्यालेखनकाले समुपस्थिते कस्मिंश्चिद् दुरूहविषये स हि मध्यान्तराले ह्येव समुत्थाय गच्छति; कक्षाकपाटयुगलञ्च पिधाय चिरमन्तर्ध्यानिस्तिष्ठति; ततश्च बहिरागत्य पूर्वलिखितं कतिपयवाक्यपंक्तिसमूहमपि परित्याज्य (परिमार्ज्य) तत्र नववाक्ययोजनां योजयति। एतावद् विमलं विशुद्धञ्च तस्यान्तःकरणं यत्तत्र–(तस्यान्तःकरणे) सप्तकक्षाभ्यन्तरकृतोऽपि वार्ताप्रसंगोऽभिभासते। स हि अनेकधास्माकं प्रच्छन्नमनोरथानस्मत्समक्षमभिवर्णयति। स ह्यस्मानुपदिशति "यदा हि मानवहृदयस्य सकलग्रन्थयो भिद्यन्ते, तदा स आत्मज्ञानं लभते; तिलेषु तैलमिवात्मन्येव परमात्मदेवोऽभिरमते, अतस्तस्यापि (परमात्मदेवस्यापि) तदैव ज्ञानं भवति।"

इत्थमागरानगरनिवासिनां हृदयानि धर्मोपदेशामृतेनाभिषिच्य श्रीमहाराजो (महर्षिर्दयानन्दः) राष्ट्रस्य राजमहाराजगणं सुपथे समानेतुं राजस्थानप्रान्तं प्रस्थितः।

## थियासोफ़िकलसोसायटी (संस्था)

१८७५वर्षस्थनवम्बरमासस्य सप्तदशतारिकायां मैडमब्लैवट्स्कीकर्नल-अल्काटमहोदयश्चोभौ थियासोफ़िकलसंस्थामस्थापयताम्। संस्थायाः संस्थापनं सम्पन्नं परं तौ हि स्वकर्मभिरतितरां कुख्यातावास्ताम्, तयोर्भोजनप्राप्तिरपि दुर्लभाऽभवत्। तत्रावासोऽप्यसम्भव आसीत्; अतस्तौ हि भारतवर्षं प्रत्याशान्विता-वभवताम्। भारतवर्षे पदमारोपयितुं कस्यचित् शक्तिमतो महापुरुषस्याश्रयोऽपेक्षित आसीत्। श्रीहरिश्चन्द्रचिन्तामणिमहोदयात् श्रीअल्काटमहाशयो महर्षेर्दयानन्दस्य परिचयं प्राप्नोत्। तमेव परिचयमभिनन्दन् थियासोफ़ीप्रधानो महर्षिं निम्नाङ्कितं भक्तिभावपूर्णं पत्रमेकमलिखत्—

सेवायाम्—

परमसम्मानितो दयानन्दसरस्वतीमहाभागः, (भारतवर्षम्)।

सम्मानितगुरुदेव!

अध्यात्मज्ञानपिपासवः कतिपय अमेरिकावासिनोऽन्ये छात्राश्च सर्वेऽपि वयं स्वात्मनो भवच्चरणयोरुपस्थाप्य -(समर्प्य)- अध्यात्मप्रकाशं प्रार्थयामः। अस्माकं साहसिकव्यवहारेण स्वभावतः सर्वसामान्यजना अस्मान् सम्मानयन्ति, परं निहितसांसारिकस्वार्थशीलाः, वैयक्तिकपूर्वाग्रहपरायणाश्च जनाः समाचारपत्राणि चास्मान् विरुध्यन्ते। ते ह्यस्मान् नास्तिकान्, अविश्वासिनः, धर्महीनांश्च वदन्ति। न वयं केवलं युवजनानामुग्रचेतसामेवापितु मतिमतां सम्मानितमहानुभावानामपि साहाय्यमभिलषामः, अतः पुत्राः पितृचरणयोरिव वयं श्रीचरणयोरागच्छामः; ब्रूमश्च; गुरुदेव! निरीक्षस्वास्मान्; कर्तव्यपथप्रदर्शनञ्च कुरु। वयं हि न गर्विता अपित्वतीवविनम्राः सन्तो भवत्सेवायामागच्छामः। भवतः परामर्शं प्राप्तुं प्रदर्शितपथाभिगमनेन च कर्तव्यकर्म कर्तुमुद्यताः स्मः।

हस्ताक्षर— (हैनरी अल्काट)

१८७८वर्षस्थमईमासस्य द्वाविंशतितमदिनांकलिखितपत्रांशः—

पत्रमिदं थियासोफ़ीसंस्थाप्रकाशनसचिवोऽगस्टमगुस्टममहोदयः आर्यसमाज-प्रमुखमलिखत्—

"विनिश्चितमेतद् यत् थियासोफ़िकलसंस्था स्वहितार्थं योरोप-अमेरिका-स्थितस्वीयसंस्थांशाखानाञ्च हितार्थमार्यसमाजस्य संस्थापकं महर्षिदयानन्दसरस्वती-महाभागं स्वपथप्रदर्शकं प्रमुखञ्च स्वीकुर्यात्।"

एवं थियासोफिकलसंस्था तदार्यसमाजेन समं स्वसम्बन्धं समायोजयत्; यदा हि अमेरिकावासिनः संस्थासञ्चालकाः स्वश्वोभोजनप्राप्तिविषयेऽपि सन्देहयुता

आसन्। तत्र तेऽतितरां कुख्याताः दुःखिताश्चासन्। उपरिलिखितपत्राभ्याम-भिज्ञायते यत्तत्कालीनसंस्थासदस्याः महर्षिं स्वगुरुं मन्यमानाः स्वसौभाग्यमन्वभवन्; आर्यधर्मग्रहणाय समुत्सुकाश्चासन्। पर्याप्तपत्रव्यवहारानन्तरं थियासोफ़िकल-युगलमिदम् १८७९तमवर्षस्य जनवरीमासे मुम्बईनगरमागच्छत्। महर्षेश्चरण-योश्च स्वीयश्रद्धाकुसुमानि समर्पयितुमुत्सुकमभवत्।

सर्वप्रथमं युगलमिदं सहारनपुरनगरे महर्षिममिलत्। १९३६तमसंवत्सरस्य वैशाखशुक्लद्वादश्यां महर्षिः कर्नलअल्काटदम्पतीसहितः मेरठनगरं सम्प्राप्तः। आर्यसमाजस्य सर्वेऽपि सभासदस्तस्य स्वागतार्थं वाष्पयानपत्तने समुपस्थिता आसन्। पश्चिमीयशिष्यैर्वृतं स्वगुरुदेवमवलोक्यार्यपुरुषाणां शरीराणि हर्षपुलकितान्य-भूवन्। तेहि-अत्युत्साहेनैकस्मिन्भवने महर्षिप्रवरमपरस्मिन् चातिथियुगलमावासयन्। वैशाखशुक्लत्रयोदशीतः ज्येष्ठकृष्णद्वितीयापर्यन्तं महर्षेस्तत् शिष्ययुगलस्य च धारासारेण प्रवचनान्यभूवन्। कर्नलमैडमयुगलेन स्वप्रवचनेषु सुचारुरूपेण वेदमहत्त्वं प्रगीतम्; क्रिश्चीनमतत्रुटयश्च प्रकाशिताः। प्रवचनेष्वेतेषु योरोपीयजना बहुसंख्यायां समागच्छन्। कर्नलदम्पती महर्षेरावासं गच्छन्तौ सत्संगेषु ज्ञानचर्चामकुरुताम; आत्मसम्बन्धिप्रश्नान्, योगाभ्यासरहस्यांश्चापृच्छताम्! उभौ हि स्वात्मानम् 'आर्य' शब्देन समबोधयताम्। भूमावुपविश्य भोजनमाश्नीताम्। 'ओ३म्' पदकं यज्ञोपवीतञ्चाधारयताम्। तौ हि श्रीमहाराजं गुरुदेवममन्येताम्। अतिविनयञ्च प्रादर्शयताम्।

एकदा श्रीछेदीलालस्य भवने शुभासनासीने मुनिवरे प्रचलितायाञ्च ज्ञान-धारायां सत्संगामृतनिमग्नेषु च श्रोतृषु अल्काटमहोदयोऽपृच्छत् "भगवन्! शंकराचार्यः स्वकलेवरादात्मानं निष्कास्य-अन्यकलेवरे (परकाये) प्रवेशमकार्षीत्; किमत्र भवतां सम्मतम्?" महर्षिरुवाच– शंकराचार्यस्य परकायप्रवेशो हि ऐतिहासिको विषयः, अस्य सत्यासत्यविषये न किमपि वक्तुं शक्यते, परमेतावदहमपि प्रदर्शयितुं प्रभवामि यदेकस्मिन् देहांगे सम्पूर्णं जीवनशक्तिं केन्द्रितां कर्तुं प्रभवेयम्, अनेन च शेषं समग्रशरीरं जीवनशून्यं भविष्यति। परकायप्रवेशश्चैत-स्मादग्रतः पादैकप्रक्षेपणमेव। अल्काटमहोदयः स्वगुरोर्योगबलं विज्ञायातीव हर्षितोऽभवत्।

किञ्चित्समयानन्तरम्-अल्काटदम्पति महर्षेरनुज्ञामुपलभ्य मुम्बईनगरं प्रस्थितौ।

मुम्बईनगरे यत्रापि अल्काटयुगलमगच्छत्; महर्षिभक्ताः तयोरतितरां सम्मानमकुर्वन्। एतयोः प्रवचनानि च समायोजयन्; एवमेकवर्षं यावदतिप्रेम-सम्बन्धः सुस्थितः। थियासोफ़िस्टयुगलस्य भक्तिभावश्चातितरामुद्वेलितः। एतावत्समयं भारतवर्षे स्वपदारोपणार्थं, शिष्यवर्गसंग्रहणार्थञ्च पर्याप्तमासीत्।

आंगलभाषाशिक्षिताभारतीया युगलस्यास्य वार्तास्वभिरुचिपराः श्रवणसक्ताश्च बभूवुः। एवं वर्षान्तं यावत्प्रेमसम्बन्धेषु स्थितेषु नवरागरंगप्रदर्शनं प्रारब्धम्। विवादस्य त्रीणि मुख्य कारणान्यभूवन्।

१. भारतस्थितेन थियासोफ़िस्टयुगलेन परिज्ञातं—यं हि महानुभावं गुरुरूपेण सम्मानयन्तौ तौ समागतौ स सदा गुरुरूपेणैव स्थास्यति, न हि शिष्यो भवितुं शक्यः, पण्डितदयानन्दो हि तयोरभिवृद्धिकारणं भविष्यतीति तावमन्येताम्; परं पुनरनुभूतं नायं तथा विमुग्धः सरलो वा महानुभावो यो हि अस्माकमभिवृद्धिसाधनं भवितुं शक्यः।

२. थियासोफ़िष्टयुगलमन्वभवत्—भारतवर्षं हि-अज्ञानान्धश्रद्धयोः प्रमुखस्थानं जातम्; स्वात्मानं गुरुम्मन्यो नात्र कश्चिदपि निराशः परावर्तयिष्यते यो हि कतिपयशिष्यानपि (अनुयायिनोऽपि) नोपलब्धुं पारयेत्, अतः थियासोफ़िष्ट-युगलं स्वीयपृथगापणारोपणमेव लाभकरममन्यत। भारतवर्षसमागमनात् पूर्वं युगलमिदमार्यधर्ममन्यत, परं शीघ्रमेव तेनानुभूतम्; यत्तेषां सिद्धान्ता हि आर्यधर्मापेक्षया बौद्धमतेन सममधिकं संगच्छन्ते।

३. तृतीयविवादश्चोपर्युक्तद्वयोर्विवादयोरेवाश्रितः। थियासोफ़ी आर्यसमाजस्य शाखा रूपेणावर्तत; ये हि थियासोफ़ी-सभ्यास्ते वस्तुतः आर्यसमाजस्यैव सभ्या (सभासदः) अमन्यन्त। एवं स्थितावेतच्चिन्तनमप्यसंगतमासीद् यदार्यसमाजस्य सभ्याः थियासोफीसभ्या निर्धारयेरन्। ये हि मूलसंस्थायाः सदस्या न हि ते शाखासंस्थायाः सदस्यताग्रहणमावश्यकं मन्यन्ते, परं कर्नल-अल्काटदम्पती आर्यसमाजस्य सभासदः थियासोफीसंस्थासभासदः (सदस्यान्) कर्तुमारभताम्। व्यवहारमिमं महर्षिरतितरामनुचितममन्यत।

एतानि त्रीणि मूलतत्त्वानि यैश्च कारणभूतैः थियासोफ़ीनेतारो ये हि स्वसिद्धान्तान् आर्यसमाजस्य पूर्णतोऽनुरूपानमन्यन्त साम्प्रतं सत्वरमेव विश्वस्य कर्तारं सर्वेश्वरममन्यमाना बौद्धमतसदस्यतां गृहीतुमारभन्त। अमेरिकायां मैडमब्लैवट्स्कीमहोदयादेहे केवलं किंगजानमहोदयस्यैवात्मा प्राविशत्परं भारतवर्षसमागमने हिमालयस्थमहात्मनां, तत्प्रतिनिधिकूटहुमीमहात्मनश्च मैडममहोदयया समं परिचयोऽभवत्; हिमालयाच्च प्रत्यक्षसन्देशाः प्राप्तुमारभन्त। मतभेदे प्रमुखकारणमिदं यत् थियासोफ़ीसंस्थापकाश्चमत्कारान् स्वधर्मसिद्धान्तान् अमन्यन्त; समुदघोषयंश्च। एते हि मिथ्याचमत्कारानेतान् योगसिद्धिरूपानवर्णयन्। अथ च विनैव योगप्रक्रियां योगसिद्धिं प्रामाणयन्। विचित्रा अतिसामान्याश्च ताः योगसिद्धय आसन्। यथा हि कस्यचित् चौरितवस्तुनो निवेशस्थानाभिज्ञानम्, कस्यचिन्मनोभावकथनञ्च। दम्भछलछद्मविनाशकः सत्यप्रचारकश्च महर्षिः कथं

मौनं धारयितुमशक्नोत्। स हि आर्यसभ्यानपि सचेतसः कर्तुं निसचिनोत्। (निश्चयमकरोत्)।

१९३७तमसंवत्सरस्याश्विनकृष्णचतुर्दश्यामार्यसमाजमेरठनगरस्य द्वितीय-उत्सवावसरे महर्षिः स्वप्रवचनद्वये तानि कारणानि प्राकाशयद् यैश्चार्यसमाजसंस्था थियासोफ़ीसंस्थातः पृथग्भवितुं विवशाऽभवत्। अथच महर्षिरुदघोषयत्–

न केनाऽपि आर्यसभासदा थियासोफीसदस्येन भाव्यम्, द्वयोरेव संस्थयोः निम्नाङ्किता मौलिकभेदाः समुत्पन्नाः —

१. थियासोफिष्टाः परमेश्वरं सृष्टिकर्तारं न मन्यन्ते।

२. ते हि स्वात्मनो बौद्धानवदन्।

३. ते हि हिमालयवर्तिकल्पितमहात्मनां सत्ताममन्यन्त, तेषां गुप्तसन्देशेषु च विश्वसन्ति।

४. ते हि सिद्धिनाम्ना चमत्कारेषु व्यश्वसन्; तेषु विश्वासस्थिरतां च सुदृढं प्राकटयन् (प्राकाशयन्)।

५. थियासोफ़ीसंस्थायां क्रिश्चीनाः यवनाः, बौद्धाः, हिन्दू-धर्मस्थाश्च परस्पर-विरुद्धमन्तव्यधारिणोऽपि प्रवेष्टुं शक्याः।

एवं थियासोफ़ी आर्यसमाजतः क्रोशैर्दूरं गताऽसीत्, अतो महर्षिणा थियासोफ़ी संस्थया सममार्यसमाजस्य सम्बन्धविच्छेद आवश्यको निर्धारितः। आर्य-समाजतः पृथग्भूता थियासोफी कां दशामगच्छत्? कञ्च पन्थानमध्यग्रहीत्? इतिविषये संस्थायाः पुरातनसेवक श्री वी० पी० वाडिया महोदयस्य त्यागपत्र-स्थनिम्नपंक्तिषु स्पष्टम्—

"थियासोफ़ी सत्यान्वेषणे प्रयतमानानां संस्थारूपेण नहि स्थितावर्तत; एषा हि स्वल्पजनेष्वधिकजनानां विश्वासमयी संस्था समुद्भूता, अत्र हि अन्धपरम्परायाः साम्राज्यम्; यत्र च थियासोफ़िकलाचारशास्त्रस्योत्तमादर्शा भूतवादानाचारयोः पंकमग्नाः क्रियन्ते।*

श्री (मि०) वाडिया हि संस्थायाः स्तम्भेष्वेकतमः स्तम्भभूतः। संस्थाविषये तस्यान्तिमा सम्मतिः प्रमाणयति यदार्यसमाजतः थियासोफ़ी संस्थायाः बहिष्करणं न महर्षेर्भ्रान्ताचरणम्, अर्थात् आर्यसमाजतः थियासोफ़ीसंस्थायाः सम्बन्धविच्छेद-करणे महर्षिणा न काऽपि भ्रान्तिरनुष्ठिता।

* It (the Theosophical Society) is no more a society of seekers of the wisdom but an organisation where many believe in the few and blind following has come to prevail; where shams pass for realities and the creduilty of superstition gains encouragement and where the noble ideals of the theosophical Ethics are explorited and dragged in the mire of psychism and immorality.

## वीरभूमिराजस्थानं प्रति धर्मप्रचाराय प्रयाणम्

**स्वदेशीयराज्येषु पर्यटनम्—** राजस्थानतो बहून्यामन्त्रणानि निरन्तरमधिगतानि, महर्षिरपि चिरकालतो राजस्थानीयशासकानां सुधारमैच्छत्। स हि विभिन्नावसरेष्वब्रवीत्, ''राजवंशानामुद्धारेणैव भारतराष्ट्रस्य कल्याणं भवितुं शक्यमिति, राजानश्चेत् सुपथपरायणाः स्युस्तदा प्रजाः शीघ्रमेव धर्मपथे समापतिष्यन्ति, यतो राजसु धर्मपरायणेषु प्रजानां सुपथप्रवर्तने नहि विलम्बः'' इति तस्य मनसि स्थिरनिश्चयोऽवर्तत, अतएव महर्षिप्रवरः स्वविस्तृतमुत्तरप्रदेश-पाञ्चालप्रान्तीयप्रचारक्षेत्रं परित्यज्य राजस्थानं प्रतिप्रस्थितः।

१९३७तमसंवत्सरस्य फाल्गुनशुक्लदशम्यां तदनु १९८१तमवर्षस्थमार्चमासस्य दशमतारिकायां भरतपुरनगरे (राज्ये) दयानन्दभास्करः समुदितः। अत्र हि दशदिवसपर्यन्तं वैदिकादर्शेषु प्रवचनानि कुर्वन् जयपुरनिवासिनां ज्ञानपिपासाञ्च शान्तां कुर्वन्मुनिवरः १९३८तमसंवत्सरस्य वैशाखशुक्लसप्तम्याम्-अजमेरनगरं सम्प्राप्तो धर्मप्रचारश्च प्रारभत। प्रतिसायं सप्ततो नववादनपर्यन्तं स विभिन्नधार्मिकविषयेषु प्रवचनान्यकार्षीत्। होराद्वयपर्यन्तं मधुलोभिनो भ्रमरा इव श्रोतृजनाः धर्मोपदेशामृतपानमकुर्वन्। तत्र द्वाविंशतिदिवसेषु महर्षेः षड्विंशति प्रवचनानि प्रवृत्तानि।

**महर्षिचरणयोः पण्डितलेखरामस्योपस्थितिः—** पण्डितलेखरामस्य मनस्यपि महर्षेः पुण्यदर्शनलालसा समुद्भूता, स हि किञ्चित्कालं स्वकीयसर्वकार्यजातं परित्यज्य पाञ्चालतः-अजमेरनगरमभिप्राप्तः। १९३८तमसंवत्सरस्य ज्येष्ठकृष्णचतुर्थ्यां प्रातःकाले स हि महर्षिसेवामुपस्थाय भक्तिभावभारेण नम्रीभूतो महर्षिचरणयोः नमस्तेशब्देन विनीतप्रणाममकरोत्। परमहंसस्य तस्य प्रेमरसपरिपूर्ण-लोचनयुगलम्, मधुरं मुखमण्डलम्, शोभाभरितविशालललाटम्, पतितपावनीं परमपवित्रां देहाकृतिं समवलोक्य सुदीरपाञ्चालपुत्रोऽतीवप्रमोदमन्वभवत्। स हि सम्पूर्णां मार्गजनितश्रान्तिं व्यस्मरत्। अतृप्तलोचनाभ्याञ्च महर्षेः सुन्दरशोभाभरितस्वरूपमीक्षितुमारभत। पुनर्बद्धाञ्जलिरपृच्छत् ''भगवन्! ब्रह्म, आकाशश्चेति पदार्थद्वयमेव व्यापकम्; उभयमेतदेकस्थानसमवेतं कथं स्थातुं शक्नोति? श्रीमहाराजः पार्श्वस्थितं बृहत्प्रस्तरमेकं समानीयापृच्छत्, प्रस्तरेऽस्मिन् अग्निर्व्यापको न वा? लेखरामोऽवश्यमेव विद्यते, इति प्रत्युदतरत्। पुनश्च महर्षिस्तत्रैव पाषाणखण्डे वायुजलमृदाकाशानां परमेश्वरस्य च व्यापकतामपृच्छत्; लेखरामः सर्वेषामेव व्यापकतां स्वीचकार; तदा महर्षिरुवाच, ''भद्र! विज्ञातं भवता यदेकस्मिन् प्रस्तरे सर्व एव पदार्था व्याप्नुवन्ति। व्यापकताया अस्या अयं सरलः सिद्धान्तः, यो हि पदार्थो यदपेक्षया सूक्ष्मतां भजते

स तत्र तेन समं व्याप्तुं शक्नोति। परमात्मदेवश्च परमसूक्ष्मः, अतः स हि सर्वेष्वपि पदार्थेषु व्यापकरूपेण विराजते।

महर्षिरन्वभवत्— "उर्वरा खलु भक्तप्रवरस्य हृदयभूमिः, अतस्तस्यां धर्मकल्पतरुबीजवपनभावनामभिलक्ष्यमाणः स भक्तप्रवरं (लेखरामम्) समादिशत्; भद्र! यथेष्टप्रश्नान् पृच्छन्भवान् स्वसंशयनिवारणं कर्तुमर्हति। तदानीं पण्डितवरो दश प्रश्नानपृच्छत्; तेषु कतिपये स्मृतिपथमागताः, यथा च—

**१. प्रश्नः**— भगवन्! जीवब्रह्मणोर्भेदे प्रमाणं किमपि प्रस्तुवन्तु?

**उत्तरम्**— यजुर्वेदस्य सर्वोऽपि चत्वारिंशत्तमोऽध्यायो जीवब्रह्मणोर्भेदं वर्णयति।

**२. प्रश्नः**— किं यवनक्रिश्चीनादिमतानुयायिनां शुद्धिः समुचिता?

**उत्तरम्**— अवश्यमेव तेषां शुद्धिर्विधेया।

**३. प्रश्नः**— किं नाम विद्युत्? कथञ्च तदुत्पत्तिः?

**उत्तरम्**— सर्वत्रैव विद्युद्विद्यते, संघर्षेण तस्याभिव्यक्तिर्भवति। मेघस्थितविद्युदपि वायुमेघानां संघर्षेणैवाभिव्यज्यते। इति।

ततः श्रीमहाराजः पण्डितप्रवरं समादिशत् "यावदायुषः पञ्चविंशति-वर्षाणि पूर्णानि न स्युः, तावद्विवाहो नानुष्ठेयः" इति। परमधीरकर्मवीरगुरुदेवा-द्विसृजन् लेखरामस्तस्य किमपि स्मृतिचिह्नमयाचत। महर्षिश्च स्वानन्यभक्तायाति-वत्सलभावेनाष्टाध्यायीग्रन्थस्य प्रतिमेकामयच्छत्। ततश्च भावी "आर्यपथिकः" गुरुदेवस्यारुणचरणारविन्दौ संस्पृश्य स्वप्रान्तं परावर्तयत्।

**पादरीशूलब्रेडमहोदयेन समं वार्तालापः**— अजमेरतः प्रस्थाय महर्षिर्म-सूदानरेशस्यातिथिर्बभूव। अत्रापि धर्मप्रवचनक्रमोऽबाधरूपेण प्रावर्तत। एकदा पादरीशूलब्रेडमहोदयः स्वदेशीय पादरिणैकेन समं महर्षिं सम्मिलितुमायातः। स हि महर्षिमनेकान् प्रश्नानपृच्छत्; परं महर्षिणा पृष्ट एकस्यापि प्रश्नस्योत्तरणे न समर्थोऽभूत्। शूलब्रेडस्य प्रश्ने महषिरुवाच— "नहि वेदेषु गोमेधस्याश्वमेधस्य वा वर्णनमुपलभ्यते। स्वदेशीय क्रिश्चीनेनैकेन पृष्टम् "भगवन्! राजमहाराजगणमेव भवानुपदिशति, निर्धनवर्गगतो हि कथं तान्नोपदिशति? महर्षिरुवाच, सर्वत्रैवाहं पर्यटामि, प्रवचनानि चापि सर्वसाधारणकृत एव भवन्ति; प्रवचनेषु च लघुतो लघीयानपि जनः निर्बाधं निष्प्रतिबन्धश्च समायातुं प्रभवति। अथ च सामान्यतः पिपासव एव कूपमभिगच्छन्ति न तु कूपः पिपासुजनाननुयाति।

**भक्तजना यज्ञोपवीतान्यगृह्णन्**— तदानीं जैनसंन्यासी सिद्धकरणोऽपि तत्रैव व्यराजत। श्रीमहाराजः प्रश्नद्वयं "केन कारणेन भवन्तो मुखे पट्टिकां

ददति? किमर्थश्चोष्णं जलं सेवन्ते'' इति विलिख्य तस्मै सम्प्रेषयन्निदमपि समलिखत् ''युष्मन्मतेऽनेकेऽसंगतवृत्ताः समुपलभ्यन्ते, यथा च एकपणकप्रमाण-कन्देऽनन्तजीवाः सम्भवन्ति'' इति युक्तिविरुद्धम्, नहि सान्तेऽनन्तसमावेशसम्भवः'' इति। सिद्धकरणः प्रथमवारं यथा तथा प्रत्युत्तरं प्रादात्, परं यदा हि स्वामि-महाभागस्तदुत्तरमप्याक्षिपत्, भक्तजनाश्च यदा प्रत्युत्तरं लिखितुं प्रार्थयन् तदा पराजितः स उत्तरप्रदानं न्यषेधीत्। पराजिते संन्यासिनि जैनसम्प्रदायिजना अतिप्रभाविताः; ते हि स्वमते प्रबलभ्रान्तिजालममन्यन्त। उतश्च महर्षिरपि स्वप्रवचनेषु प्रतिदिनं जैनमतस्यायुक्ततामुपावर्णयत्। परिणामत एकदाऽनेके जैनमतानुयायिनः संघशो महर्षिं प्रार्थयन्, ''भवता हि सद्ज्ञानप्रदानेनास्माकं लोचनान्युन्मीलितानि; वयं हि जैनमतस्यासारतां प्रत्यक्षं (स्पष्टम्) पश्यामः। सम्प्रति भवान् कृपापरायणः सन् यज्ञोपवीतप्रदानेनास्मान् दीक्षितानार्यान् विदधातु।'' तदा महर्षिः रावमहाभागं यज्ञसामग्रीं समानेतुमादिशत्। विधिवच्च यज्ञशाला विनिर्मिता, अलंकृता च, रजतचमसाश्च निर्मिताः, अजमेरतो हवन-सामग्री संग्रहीता। अथच १९३८तमसंवत्सरस्य श्रावणपूर्णिमायां रावमहोदयस्य निर्देशने महान्महोत्सवो विरचितः, बृहद् हवनयज्ञश्च सम्पादितः; ततः श्रीमहाराजेन स्वपावनकरकमलाभ्यां त्रयस्त्रिंशद् भद्रपुरुषाः परमपवित्रयज्ञोपवीतेन समलंकृताः, आर्यधर्मस्य दीक्षया चाभिनन्दिताः।

मसूदास्थितजैनमतानुयायिभिर्जैनमतपरित्यागेन सम्पूर्णमारवाड़स्थिता जैन-महानुभावा अतिप्रभाविताः; आर्याणामुत्साहश्च चतुर्गुणोऽभिवर्द्धितः। भाद्रपदकृष्ण-द्वितीयायां च भरतपुरस्थ राजपुत्राः, क्षत्रियाः, वैश्याः, कायस्थाः, चारणाश्चापि स्वामिनः करकमलाभ्यां परमपवित्राणि यज्ञोपवीतान्यगृह्णन्। रावमहोदयस्तदापि भव्योत्सवं व्यरचयत्।

**आर्यललनानां समुद्धारः** – मारवाड़राज्येषु आर्यजना यावनशासने यवनमतदीक्षितेभ्योऽपि-आमहर्षेःकालं स्वकन्याः प्रायच्छन्; श्रीमहाराजेन आर्यजनाः सभायामामन्त्रिताः सम्बोधिताश्च, यूयं स्वयमेवाभिजानन्तः स्वकन्यका यवनमते दीक्षिताः कुर्वन्ति(प्रवेशयन्ति) इत्यनर्थकरमेतत्। नहि निरीहकन्यकास्वियमनीतिः, एषोऽन्यायोऽनर्थश्च कर्तव्यः। श्रीमहाराजस्य वचनानि लोकहृदयेषु समाविष्टानि; ते हि तत्रैव प्रत्यजानन् ''न वयमतः परं घोरपापमिममाचरिष्यामः, वस्तुतः स्वधर्मविनाश एषः, एवं हि महर्षिप्रवरस्तदैव विंशति-आर्यबालानां धार्मिकजीवनं स्वरक्षत्।

**सम्मानितविसर्जनम्**– अन्येष्वपि पार्श्ववर्तिराज्येषु महर्षेः कीर्तिकौमुदी प्रसृता। रायपुरतोऽनेकान्यामन्त्रणानि सम्प्राप्तानि; यदा हि महर्षिस्तत्रगमनोद्यतो-

ऽभूत्तदा भावविह्वलमना रावमहोदयो महर्षिं न्यवेदयत् "भगवन्! भवतामितो गमनं मेऽतीवकष्टकरम्; अत्रैव स्थितेन भवता वयं सनाथीकरणीयाः, वेदभाष्यस्यापि साहाय्यं सर्वमितो ह्येव सम्पत्स्यते।" श्रुत्वैतत् महर्षिरुवाच "राजन्! क्षत्रियो भवान्, भवद्धर्मो नीतिश्चैवमेव शोभते, परमहमेकः परिव्राट्, सर्वत्र परिभ्रमणमेव मे कार्यं धर्मश्च, अतः सुप्रसन्नेन मनसा भवान् मां विसृजतु। रावमहोदयो महर्षेः प्रस्थानार्थं सम्मानसभां समायोजयत्! दुर्गदिहली- अग्रप्रदेशे सुन्दरमण्डपमेकं विरचितम्। तत्र हि अतिस्वच्छं सुन्दरश्चास्तरणमेकमास्तृतम्। महर्षेरश्वयानमावासस्थानतो नगरमनुभ्रमन् सभामण्डपं सम्प्राप्तम्। सम्पूर्णाऽपि सभा सादरं समुत्थाय तस्मै स्वागतं व्याजहार। महर्षिरेकस्मिन्नुच्चसिंहासने समुपविश्य राजप्रजाधर्मं परमोत्तमरीत्या न्यरूपयत्। उपदेशानन्तरं रावमहाशयः समुत्थाय महर्षेरुपकारान् प्रभूततया प्रशंसन्नभिनन्दनपत्रमपठत्। ततश्च रावमहाभागः श्रीमहाराजस्य गले पुष्पमालां समर्पयत्, पञ्चशतरुप्यकाणि च चरणयोः समर्प्याभिवादनमकरोत्। शुभाशिषं प्रयच्छन् महर्षिरपि स्वमंगलमय-करकमलाभ्यां रावमहोदयस्य गले पुष्पमालां पर्यधापयत्। ततश्च रावमहोदय-प्रभृतिसुजनवृन्देन समं वार्तालापं कुर्वन् महर्षिरश्वयानमारुरोह। प्रायोऽर्धक्रोशान्तं यावच्चतुःशतं जनास्तं ससम्मानं विसर्जयितुं सहागताः, अन्ततो महर्षिरश्वयानम-वष्टभ्य तानुपदिश्य नगरं परावर्तयत्। रावमहाभागस्तु प्रायः चतुष्क्रोशपर्यन्तमुपदेशं शृण्वन्नेव सह प्राचलत्; अन्ततः सप्रेमसत्याग्रहेणैव महर्षिः रावमहोदयं परावर्तयत्।

**न दासीपुत्रा राजमन्त्रिणो विधातव्याः–** १९३८तमसंवत्सरस्यभाद्र-पदकृष्णनवम्यां महर्षिप्रवरो मसूदातः प्रस्थाय आगामिनि दिवसे रायपुरं सम्प्राप्य श्रीमाधोदासस्य वाटिकायां सुशोभितोऽभवत्। तस्य शुभागमनं श्रुत्वा ठाकुरहरिसिंहः स्वजनपरिजनपरिवारितः श्रीचरणदर्शनार्थमुपागतः। स्वर्णमुद्रासहितानि पञ्चरूप्य-काणि समर्प्य चरणौ स्पृशन् विनम्रप्रणाममकरोत्। कुशलक्षेमप्रश्नानन्तरं महर्षिः ठाकुरमहोदयं राज्यमन्त्रिविषयेऽपृच्छत्; ठाकुरमहोदय उवाच– शेखइलाहीबख्शो राजमन्त्रिपदमधितिष्ठति। स च साम्प्रतं राजकार्यं वशात् जोधपुरं गतः; अनुपस्थितौ च तद् भ्रातुष्पुत्रः करीमबख्शो राजकार्यं निरीक्षते। श्रुत्वैतन्महर्षिरुवाच– "न आर्यपुरुषैर्दासीपुत्रा यवना राजमन्त्रिपदे नियोक्तव्याः" श्रुत्वैतत् करीमबख्शोऽन्ये च तत्र स्थिताः पञ्चसप्त यवनजना अतीवक्रुद्धाः। नवदिनानन्तरमेतेस्वकाज़ी-(सम्प्रदायगुरुं)-महोदयं पुरस्कृत्य महर्षिमुपागताः, क़ाज़ी चापृच्छत्—

"स्वामिमहाभाग! कथं भवान् दासीपुत्रानस्मान् ब्रवीति?" महर्षिरुवाच– निरीक्षन्तां कुरआनशरीफ़नामकं सम्प्रदायपुस्तकं युष्मदीयम्, इब्राहीममहोदयस्य द्वे स्त्रियावास्ताम्; एका हि विवाहिता सारा अपरा च दासी हाजरा, यां हि स स्वगृहे स्थितामरमत, अतः युष्माकं दासी पुत्रत्वे कः सन्देहः? काजी-उवाच- नहि

कुरआनशरीफ़पुस्तके लिखितमेतत्; समाधाने महर्षिः ब्रह्मचारिरामानन्दतः कुरआनपुस्तकं संगृह्योवाच—"पश्यन्तु तावत् सूरा अनकबूत (अनकबूत अध्याये) लिखितम् "तस्मिन्नेव वर्षे अल्लाहः (प्रभुवरः) इब्राहीममहोदयाय हाजरागर्भात्–(या च साराया दासी आसीत्) इस्माइलम् (नाभपुत्रम्) प्रायच्छत्" इति। श्रुत्वैतत् काजी उवाच "आसीत् पूर्वं सा दासी; परं पश्चात् निकाह-(विवाह)-कर्मणा साऽपि विवाहिता जाता। महर्षिरुवाच– "पुनरपि सा वस्तुतो दास्येव स्थिता, अतो युष्माकं दासीपुत्रत्वे कः संन्देहः? काजी निरुत्तरः; यवनाश्च सर्वे विमूढा इव स्थिताः।

**बनेड़ानगरे धर्मप्रचारः** – विंशतिदिनानि यावद् रायपुरनगरे धर्मप्रचारं कुर्वन् ठाकुरमहाशयस्य पित्रा प्रतिष्ठितबन्धुभिश्च सत्कृत्य विसृष्टो महर्षिः १९३८ तमसंवत्सरस्य भाद्रपदपूर्णिमायां ततः प्रस्थाय ब्यावरनगरमाजगाम। आगामिदिवसतो ह्येव दलबद्धाः श्रेणिबद्धाश्च दर्शनार्थिनो जना महर्षेः शुभागमनवृत्तमुपलभ्य पुण्यदर्शनार्थं समाजग्मुः। श्रीमहाराजस्य तत्र कतिपयप्रवचनान्यभूवन्। शृण्वन्तश्च श्रोतारः परमसन्तुष्टिमाप्नुवन्। द्वादशदिवसान् यावन्महर्षिः ब्यावरनगरमधिष्ठाय पुनः मसूदानगरमागत्य पञ्चदशदिनानि यावत् विश्राममकरोत्। ततोऽनन्तरे स बनेड़ानगरे सुशोभितोऽभूत्। देवदयानन्दस्य विभासमानं सौभाग्यमयं विशालभालस्थलम्, विगललोचनयोः स्वच्छस्निग्ध-कान्तिम्, कमनीयमुखमण्डलस्य समुज्ज्वलाभाम्, दिव्यदेहस्य दैवीं दीप्तिञ्च दूरत एव दर्शं दर्शं बनेड़ाधीशरावमहाशयस्य हृदयं भक्तिभावविह्वलमभूत्। प्रेमरसप्रपूर्णो हि स समीपमुपागतश्चरणस्पर्शपूर्वकं न्यवेदयत्; "भगवन्! श्रीचरणयोरत्रावस्थानमस्माकमतीवशुभसौभाग्यसूचकम्। भवतां पुण्यदर्शनेन कृतार्थं सकलमपि नगरम्। महर्षिप्रवरोऽपि कुशलमंगलयोगक्षेमादिप्रश्नपूर्वकं प्रश्नविशेषं किञ्चित्कर्तुं परामर्शयत्। बनेड़ाधीशश्च जीवब्रह्मणोर्विषये प्रश्नमकरोत्; यस्योत्तररूपेण महर्षिरुवाच "ब्रह्म जीवात्मनः पृथगवस्थितम्, यथा ह्याकाशः सम्पूर्णमन्दिरस्य बहिरन्तः परिपूर्णोऽवतिष्ठते; परं मन्दिरं ह्याकाशतो भिन्नमेवावतिष्ठते, एवमेव परमात्मनि जीवात्मसु रममाणेऽपि जीवात्मानः पृथगेवावतिष्ठन्ते। एकदा नरेशेन सह राजपण्डितोऽपि समुपस्थितः, वेदानां महीधरभाष्ये वार्तालापप्रसंगः प्रवृत्तः। स्वामिमहाभागश्च महीधरभाष्यस्य तथा खण्डनमकरोत्, यद् राजपण्डितो मौनमेवावालम्बत। महर्षिः धर्मप्रचारेणाऽपि बनेड़ावासिनां सुमंगलसाधने प्रवृत्तः। शतशः श्रोतारो जना धर्मप्रवचनेषु समागच्छन्।

एकदा हि चक्रांकितान् समालोचयन्महर्षिरुवाच "यदि ह्यंगस्यैकस्य दग्धीकरणेन स्वर्गः समुपलभ्यते तदा भर्जकस्य भ्राष्ट्रे भर्जनेन तत्कालमेव मुक्तिलाभो भवितव्यः।"

बनेड़ानिवासिषु धर्मामृतवर्षां विधाय १९३८तमसंवत्सरस्य कार्तिकशुक्ल-पञ्चम्यां तदनु १८८१ वर्षस्य-अकटूबरमासस्य षड्विंशतितारिकायां महर्षिप्रवर-श्चित्तौड़नगरं प्राप्य गम्भीरीसरितस्तटे खण्डेश्वरमहादेवमन्दिरे विराजमानोऽभूत्। तदानीं चित्तौड़नगरे महान् समारोहः प्रावर्तत। प्रधानाङ्गलशासक-(वायसराय)-लार्डरिपनमहोदयेन चित्तौड़नगरे विशालतमा राजसभैका समायोजिताऽसीत्। अनेके राजानो महाराजाश्चैकत्रिता अभूवन्। सत्संगस्य च महानवसर आसीत्। उदयपुरराज्यतो महर्षेरातिथ्यव्यवस्था व्यवस्थापिताऽसीत्। महर्षेः परमभक्तो राजकविः श्रीश्यामलदासो महर्षेरावासविश्रामयोः पूर्णव्यवस्थामकरोत्। राजपुत्राणां समूहेऽस्मिन् श्रीमहाराजः प्रतापदुर्गादासयोः सन्ततीनां दुरवस्थां द्रष्टुमवसरमलभत। कुतस्ते स्वतन्त्र- (स्वाधीन)-नरकेसरिणः क्व च परशासनान्तर्गताः (परशासिताः) इन्द्रियविषयदासभूता इमे शासकम्मन्याः। ऋषिवरो हि प्ररुदितहृदयेन राजस्थानदशामद्राक्षीत्। ये हि राजपुत्रशासकाः वीरभावे सर्वादर्शभूताः, अतुलात्मसम्मानिनः, स्वाधीनतायाः प्रतिमूर्तय इवासन् ते हि साम्प्रतं विलासग्रस्ताः, अहिफेनादिमादकद्रव्यसेविनः, आंगलशासनशृंखलाबद्धाश्च दृश्यन्ते। ऋषिभक्तः स्वामी-आत्मानन्दो घटनामिमां वर्णयन् प्राह "एकदा महर्षिप्रवरः स्वशिष्यजनैर्वृतश्चित्तौड़दुर्गं द्रष्टुं गतः। पितृपरिवारजनवियोगोऽपि यस्य दयानन्दस्य लोचनयोरश्रुजलमानेतुं नाशकत्, चित्तौड़दुर्गदशां दर्शं दर्शं तस्यैव दयानन्दस्य लोचनाभ्यां धारासाराश्रुप्रवाहः प्रवृत्तः। तत्र हि ऋषिवरः शीतलं दीर्घञ्च निःश्वस्योवाच "ब्रह्मचर्यविनाशेन भारतवर्षस्य विनाशो जातः; ब्रह्मचर्योद्धारेणैव पुनः राष्ट्रोद्धारसम्भवः"।

**महाराणासज्जनसिंहस्य परिचयः**—महाराणासज्जनसिंहोऽपि महर्षेः सद्गुणसुमनःसुरभिं सम्प्राप्नोत्; हृदये महर्षिपुण्यदर्शनोत्कटलालसा समुत्पन्ना। एकदा प्रतिष्ठितराजमण्डलपरिवृतो महाराणामहाभागो महर्षिसेवामुपागच्छत्।

स हि सर्वमपि राजवृन्दमादिदेश, "अहं हि मौनभावेन महर्षिमुपस्थातु-मिच्छामि, नहि भवद्भिर्मे नामादिपरिचयः प्रदेयः, यतो नाहमेकस्मान्निस्पृह-संन्यासिनः स्वमानसम्मानमिच्छामि"। श्रीसेवामुपस्थाय श्रीमहाराणामहोदयः परोपकारपरायणं परमहंसं परमादरेण विनम्रनमस्कृतिमकरोत्, पार्श्वस्थितकाष्ठ-पट्टे चैकस्मिन् उपविवेश। तदानीं स्वामिमहाभागोऽत्युत्तमप्रकारेण राजधर्मम्, राजकीयकर्तव्यकर्माणि चावर्णयत्। अथच सर्वेऽपि राजश्रोतारः स्वमुखेभ्यो धन्यधन्यध्वनिं समुदचारयन्। अपरिपक्वघटे जलविन्दुरिव तदुपदेशस्य प्रतिवाक्यं महाराणामहोदयस्य महनीयमनसि समाविष्टम्। अनुपमप्रभावेण परिपूर्णं खलु तस्य हृदयम्। प्रवचनसमाप्तौ श्रीमहाराजः शाहपुराधीशं प्रति नेत्रज्योतिः

प्रसारयन् कुशलक्षेमवृत्तमपृच्छत्। पुनश्च महाराणामहाभागं संवीक्ष्य "न श्रीमतां पूर्वं साक्षात्कारो जातः, वर्णयन्तु स्वीयशुभपरिचयम्" इत्यब्रवीत्। प्रथमवारं मौनमास्थितोऽपि शाहपुराधीशः पुनः पृष्टः सन्नुवाच "एष हि मेवाड़ाधिपतिर्माननीयो महाराणा सज्जनसिंहः" इति। श्रुत्वैतत् स्नेहसिक्तवाचा महर्षिप्रवरोऽवदत्; "महाराणामहाभाग! मौनभावेन समागमनं सामान्यासनोपवेशनञ्च न हि भवते शोभास्पदम्"। महाराणातीवविनम्रभावेन न्यवेदयत्– "भगवन्! भवद्विधदेवपुरुषाणां समीपे सामान्यावस्थायां समागमनेन सामान्यासनपरिग्रहेण चैवास्मद्सद्गृहस्थजनानां कृते शोभास्पदं सौभाग्यवर्धकञ्च वर्तते। अन्यसभासु वयं राजकीयवेशभूषायामनिवार्यतया गच्छाम एव। तथैव बहिरंगसाजसज्जया यदि संन्यासिनां सत्संगेऽपि समुपगच्छेम चेत् को विशेषः? देव! इदमेवैकं महामहिमसर्वोच्चासनम्; यत्र समागताः शासनकर्तारोऽपि विनम्रतां शिक्षन्ते। तद्दिवसीय सत्संगेनातिप्रभावितः महाराणामहाभागो राजभवनं परावर्तत।

प्रधानांगलशासक-(वायसराय)- लार्डरिपनमहोदयस्य राजसभायां परिसमाप्तायां महाराणासज्जनसिंहो महर्षिप्रवरं स्वराजसभायां समामन्त्रयत्। महर्षेः पुण्यदर्शनं कुर्वन् महाराणा महोदयो नतमस्तकस्तस्य चरणयोरभिवन्दनमकरोत्; ससम्मानमासनग्रहणाय च सम्प्रार्थयत्; स्वयञ्च शिष्यभावेन तत्पार्श्वे समुपाविशत्। दयानन्दः सरस्वती महाराणामहाभागं राजनीतिं राजधर्मं चोपादिशत्; शिष्टाचारं सदाचारञ्च प्रत्यपादयत्; सुरासेवनं व्यनिन्दत्; वारांगनासंगदोषांश्चादर्शयत। दयानन्दसरस्वतीस्वामिनोऽनुशंसाविरहितानश्रुतपूर्वान् सदुपदेशान् शृण्वन् महाराणामहाभागोऽतितरां प्रभावितः। इतो यावन्न हि स एतावन्तं स्पष्टवक्तारमुपदेष्टारश्चापश्यत्। १८८१तम वर्षस्थदिसम्बरमासस्य चतुस्तारिकायां श्रीमहाराणा सज्जनसिंहः स्वयं महर्षेरावासमुपागच्छत्। परमश्रद्धया महर्षेश्चरणयोरुपविश्य राजधर्मनीतिविषये वार्तालापमकरोत्।

**मातृशक्तेः सम्मानम्–** कदाचिन्महर्षिप्रवरः कतिपयराजभिः राजपण्डितैश्च परिवृतो भ्रमणायागच्छत्। मूर्तिपूजाविषये युक्तयः प्रत्युक्तयश्च प्रचलिता आसन्। अग्रतश्च ग्रामीणजनानां देवालय एकः समागतः, यत्र हि बहवो लघुलघुबालाः (बालकबालिकाः) परस्परं सम्मिलिताः स्वच्छन्दं क्रीडापरा आसन्। महर्षिस्तत्राकस्मात् शिरो नतं विधाय प्राचलत्। सममेव गच्छता पण्डितेनैकेन प्रोक्तम्, स्वामिमहाभाग! यथेच्छं मूर्तिपूजनं खण्डयन्तु; परं देवप्रभावोऽपि प्रत्यक्षमनुभूयते, यतो देवालयसन्मुखं स्वयमेव भवन्मस्तकमपि नतमभूत्। शृण्वन्नेव श्रीमहाराजः पदमेकमप्यग्रतोऽगच्छन् तेषु बालकेषु क्रीडन्तीं विगतवस्त्रां चतुर्वर्षीयां बालिकामेकां निर्दिशन्नुवाच, न भवन्तो मातृशक्तिं तां पश्यन्ति, या च शक्तिः सर्वानस्मान् जन्मादात्। शब्दानेतान् शृण्वन्ती सर्वाऽपि जनमण्डली

स्तब्धाऽभवत्। सर्वे एव मौनमभजन्। आवासे समागमनं यावत्त एव शब्दाः सर्वेषां कर्णकुहरेष्वगुञ्जन्।

मुम्बई-आर्यसमाजस्य वार्षिककोत्सवे महर्षिणा गन्तव्यमासीत्। प्रस्थानदिवसे महाराणासज्जनसिंहोऽश्वयानं सम्प्रेष्य महर्षिं स्वराजभवने न्यमन्त्रयत्। भक्तिभावेन च तं सम्मानयन् महाराणामहाभागः पञ्चशतरुप्यकाणि समुपहरन् श्रीचरणौ च स्पृशन् प्रार्थयद् भगवन्! यथासम्भवं शीघ्रमेवोदयपुरे पुण्यदर्शनं प्रदेयम्। महर्षिरिदं प्रत्यजानात्।

**मुम्बई-आर्यसमाजस्य वार्षिकोत्सवः**— चिरकालतो महर्षिपुण्यदर्शन-पिपासुः-इन्दौरनरेशो बहु प्रार्थनामकार्षीत्, अतो महर्षिप्रवरो मुम्बईनगरमनुगच्छन् इन्दौरनगरं सम्प्राप्तः। संयोगवशात् नरेशोऽन्यत्र क्वचिद्गतोऽवर्तत, अतो न्यायाधीशः श्रीनिवासो महर्षिमतिसेवमानः शुश्रूषमाणश्च पूर्णातिथ्यमकरोत्। एकसप्ताहान्तं यावज्जनजीवनं सत्संगसुधाधाराभिरभिषिञ्चन् महर्षिः १९३८तम-संवत्सरस्य पौषशुक्लनवम्यां तदनु १८८१वर्षस्थदिसम्बरमासस्य त्रिंशत्तारिकायां मुम्बईनगरमनुप्राप्तः। मुनिवरे वाष्पयानपत्तने सम्प्राप्तेऽल्काटमहोदयसहिता अनेक-आर्यसभासदस्तस्य स्वागतार्थमुपस्थिता आसन्। यानतोऽवतरणे सर्व एव विनम्रप्रणामं विधाय तमभ्यनन्दन्। महर्षिरपि स्वमधुवर्षिणीवाचानुपमं प्रेमभावमभिवर्षन् सर्वेषां कुशलमंगलमपृच्छत्। ततो यानमारुह्य बालकेश्वरप्रदेशे गोशालास्थाने शोभायमानोऽभवत्।

अत्र ह्येतेष्वेवदिनेषु पादरीयूसुफमहोदय एकस्मिन् प्रवचने "क्रिश्चीनमतमेव-ईश्वरीयधर्मः, शेषा हि सर्वेऽनीश्वरीया धर्माः" इति स्थापयितुं प्रायतत। महर्षिः स्वप्रवचने पादरिणं शास्त्रार्थकृते समाह्वयत्, परं पादरीमहोदयो न प्रस्तुतः। ततः श्रीमहाराजेन सार्वजनिकव्याख्याने क्रिश्चीनमतं भृशं विखण्डितम्। मुम्बई-आर्यसमाजस्य महोत्सवोऽतिसमारोहेण सम्पन्नः। घटनाद्वयञ्चात्रोल्लेख-नीयमभूत्।

प्रथमा— महर्षिः थियोसोफिकलसंस्थया सममार्यसमाजस्य सम्बन्धविच्छेद-मुदघोषयत्, परिणामतोऽल्काटमहोदयस्य प्रभावः शिथिलीभूतः।

द्वितीया— मुम्बई-आर्यसमाजः पूर्वंनिश्चितनियमान् विहाय लवपुर-आर्यसमाजे निर्धारितान् नियमानङ्गीचकार।

**विभूतिदर्शनम्**— श्रीजनकधारीलालप्रभृतिकतिपयसज्जना महर्षेः पुण्य-दर्शनार्थं दानापुरतो मुम्बई-आर्यसमाजमहोत्सवे समागता आसन्। श्रीमहाराजेन समं मंगलमिलनेन मधुमयमनोहरवार्तालापेन च तेऽतितरां प्रमुदिता बभूवुः। महर्षिस्तानपृच्छत्— दानापुरतः प्रचलन्भवान् (श्रीजनकधारीलालः)

कांश्चित्प्रश्नान् पृष्टुं कामयमान आसीत्, साम्प्रतमवकाशस्थितोऽहमतो यथेष्टप्रश्नाः प्रष्टव्याः। अकथनेऽपि स्वामिना स्वमनःस्थितकामनाभिज्ञानाय तेऽतीवविस्मिताः। पुनश्च श्रीजनकधारीलालो महर्षेरावासाद् बहिरुपविश्य पूर्वचिन्तितप्रश्नान् प्रष्टुं लेखबद्धान् कर्तुमारभत। यथैव स प्रश्नं कञ्चिदलिखत्तदैव तस्योत्तरं मनसि प्रास्फुरत्। एवं हि तेन सर्वेऽपि प्रश्नाः पूर्वं लिखिताः प्रत्युत्तरस्फुरणे च परामृष्टाः। फलतो नैकोऽपि प्रश्नः समवशिष्टः। अथच स हि परमाश्चर्यमग्नोऽचिन्तयत्। "या हि युक्तयो वज्रशिला प्रतीयन्तेस्म ता हि तूलांशा इव स्वयमेवोत्पतिताः। प्रतीयते स्म यद् हृदयस्थ एवापूर्वतार्किकः कश्चित्प्रश्नान् समुत्तरति। तदैव बहिरागतो महर्षिः स्मयमानोऽपृच्छत्, लिखिताः प्रश्नाः? विस्मितो जनकधारीलालः सविनयमुवाच "भगवन्! नान्यत् किमपि प्रश्नार्थमवशिष्टम्, केवलमीश्वरोपासनाविधिं भवन्तो ब्रुवन्तु। महर्षिरुवाच-ईश्वरोपासनाविधिस्तु दानापुरे ह्येवाहमुपादिशम्; प्रतीयते, न भवान् तदनुरूपमाचरति।

**यमनियमपालनोपदेशः**— श्रीजनकधारीलालसहचरोऽपि कश्चिदुपासना-पद्धतिमुपदेष्टुं महर्षिं प्रार्थयत्, तस्य मुखे ज्वलन्तनेत्रज्योतिः प्रक्षिपन्महर्षिस्तं यमनियमपालनार्थमादिदेश। स हि वारत्रयं स्वप्रश्नमकरोत् परं महर्षिरपि त्रिवारमेव तस्मै यमनियमपालनमेवोपादिशत्। अनेनातिखिन्न उदासीनश्च स भद्रपुरुषः प्रकोष्ठाद् बहिरागत्य स्वसहचरैः सम्मिलितः साधिक्षेपमुवाच च "एतावद् दूरतः समागतोऽपि नहि स्फुटितवराटिकामप्यध्यगच्छम्" तत्सहचराः समुदबोधयन्— "महर्षिः मानवमनोगुप्तभेदानपि वेत्ति, यमनियमान् विहाय किं भवते समुपदेष्टव्यमिति भवानेव चिन्तयतु।" तदानीं स भद्रपुरुषोऽपि स्वपूर्वकृतं दुष्कर्म स्मरन् स्वमनसि अचिन्तयत् "एकस्मिन् बृहद्दायभागाभियोगे यदाहं मिथ्यासाक्षित्वं प्रयुज्य समागतः, अथ पुनश्च तथैव कर्तुं प्रवृत्तस्तदा मानसमर्माभिज्ञो योगिराजः समुचितमेव मामुपादिशत्; नाहमितोऽधिकस्य कस्यचिदुपदेशान्तरस्य पात्रम्।

**सर्वतः सत्यं योगशास्त्रम्**—कश्चिद् भद्रपुरुषो महर्षिमपृच्छत्; "भगवन्! किं सत्याश्रितः पातञ्जलयोगशास्त्रस्य विभूतिपादः?" महर्षिरुवाच— व्यर्थमेव भवान् सन्देहं करोति, अक्षरशः सत्यं हि योगशास्त्रम्। न खलु काश्चित्पौराणिकीकल्पनाः, अपितु क्रियात्मकमनुभवसिद्धञ्च शास्त्रम्। अन्यासु विद्यासु समुत्तीर्णतायै भवन्तो बहूनि वर्षाण्यतिवाहयन्ति परं मात्रमासत्रयं यावद् यदि मत्पार्श्वे वसन्तो योगशास्त्रं परिशीलयेयुः, योगक्रियासाधनाञ्चानुतिष्ठेयुस्त-दाऽस्य शास्त्रस्य सिद्धिं स्वयमेव साक्षादनुभविष्यन्ति।

**प्रभुकृपया शूकरा अपि हंसभावं प्राप्तुं प्रभवन्ति**— कदाचिद् भक्तप्रवर

एको न्यवेदयत् "भगवन्! योगादिशास्त्राणां परमगोपनीयगुप्तगहनभेदान् (रहस्यान्) अपि भवान् सर्वसमक्षमेवोपवर्णयति किं समुचितमेतत्? अपात्रेभ्यः (अनधिकारिभ्यः) उपदेशप्रदानं शूकराणां सन्मुखे मुक्ताविकिरणमिवानुचितमेव। श्रीमहाराजः समुदतरत्, भद्र! एतादृशे बृहत्समारोहे कदाचिद् हंसोऽपि कश्चिद् समागच्छत्येव, परं यदि परमात्मदेवस्य कृपाप्रसादः प्रसज्येत तदा शूकरा अपि हंसतां प्राप्तुं प्रभवन्ति।

**शूद्रोद्धारचिन्ता–** शूद्रजनोद्धारस्य संरक्षणस्यापि मुनिवरस्य मनसि महती चिन्ता प्रावर्तत। कदाचित् कश्चिद् भद्रजनो यदा तमुपागच्छत्तदा स तमपृच्छत्, भद्र! को भवान्? किञ्च कार्यमनुतिष्ठति? किं जानाति संस्कृतभाषाम्? सोऽवदत्; भगवन्! ब्राह्मणोऽहम्; कार्यजातं तु न किमप्यवशिष्टम्। केवलमवकाशोत्तरवृत्या जीवनं निर्वहामि। संस्कृतभाषां तु न जानामि परं कर्मकाण्डश्लोकानि कानिचित् कण्ठस्थीकृतानि, महर्षिस्तमुवाच- भद्रपुरुष "उपदेशकार्यं भवान् करोतु"। स न्यवेदयत् भगवन्! दिवानिशं बालजनभरणपोषणचिन्तनभारग्रस्तोऽहमुपदेशकार्यं कथं कर्तुं प्रभविष्यामि? महर्षिरुवाच– "अवकाशोत्तरवृत्तिप्राप्तो भवान्, तया हि वृत्या बालं पुत्रपौत्रादिपरिपालनं सुचारुरूपेण सम्भवमथ च ब्राह्मणवंशीयो भवान्, भवत्पुरातनपुरुषास्तु पुरा जगद्गुरवो विख्याताः; ते हि जगदुपकाराय स्वजीवनमपि व्यसृजन्। भवतोऽपि तेषां चरणचिह्नेषु प्रचलनमेव गौरवास्पदम्। स्वपूर्वजानिव परोपकारव्रतं गृह्णातु। कटिबद्धश्च सन् भीलवसतिषु प्रचरतु, साम्प्रतं हि ते निरन्तरं क्रिश्चीनमते दीक्षिता भवन्ति, तान् स्वेच्छानुरूपं प्रभुभक्तिमार्गमुपदिशतु, क्रिश्चीनदम्भजालतश्च परिरक्षतु। आर्यजातेः क्षतपदतलान्, भग्नायमानांगुलिसमूहान्, कर्तनप्रस्तुतपादांश्च परिरक्षतु, परं न तस्य ब्राह्मणस्य तादृशं भागधेयं, यो हि महर्षिवचनानि स्वीकुर्यात्।

**नाहं भवन्तं भिक्षुकं विधातुमिच्छामि–** मुम्बई-आर्यसमाजमन्दिर-निर्माणार्थं निधिरेक उपस्थापितः। भद्रजना यथाशक्ति दानमददुः। तदैव मारवाड़ी सज्जनः कश्चित् महर्षिमुपयातोऽब्रवीच्च, भगवन्! दशसहस्ररुप्यकाणि साम्प्रतमहं धारयामि; सर्वमेतद्द्रव्यमहमार्यसमाजमन्दिरनिर्माणकृते समर्पयामि, स्वीकृत्यानुगृह्णन्तु सामान्यराशिमिमम्। भक्तप्रवरस्य भावनां भूरिशः प्रशंसन् स्वामिमहाभागोऽवदत्, "भवद् हृदये आर्यधर्मस्यागाधप्रेमभावं प्रपश्यन्नहमतिप्रमुदितोऽस्मि, परं सम्पूर्णं धनराशिं स्वीकृत्य नाहं ते परिवारं परमुखापेक्षिणं परान्नपरायणं भिक्षुकं वा विधातुमुत्सहे। यस्य धर्माङ्गस्य पालनेन प्रथमं धर्माङ्गमेव विक्रियेत नहि स धर्मः प्रशस्यतमः। का खलु मन्दिरस्य तस्य शोभा भविष्यति यस्य निर्माणेन दानदातुस्ते व्यापारकार्यमेव विनश्येत्, गृहधर्मयात्रा चावरुन्ध्यात्, अतः एकसहस्र-

रुप्यकाणां दानमेवाहं भवतः स्वीकर्तुं शक्नोमि।

**मोनियरविलियम्समहोदयेन सम्मिलनम्**– तदानीमेव सुप्रसिद्धपश्चिमीयपण्डितो मोनियरविलियम्समहोदयस्तत्र स्थित एकदा महर्षिणा समं पुण्यसम्मिलनं प्राप्नोत्। पूर्वं संस्कृतभाषायां वार्ताक्रमः प्रारभत, परं यदा ह्यतिथिमहोदयोऽनभ्यासवशात् संस्कृतभाषणेऽसुविधामन्वभवत्तदा द्विभाषको हि कश्चिन्मध्ये स्थापितः। महर्षिः संस्कृतभाषायामेव सर्वं समुदचरत्; विलियममहानुभावकृत-इंगलिशभाषणस्य चार्यभाषायामनुवादं विधाय द्विभाषको महर्षिमध्यगमयत्। विस्तृतकथनोपकथनानन्तरं विलियम्समहोदयः श्रीमहाराजस्य मंगलमिलनप्रसंगेनातितरां प्रमुदितोऽवदत् "अतीवपरिमार्जिता, परमोच्चभूमिं गता च युष्मद्विचारसरणिः, योरोपवासिष्वपि विचारसरणिरियं प्रसारणीया, "यदि भवान् कृपया तन्महाद्वीपस्य यात्रा क्लेशं स्वीकर्तुमनुगृह्णीयात् सर्वमेव यात्रादिव्ययभारमहं स्वयं वक्ष्यामि इति। महर्षिप्रवरोऽतिथिमहाभागस्योदारतायै धन्यवादं वितरन् प्रोवाच– "यस्मिन् भारतभूमिभागेऽहं निवसामि अत्र-अविद्यान्धकारो घोररूपमावहंस्तिष्ठति, देशवासिनः प्रतिदिनं दुःखदारिद्र्यश्रेणिमभिगच्छन्ति। समाजे कुरीतीनां न कोऽपि पारावारः, अतः स्वदेशस्योद्धारकार्यमेवाहं परमं धर्मं मन्ये।

महर्षेरुत्तमोत्तमकार्येषु गोरक्षाकार्यमपि सम्मिलितम्। गोरक्षायां महर्षिः शतशः प्रवचनान्यकरोत्। सहस्रशो यवनजनान् क्रिश्चीनांश्च गोरक्षाया उपयोगितामध्यगमयत्। "गोकरुणानिधिः" नाम पुस्तकमपि प्रकाशितम्। अन्ततश्च गोरक्षकाणां वार्तासमितिमेकां निर्माय राजमहिषीं विक्टोरियां सर्वं निवेदयितुं समुद्यतोऽभवत्। अस्मिन् निवेदनपत्रे च कोटिशो भद्रपुरुषाणां हस्ताक्षराणि विधाय राजमहिषीसेवायां प्रस्थापयितुमैच्छत्, परं महर्षेरसामयिकनिधनेनापूर्णमेवोद्देश्यमिदमतिष्ठत्।

**पुनरुदयपुरेऽभिगमनम्**– मुम्बईतः प्रस्थाय खण्डवा-इन्दौर-रतलाम-जावरादिनगरेषु धर्मोपदेशामृतमभिवर्षयन् श्रीमहाराजश्चित्तौड़गढ़- नगरमभिप्राप्य द्विसप्ताहान्तं यावद् विश्रामं व्यदधात्। ततश्च प्रस्थाय १९३९तमसंवत्सरस्य श्रावणकृष्णद्वादश्यां तदनु १८८२ वर्षस्यागस्तमासस्य एकादशतारिकायां पुनरुदयपुरनगरमाजगाम। महाराणासज्जनसिंहो नौलखाउद्याने सर्वमावासप्रबन्धमकरोत्।

**महाराणामहाभागस्य जीवनपरिवर्तनम्**– श्रीमोहनलालविष्णुलाल-पण्ड्याप्रभृतिकतिपयसज्जनाः श्रीमहाराजस्य चरणयोरुपस्थाय शास्त्राध्ययनमारभन्त। तैरेव समं महाराणासज्जनसिंहोऽपि तस्यामेव श्रेण्यां सम्मिलितः।

संस्कृतभाषापरिज्ञाने पूर्वमभ्यस्तो महाराणामहाभागः शास्त्राध्ययने न काममप्यसुविधामन्वभूत्। महर्षिप्रवरो विशेषाग्रहेण महाराणामहोदयं मनुस्मृतेः राजधर्मप्रकरणमध्यापयत्। ततो हि राजधर्मानुशीलनं विधाय तस्य चक्षुषी समुन्मीलिते। स हि स्वजीवनस्यादर्शोद्धारमारभत। समयविभागं (दिनचर्याम्) निसचिनोत्– निरधारयत्। प्रातर्जागरणं समारब्धम्, सन्ध्योपासनानियमः सुप्रवृत्तः, सुरासुन्दरीणां(वारवनितानां)संगः परित्यक्तः; राज्यकार्यतोऽवशिष्ट-समये महाराणामहोदयो महर्षिसत्सङ्गं शास्त्राध्ययनञ्चाकार्षीत्। शनैः शनैः स वैशेषिकयोगदर्शनाध्ययनसम्पूर्तिमकरोत्। प्राणायामविधिश्चापि महर्षेरशिक्षत। महर्षिदयानन्दः प्रायोऽवदत् "प्रजानामुद्धारो राजसुधारकार्येऽवलम्बितः; यत्राऽपि सोऽवसरमलभत राजसुधारकार्ये प्रायतत। उदयपुरं प्राप्य स महाराणामहाभागस्य जीवनं परावर्तयत्। राजपुत्रेषु महर्षिः पूर्णविश्वस्तो विशेषतश्च महाराणाप्रतापस्य वंशजेषु स परमाशान्वित आसीत्, स्वल्पेनैव कालेन महर्षिः महाराणासज्जनसिंह-स्य जीवनपद्धतावाश्चर्यजनकं परिवर्तनमकरोत्।

**कदा भारतवर्षस्य पूर्णहितं सम्पद्येत**– कदाचित् श्रीमोहनलाल-विष्णुलालपण्ड्या न्यवेदयत्– "भगवन्! कदा भारतवर्षस्य सम्पूर्णहितं भविष्यति, कदा च जातीयसमुन्नतिर्भविष्यति?" महर्षिरुवाच– एको धर्मः, एको भावः, समानं लक्ष्यम्, इति निर्धारणेन विना भारतवर्षस्य सम्पूर्णहितम्, जातीयसमुन्न-तिश्चेति दुष्करं कार्यद्वयम्; ऐक्यं हि सर्वोन्नतीनां केन्द्रस्थानम्; यत्र हि भाषाभाव-भावनासु चैक्यं समापतेत्तत्र सागरे सरित इव सर्वाण्यपि सुखान्यैकैकशः प्रवेक्ष्यन्ति। अहमिच्छामि भारतराष्ट्रस्य सर्वेऽपि राजमहाराजाः स्वशासने सुधारं संशोधनं च कुर्वन्तु, स्वराज्येषु धर्मभाषाभावानामेकताम्-(समानताम्)-उत्पादयेयुः। तदा श्रीपण्ड्या प्रार्थयत्– "भगवन्! यदि ह्यैक्यसम्पादनमेव भवतामुद्देश्यमादर्शश्च तदा मतमतान्तराणां कठोरखण्डनं कथं भवान् विदधाति? एतेन हि वैरं विरोधो वैमनस्यञ्चैव प्रवर्धते। महर्षिरुवाच– "एकधार्मिकलक्ष्यं हि मे सार्वजनिकम्; न हि तत् संकीर्णतां नेतुं शक्यते। अपरतश्च भारतवासिनो हि तस्यां गाढनिद्रायां प्रसुप्ताः, यन्नह्येते मधुरशब्दैर्नेत्रोन्मीलने समुद्यताः, सुधारशब्दश्रवणेऽप्यशक्ताः। फलतः कुरीतिकुनीतीनां खण्डनस्यांकुशप्रहारेणाऽपि यद्येतेषां निद्राभंगो भवेत्तदपि परमेश्वरस्य धन्यवादमेवाहं करिष्यामीति।

पण्ड्यामहोदय! नहि कोऽपि देशो जनशून्यतां गच्छति; जनसंख्या तु प्रवर्तत एव; परं धर्मगुरूणां सामाजिकनेतॄणां चासावधानतया प्रमादेन-आलस्येन च भाषाभावभावनानामेकताचिह्नानि परिवर्तन्ते, जातीनामाचारविचारा परिवर्तिता भवन्ति, सभ्यतासंस्कृतिसरणिश्च भिन्नतां गच्छति। साम्प्रतमेतादृश एव कालोऽस्मिन् देशे समुपस्थितः। यदि सावधानतया न व्यवह्रियेत तदा

परिवर्तनचक्रग्रस्ता आर्यजातिः सरभसं स्वीयप्राक्तनपावनमूलस्वरूपमेव विहास्यति। आर्यजातेः पूर्वप्रमादेनैव कोटिश आर्यवंशीया यवनाः सञ्जाताः, साम्प्रतञ्च प्रतिदिनं शतशः क्रिश्चीना भवितुं प्रवृत्ताः। एतादृशे काले हि स्वधर्मबन्धून् कठोरहस्तैस्तेषां शिखाकर्षणेनापि जागरणमभीष्टं भवति। बन्धुवर! नाहमेतत् कठोरकर्तव्यं केनचित् स्वार्थसाधनेनानुतिष्ठामि, मत्कृते त्वेतस्य फलस्वरूपं सर्वत्रैवावहेलना-अनादरः, निन्दा कुवचनानि प्रस्तरेष्टिकावर्षणं विषप्रयोग एव स्थाने-स्थाने स्थीयते, परं धर्मबन्धुवात्सल्यमयीयं भावनैव मां विकटविपज्जालेष्वपि सततं समाजसुधारकार्येषु विनियोजयति प्रोत्साहयति च।'' श्रीपण्ड्या विनतनमस्कृतिपूर्वकं स्वामिमहाभागस्य हार्दिकमनुमोदनमकरोत्, अब्रवीच्च– ''भगवन्! द्वित्रा अपि यदि भवद्विधा धर्माचार्या भवेयुस्तदा स्वल्पसमयेनैवार्यजातेः समुद्धारो भवितुं शक्यः।''

**एकेनैव धावनप्रयासेन बहिर्गन्तुं शक्तः**– एकदैकान्त एकाकिनि च स्थिते मुनिवरे महाराणामहोदयस्तत्र समागतः सविनयञ्च प्रार्थयत् ''भगवन्! मूर्तिपूजायाः खण्डनं भवान् विजहातु, इदं हि राजनीतेः सर्वसंग्रहसिद्धान्त-विरुद्धम्; अथच यदि गुरुवर एतत्स्वीकर्तुं प्रसीदेत्तदैकलिङ्गमहादेवमठाधिष्ठानं भवदर्पणं भविष्यति, इदं मेवाड़राज्यमपि तदर्पितमेव; एवमपि मन्दिरकृते राज्यस्य भूयान् सम्पद्भागः समर्पितः, यस्यागमोऽपि लक्षशो वार्षिकं विद्यते। सर्वमेवैश्वर्यजातमिदं भवदर्पितं भविष्यति; 'राजगुरुः'-रूपेण च श्रीमान् सम्मानयिष्यते'' इति। महाराणामहोदयस्य विनिवेदनं शृण्वन्नेव सम्भृतमन्युर्महर्षिस्तमुवाच– श्रीमहाराणामहाभाग! तुच्छतमसांसारिकैश्वर्यप्रलोभ-नेनानेन भवान् परमात्मदेवतो विमुखं मां कर्तुमिच्छति? सर्वशक्तिमतस्तस्य सर्वेश्वरस्याज्ञाभंगं कर्तुं निर्दिशति? धर्मपथादपेतं विधातुं कामयते? महाराणा-महोदय! स्वल्पीयसो यस्माद् भवद्राज्यशासनान्मन्दिरपरिसराच्चैकप्रधावनप्रयासे-नैवाहं बहिर्गन्तुं शक्नोमि तद्धि न मामनन्तेश्वराज्ञाभंगाय विवशीकर्तुं समर्थम्, परमात्मदेवस्य परमप्रेमभावस्य तुलनायामतितुच्छतमा ते मरुभूमिमाया-मरीचिका। लक्षशो भद्रपुरुषाणां सुस्थितं मयि धर्मविश्वासस्थैर्यम्। न कदापि भूय एतादृशवाक्यप्रयोगस्य साहसो विधेयः; नानयोर्धराधामगगनयोरन्तराले किमपि वस्तुजातं मे ध्रुवां धर्मधारणां विचालयितुं समर्थम्।

महाराणामहोदयो महर्षेः सत्यपूर्णविशेन, सूर्यसमतेजस्विमुखमण्डलेना-तितरां प्रभावितोऽतीवाश्चर्यचकितश्च जातः, स हि बद्धाञ्जलिः प्रार्थयत्, ''देव! क्षमस्व सर्वमेतत्, भवन्निश्चयस्थिरतां परीक्षितुमेव सर्वमिदं कथितमासीत्; साम्प्रतं पूर्णविश्वस्तोऽहं न किमपि सांसारिकं वस्तुजातं भवद्दृढतां विचालयितुं क्षमम्; ध्रुवो हि युष्माकं विनिश्चयः।''

**धर्महीनतापेक्षया भिक्षाटनं श्रेयः–** एकदा महाराणामहाभागं मनुस्मृतिपाठं पाठयन्महर्षिरुवाच "यदि ह्यधिकारी कश्चिद् धार्मिकमादेशमादिशेत्तदैव तस्य पालनमावश्यकम्, अधर्मयुक्तकथनं न कदापि सम्माननीयम्" इति। श्रुत्वैव सरदारगढठाकुरः श्रीमोहनसिंहो न्यवेदयत् "भगवन्! कथमिदं सम्भवम्; अयं हि महाराणामहाभागोऽस्माकं भूपाल;, यद्येषोऽस्मान् किञ्चिदादिशेदथ वयञ्चाधर्मयुक्तं तदादेशं गन्यमाना न परिपालयेम तदाऽस्माकं तु राज्यच्युतिरेव प्रसज्येत।" महर्षिरुवाच, न काऽपि चिन्ता, धर्मार्थं यदि धनं प्रभुत्वञ्चाऽपि विनश्येत्तदपि गौरवाय, परं धर्महीनतापेक्षया अधर्मकार्यकरणेन ऐश्वर्यप्राप्तेरपेक्षया च भिक्षान्नभोजनमेव श्रेयः।

**महिषपशूनामधिवक्ता–** महर्षेरुदयपुरप्रवासावसरे दशहरामहोत्सवः समापतितः। पर्वेदं तत्रातिसमारोहेण सम्मान्यते। महाराणामहोदयस्य शोभायात्राऽतिसमारोहेण साजसज्जाभिश्च प्रवर्तते। तदैव कतिपय महिषपशूनां बलिदानमपि भवति। महाराणामहोदयस्य प्रार्थनया ऋषिवरोऽपि महोत्सवं द्रष्टुं समागतः। तदैव सोऽभ्यजानात् यदत्र बहूनां महिषपशूनां बलिदानमपि भविष्यति, अतः स महाराणामहाभागमकथयत् "नरेशो भवान्,न्यायानुष्ठानञ्च भवतां कर्तव्यं कर्म, अहं हि वध्यमहिषपशूनामधिवक्तृरूपेण श्रीमदभिमुखं प्रस्तुतः पृच्छामि, न्यायाधीशेन भवता निर्णयः प्रदेयः कथं तेषां वधः समुचितः? चिरं यावद् वार्तालापः प्रवृत्तः, अन्ततो महाराणामहाभागः सविनयमुवाच "भगवन्! परम्पराप्रचलिता प्राचीनपरिपाटीयं प्रवर्तते; न चाकस्मात्परिच्छेत्तुं शक्या, न चाकस्मात्प्रतिबन्धोऽपि समुचितः, परं निश्चितमेव भवदादेशेन शनैः शनैः परिहरणीयैषा।

**अयं हि आर्यसमाजः–** इत एव पत्रे-एकस्मिन् श्रीमहाराजः फर्रुखाबादस्थितं श्रेष्ठिनं कालीचरणमलिखत् "न-आर्यसमाजपत्रे नाट्यविषयो मुद्रणीयः, अनुचितमेतत्, आर्यसमाज एष न भण्डसमाजः। यद् भवान् नाट्य-विषयान् मुद्रापयति भण्डव्यवहार एषः।

**परोपकारिणीसभा निर्माणम्–** महायोगिनो दयानन्दस्य दूरदर्शिनीदृष्टिः साम्प्रतं समीपमायान्तं जीवनावसानमपश्यत्। मेरठनगरतः प्रस्थानकाले महर्षिरार्यजनान् यत्समादिशत्तदुच्चारितवाक्यानि तस्य भविष्यदर्शनमभिव्यञ्जन्ति। स्वप्रवचने सोऽब्रवीत्—

"आर्यजनाः! नाहं शाश्वतस्थायी, विधातुर्न्यायनियमे क्षणभंगुरो मे देहः, कालो हि स्वकरालोदरे सर्वानेव चर्वति। अन्ततोऽस्य देहस्यापक्वघटोऽपि तस्य

कालस्य हस्तैरेव भग्नो भविष्यति; परिचिन्तयत, यदि स्वावलम्बनं नावलम्बयिष्यथ तदा मम नेत्रनिमीलने किं विधास्यथ? इत एव स्वात्मनः सुसज्जितान् कुरुत, स्वावलम्बनसिद्धान्तं धारयत; स्वकामनाः पूरयितुं प्रभवः भवत, अन्येषामाश्रयं विहाय स्वाश्रयेण तिष्ठत।" महर्षिः स्वहृदयेऽचिन्तयत्, को हि मम प्रयाणे धर्मधुरासंरक्षको भविष्यतीति।

बहुतरं संरक्षितुमासीत्, महर्षिरचिन्तयत् "समस्तेऽपि देशे प्रसृतानामार्य-समाजसंस्थानां केनाऽपि केन्द्रीयसंगठनेन भवितव्यम्; वेदप्रचारविषयेऽपि महर्षेरपरा चिन्ता प्रावर्तत; अथच महर्षिणा स्ववेदभाष्यस्य-अन्येषाञ्च ग्रन्थानां प्रकाशनाय मुद्रणाय च १८७९तमे वर्षे वैदिकयन्त्रालयः सुस्थापित आसीत्; अयं यन्त्रालयोऽपि इतो यावन्निराधार एवासीत्; महर्षिर्हि निरन्तरं भ्रमणशील आसीत्, अत आयव्ययलेखननिर्देशने सदैवास्तव्यस्तताऽवर्तत; संमुखमेव यद्येतत्सम्भवति ततो मरणान्तरे को विश्वासः? इतस्ततो मुद्रिता महर्षेर्विभिन्नग्रन्था अपि बहव आसन्, तेषामेकत्र संग्रहणं, संरक्षणञ्चापेक्षितमासीत्; सर्वाणि विषयाण्येतानि सुविचार्य निश्चित्य च महर्षिः सभामेकां निर्मातुमैच्छत्, या च तस्य परोक्षेऽभावे वा सर्वमेतत् संरक्षितुं प्रभवेत्। अतएव उदयपुरे निवसता महर्षिणैकेन स्वीकृतिपत्रेण समं परोपकारिणी-सभा विनिर्मिता। स्वीकृतिपत्रञ्च यथा—

"अहं हि (स्वामिदयानन्दः सरस्वती) निम्नाङ्कितनियमानुरूपं त्रयोविंशति-आर्यपुरुषाणां सभामिमां धनवस्त्रग्रन्थयन्त्रालयादिस्वीयसर्वस्वाधिकारं समर्पयामि; तच्च सर्वं वस्तुजातं परोपकारकार्येषु विनियोजनाय (विनियोजयितुम्) अध्यक्षरूपेणाधिकृतां कुर्वन् स्वस्वीकृतिपत्रमिदं विलिख्य प्रयच्छामि। यच्चावश्यकतासमये प्रमाणभूतं भवेत्"। एवं परोपकारिणी-सभा महर्षिणा स्वीयोत्तराधिकारिणीरूपेण सम्पादिता।

## अन्तिमं दृश्यम्

**शाहपुरायां पदार्पणम्**— उदयपुरतः प्रस्थाय चित्तौड़गढमनुभ्रमन्नृषिवरः फाल्गुनकृष्णामावास्यायां शाहपुरानगरमनुप्राप्तः, तत्र च राजकीयोद्याने सुशोभितोऽभूत्। सायंकाले शाहपुराधीशः श्रीमान् नाहरसिंहः सम्मानितराजपुरुषैः वृतः कुशलक्षेमप्रश्नार्थं महर्षिमुपातिष्ठत्। अत्र स्थितस्य महर्षेरधिकांशसमयो वेदभाष्यकार्य एव व्यत्यगात् (व्यतीयते स्म) किञ्चित्कालश्च भक्तजनेभ्यो धर्मोपदेशप्रदाने शंकासमाधाने चापि व्यतीतमकरोत्। सायंकाले षड्वादनतो नववादनपर्यन्तं शाहपुराधीशो महर्षिचरणयोरुपस्थाय शिक्षामग्रहीत्। होरैका धार्मिकशंकानिवारणार्थं नियतीकृता; होराद्वयञ्च शास्त्राध्ययनाय विनिश्चितमासीत्। समयेऽस्मिन् महर्षिप्रवरो मनुस्मृतिं, पातञ्जलयोगदर्शनं वैशेषिकदर्शनस्य कानिचिदंशानि च शाहपुराधीशमपाठयत्; प्राणायामविधिञ्चोपादिशत्। स्वामिनः सदुपदेशैः प्रभावितेन शाहपुराधीशेन राजभवने स्वेच्छानुरूपं यज्ञशालैका विनिर्मापिता, यत्र च दैनिकयज्ञः प्रावर्तत।

**अद्यावकाशो वर्तते**— एकदा दधिमथः कश्चित् स्वामिनमुपातिष्ठत्, तं वीक्ष्य महर्षिरुवाच; स्वागतं व्यासमहोदयाय; अद्य हि मेऽवकाशः, समं भवता वार्तालापप्रसारेऽतीवसुविधासम्भविष्यति। व्यासो न्यवेदयत् "भगवन्! बद्धजनानामेवावकाशः सम्भवति, भवान् हि परमहंसकोटिं प्राप्तः सदैव पूर्णस्वाधीनः, स्वच्छन्दश्च; भवत्कृते किं बन्धनमवशिष्टं येनाद्यावकाशः प्रवर्तते? महर्षिरुवाच— सर्वाण्यपि धर्मबन्धनान्यहं स्वीकरोमि; वर्णाश्रमेण नीतिरीतिभ्याञ्च नाहमुच्छृंखलतां निरंकुशतां वा गतः; स्वच्छन्दतापूर्वकमेव वेदभाष्यादिकार्यजात मनुतिष्ठामि; अद्य हि तत्कार्यताऽवकाशो विनिश्चितः।

**न शास्त्रार्थकृते समागतः** — रामस्नेहिनां महन्तं श्रीमहाराजो वारंवारं शास्त्रार्थकृते समाजुहाव, परं स्वासने स्थित एव गर्वोक्तिप्रसारणदक्षो महन्त-महोदयोऽनर्गलमुक्तिजालम्, निराधारकथासमूहम्, एव-अन्धसेवकजनानु पादिशत्; एतावदेव तस्येतिकर्तव्यम्; मुग्धः स शास्त्रार्थं धर्मसंवादं वा किमभिजानीयात्; अतः संवादो न प्रावर्तत।

**सशक्तसूक्ष्मघ्राणशक्तिः**— महर्षेरावासे पवनं शीतलीकर्तुं खसपट्टिकाः समावृता आसन्; मध्याह्नोत्तरं भीषणोष्णपवनप्रवाहः प्रावहत्; यदा भीषणो ग्रीष्मोत्तापः सपवनं भूमेरपि वातावरणमग्निमयम् (उत्तापकरम्) अकरोत्, तदा हि तासु खसपट्टिकासु जलप्रवाहः परिषिच्यते स्म; येन सर्वमपि कुटीरस्थं पवनं सुशीतलं सुगन्धितञ्चाभूत्। एकदा हि मध्याह्नावसरे यदा पट्टिकासु सलिलप्रवाहोऽभिषिक्तस्तदा महर्षिरुवाच— दुर्गन्धः कुतश्चित् प्रवर्तते? सेवकजना इतस्ततः

सर्वत्र भ्रमन्तो न किमपि दुर्गन्धकारणं वस्तुजातमपश्यन्। पट्टिकासु जलसेचनार्थैकस्मिन् विनिर्मितजलकुण्डे जलं सुरक्षितमभूत्। प्रतिदिनं तस्य पुरातन-(सञ्चित)-जलं विनिष्कास्य नवजलं प्रपूरितमभूत्। स्वामिमहाभागः सेवकं समाहूयापृच्छत्; किमद्य पट्टिकासु सञ्चितं जलं संसिक्तम्? सेवक आह–भगवन्! यद्यपि जलकुण्डतः सर्वमपि सञ्चितं जलं निष्कासितमासीत्; परं कदाचिदेकार्धघटपरिमाणमितं जलमवशिष्टमभविष्यत्; ततश्च प्रायः शतघटपरिमाणं जलं तत्र प्रक्षिप्तम्। तदा श्रीमहाराजोऽब्रवीत् "तस्यैवैकघटपरिमाणमितावशिष्टजलस्य दुर्गन्धोऽयं प्रवर्तते; अतः सर्वा अपि पट्टिका अपसारयन्तु, न चाग्रतस्तादृशं संचितजलं पट्टिकासु परिसेचनीयम्।" महर्षेः प्रबलघ्राणेन्द्रियशक्तिपरिचयमुपलभ्य भक्तजनास्तस्य योगबलम् ऐन्द्रियविषयसूक्ष्मविज्ञानशक्तिश्चाभ्यजानन्।

उदयपुरे धर्मोपदेशपरायणे मुनिवरे श्रीमहाराजप्रतापसिंह रावराजातेजसिंहमहानुभावयोराग्रहपूर्णान्यामन्त्रणानि सम्प्राप्तानि येषु जोधपुर-समागमनाय विनतविनयमासीत्; तयोराग्रहं प्रमाणयन् "शाहपुरतो जोधपुरं प्राप्स्यामः" इति महर्षिस्तान् समलिखत्। शाहपुरे चैव श्रीमहाराजयशवन्तसिंहस्यापि पत्रं सम्प्राप्तम्; यत्र महाराजेन १९४०तमसंवत्सरस्य ज्येष्ठकृष्णचतुर्थ्यां शनिवासरे प्रातर्दशवादनसमयः शाहपुरतः प्रस्थानसमयः विनिश्चितः। महर्षिं जोधपुरप्रस्थानाय प्रस्तुतं वीक्ष्य शाहपुराधीशः सविनयं न्यवेदयत्– "भगवन्! राजानो हि प्रायः विलासग्रस्ताः स्वच्छन्दामोदप्रमोदपरायणाश्च भवन्ति। यत्र भवन्तः प्रयातुं प्रस्तुतास्तत्र हि वारांगनानां बाहुल्यम्, अतस्तत्र तासामालोचनं न कर्तव्यम्"। महर्षिरुवाच, "राजन्! नाहं बृहत्कण्टकवृक्षान् नखकर्तकेन कृन्तामि; तदर्थञ्चातितीक्ष्णानि शस्त्राण्यपेक्ष्यन्ते।" विसर्जनसमये शाहपुराधीशः सार्धद्विशतरूप्यकाणि श्रीचरणयोर्न्यवेदयत्। पञ्चाशतरुप्यकाणि प्रतिमासञ्चोपदेशकस्यैकस्य कृते प्रत्यजानात्।

**सत्योपदेशमेव करिष्यामि–** जोधपुरगमनावसरे-आर्यजना महर्षिं प्रार्थयन्; "भगवन्! जडबुद्धिजनबहुलं भवद्गन्तव्यस्थानम्, कदाचिद् भवत्सत्योपदेशेन ते विद्रोहिणो भवेयुः; अथचोपदेशमशृण्वन्तो न भवते क्लेशपरा बभूवुरिति विचिन्तनीयम्। अतस्तत्र गमनावरोधेनानुग्रहश्चेत् श्रेयः भविष्यतीति।" श्रुत्वैतन्निर्भयो महर्षिरुवाच "ममांगुलीनां वर्तिकाश्चेन्निर्माय तत्रत्यजनाः प्रज्वालयेयुस्तदापि तत्रावश्यं गतः सत्योपदेशं करिष्यामि। सत्योपदेशे सर्वत्र विश्वात्मा मे संरक्षकः।

**नृपतेर्णो बलं बलम्–** शाहपुरातः प्रस्थाय रात्रिमेकाम्-अजमेरनगरे व्यतीत्य महर्षिः पाली-वाष्पयानपत्तने सम्प्राप्तः। ततश्च महर्षिप्रवरं जोधपुरं

प्रापयितुं जोधपुरनरेशेन एको गजराजः, त्रय उष्ट्राः, त्रयश्च रथाः, एका च शिविका तत्र सम्प्रेषिताः। रोहटनगरे किञ्चिद् विश्रम्यापरदिवसे जोधपुराय प्रस्थानमभवत्। क्रोशत्रययात्रावशिष्टे जोधपुरे मुनिवरः उषोवायुम् (प्रातःपवनम्) अभिसेवितुं पदातिरेव प्राचलत्। जोधपुरनरेशेन मुनिवरस्य स्वागतोपचारार्थ-मुत्तमः प्रबन्धो व्यधायि। रावराजा जवानसिंहो महर्षेः स्वागतार्थं रातानाडापर्यन्तं पदातिरेवागच्छत्। कर्नलप्रतापसिंहो रावराजातेजसिंहश्च तस्य देवपुरुषस्य स्वागतार्थं प्रासादद्वार एव प्रतीक्षेतेस्म। तौ हि दूरतो ह्येवापश्यताम्— काषायवस्त्रयुतः, हस्तधृतदण्डः, विशालकायः, धीरगम्भीरगतियुतः संन्यासी पदातिरेव प्रचलन्नायाति। समुन्नतविस्तृतललाटम्, तप्तस्वर्णगौरवर्णम्, तेजस्विमुखमण्डलम्, बालरविमिवानुपमकान्तिविभासमानम्, सुगठितमांसपेशि-संयुतस्वस्थदेहम्, मृदुहासस्फुरिताधरम्, भव्यमूर्तिं तं यतिवरं वीक्ष्य सहसा स्तब्धयोः द्वयोरेव स्वागतार्थिनोर्मुखाभ्यां महर्षेर्विश्वामित्रस्य शब्दा इमे मुखरिताः "धिग्बलं क्षत्रियबलं ब्रह्मतेजो बलं बलम्" इति। ब्रह्मतेजसोऽस्य सम्मुखमतितुच्छा नगण्या चैव क्षत्रियबलशक्तिरिति। अतिसम्मानितो महर्षिप्रवरो मियांफैजुल्लाखांमहोदयस्योद्यान आवासितः। जोधपुराधीशसमादेशतश्चारण-नवलदानः सेवकचतुष्टयेन समं श्रीसेवायामुपस्थितः; षट् सैनिकैश्च सहारक्ष्युपाध्यक्षः प्रहरिरूपेण नियुक्तः; महर्षेः पयःपानाय सुरभिरेका तत्र समानीता; रावराजातेजसिंहश्च स्वयं महर्षिसेवाशुश्रूषासंभारनिरीक्षणाय नियुक्तः (नियतीकृतः)।

**महाराजयशवन्तसिंहस्य महर्षिचरणयोरभ्यागमनम्—** महर्षेरावास-भोजनयोः सुव्यवस्था सञ्जाता; पूर्वं किञ्चिदस्वस्थो जोधपुराधीशो महाराजयश-वन्तसिंहः स्वास्थ्यलाभानन्तरं ससमारोहं महर्षे पुण्यदर्शनार्थमुपस्थितः। स हि समीपमुपस्थाय चरणस्पर्शपूर्वकं सविनयमभिवादनमकरोत। शतरुप्यकाणि पञ्च स्वर्णमुद्राश्चसमुपाहरत्। तत्र हि बृसीनां सुव्यवस्थायां सत्यामपि महर्षिणा बृसी-उपवेशननिर्देशेनाऽपि च विनीतो जोधपुराधीशो भूमावेवोपाविशदुवाच च "भगवन्! भवान् हि अस्माकं स्वामी, वयञ्च सेवकाः, अतो भवदभिमुखं भूमावेवोपवेशनं श्रेयः। भवत्सेवायां निम्नासनोपवेशनमेवास्मत्कृते शोभास्पदम्। भूमावुपविष्टं नरेशं वीक्ष्य महर्षिरुत्थाय हस्तेनाभिगृह्य तं बृस्यां समुपावेशयत्। कुशलक्षेमप्रश्नानन्तरं महाराजो वेदामृतोपदेशं श्रोतुमैच्छत्। महर्षिश्च मनुस्मृतेर्रा-जधर्ममुपादिशत्। स्वदेशप्रेम, प्रजापालन-न्यायव्यवस्थादिविषये समुचितं परामर्शमदात्। देशद्रोहपरस्परद्वेषादिदोषानदर्शयत्; होरात्रयं यावन्महर्षिवरो राजनीतितत्त्वानि समुदबोधयत्। परावर्तनसमये महाराजयशवन्तसिंहो न्यवेदयत्; "भगवन्! भवतामत्र पदार्पणमस्माकं सौभाग्योदयस्य शुभसूचकम्,

श्रीचरणेषु प्रार्थ्यते– अत्रावासं यावज्जनवर्गः सदुपदेशामृतेन कृतार्थयितव्यः।

अपरदिवसादेव महर्षिर्विविधविषयोपदेशामृतवर्षामुदघोषयत्; आवासीय-भव्यभवनस्य प्रांगण एव प्रवचनव्यवस्थाव्यवस्थापिता; सायं चतुर्वादनतः षड्वादनान्तं यावत् प्रवचनसमयो विनिश्चितः। प्रथमप्रवचनार्थं गन्तुमुद्यते मुनिवरे रावराजा तेजसिंहः प्रार्थयत्; "भगवन्! न महाराजस्य जीवनचर्याविषये किमपि वाच्यम्"। महर्षिः सबलमुवाच; किमसत्यानुशंसायै भवान् मां प्रेरयति? स्मर्तव्यम्; यद् वक्ष्यामि, सत्याश्रितमेव तद् वक्ष्यामि; न च कथनं कदाचिदप्यसम्यतासूचकं भवति; अथच नाऽपि व्यक्तिविशेषस्य नामधेयं निर्दिशन् कर्णकटुकटाक्षं व्याहरामि। रावराजामहाभागो विनतोऽभवत्। महर्षिश्च प्रवचनमण्डपमधिगम्यैकस्मिन् सुन्दरसिंहासनेऽधिष्ठितः। तस्मिन् दिवसे महाराजं यशवन्तसिंहं विहाय राज्यस्य सर्वेऽपि उच्चपदाधिकारिणो राजकर्मचारिणश्च तत्रैकत्रिता आसन्।

**त्रिचतुरो राजपुत्रान् प्रोत्साहितान् बद्धपरिकराँश्चाकरिष्यम्–** महर्षिप्रवरः स्वप्रवचनेषु सर्वमतमतान्तराणां समालोचनामकार्षीत्; कियानपि सत्ताधीशः सम्मुखेऽस्थास्यत्, स हि प्रकरणानुरूपं तन्मतस्य भ्रममूलकविचारानाक्षिपत्। जोधपुरे यदा स यवनमतविषये समालोचनात्मकमभिभाषणमकरोत्तदा श्रीफैजुल्लाखांमहोदयस्य क्रोधज्वलनमतितरामवर्धत। स हि रोषाविष्टोऽवदत्– स्वामिमहाभाग! यावनसाम्राज्यञ्चेत्प्रचलितमभविष्यन्न भवान् जीवितो जागृतो वाऽस्थास्यत्; तदानीं भवतामेतादृशानि प्रवचनान्यपि नाभूवन्! महर्षिरतिगम्भीर-भावेन खांमहोदयं समुदतरत्; एतादृशेऽप्यवसरे नाहं कदापि भयभीतोऽभविष्यम्, निष्क्रियश्च नास्थास्यम्; परं निर्भयेन मनसा द्वित्रीन् वीरराजपुत्रान् प्रोत्साहितान-करिष्यम्, अथच विरोधिनो व्यदलिष्यम्। ते हि पराजिता अधोमुखा ह्येवास्थास्यन्। महर्षेरुत्तरेणान्तर्दग्ध इव श्रीखांमहाशयः समुद्विग्नोऽभवत्।

जोधपुरनिवासिनां कृते महर्षेः प्रवचनानि नवरूपाण्यासन्। स हि निराकारेश्वरोपासनम्, सदाचारम्, गोरक्षणञ्च सविशेषं प्रत्यपादयत्। बालविवाह-मृतकश्राद्धादिदूषितप्रथानां खण्डनञ्चाकरोत्। मूर्तिपूजनमृतकश्राद्धयोर्विखण्डनेन अत्रत्य पूजारिणः पुरोहिताश्च महर्षेर्विरोधिनोऽभूवन्। वेश्यावृत्तेश्च महर्षिः परमविरोधी, यावच्च जोधपुराधीशोऽत्रत्य धनपतयश्चास्मिन्नसाध्यरोगेऽतिग्रस्ता आसन्। क्षत्रियाणामाचारं धर्मञ्चोपदिशन् महर्षिप्रवरः कठोरशब्देषु वेश्यावृत्ते-र्विरोधमकरोत्। जोधपुरे साम्प्रतं चतुर्विधा जनशक्तयः स्थिताः। पुराणपन्थिनो हिन्दूजनाः, चक्राङ्किताः, यवनाः, भूसम्पद्धारिणश्च; सर्व एवैते कुरीतीनां खण्डनेन निहितस्वार्थकृते च दयानन्दसरस्वतीस्वामिनो विरोधिनो बभूवुः। एवं

तत्र महर्षेः शत्रूणां संख्या समवर्धत। एवमेवान्या घटनैका सञ्जाता या हि विरोधिनां बलमतितरामवर्द्धत। महाराजो यशवन्तसिंहो नन्हीजाननाम वेश्याया-मतितरामासक्तः। एकदा स्वनिश्चितनियमानुरूपं महर्षिर्यदा राजसभायामागच्छत्; गणिकाऽपि तदा महाराजस्य भवनमागतासीत्; महर्षेरागमनसमयमभिलक्ष्य यदा महाराजो गणिकां शिविकारूढां विधाय प्रेषयितुं प्रवृत्तः; तदा शिविकोत्थानात्प्रागेव महर्षिमायान्तमवलोक्य महाराजोऽतिस्तब्धः क्षुब्धश्च स्वयं स्वस्कन्धेन शिविकां समुत्थापयत्।

वारांगना तु निर्गता, परं तद् दृश्यं निरीक्षमाणस्य देवर्षेर्दयानन्दस्य दयमतितरामन्तर्व्यथितमभूत्; सामान्यतोऽपि स वेश्यासक्तिजन्यघृणितव्यसनस्य खण्डनमाकार्षीत्। शतशो हि पुरुषास्तेनास्मात् पापपङ्कतो दुर्व्यसनकर्दमाच्च समुद्धृताः। स हि महाराजमपि धर्मावेशभरितोऽब्रवीत्; "राजन्! नरकेसरिण इव राजानो मन्यन्ते, स्थाने स्थाने पर्यटन्ती च परिभ्रष्टा वारवनिता कुत्सितकुक्करीव, वीरशार्दूलस्य शुनीरूपया वारवनितया सममासक्तिः सर्वथाऽनुचिता, आर्यजातेः कुलमर्यादाविरुद्धा च; कुतः केसरिकन्दरायां कल्मषकलुषितकुक्करी सञ्चारः सञ्जातः? दुर्व्यसनेनानेन मानवो धर्मकर्मपथभ्रष्टो भवति। मानमर्यादा च कलङ्किता जायते। पापसोपानेऽस्मिन् प्रथमपदार्पणेनैव पुरुषाणां पुनः स्वयमेव पदेपदेऽधःपतनं प्रारभते, अतस्त्याज्यमिदं दुर्व्यसनम्।

नन्हीजानवारांगना पूर्णतोऽभ्यजानाद् यद् वेश्यासक्तिव्यसनविरोधे महर्षेरुपदेशाः सम्मोहनमन्त्रा इव प्रभाविनो भवन्ति। वर्षेभ्यो वारांगनाजालपति-तास्तदासक्तिग्रस्ताश्च महाव्यसनिनोऽपि तस्योपदेशश्रवणमात्रेणैव सुपथमायान्ति। सा हि इदमप्यजानात् यन्महर्षिणा सा कुक्करीसमा निरूपिता; अनेन प्रसंगद्वयेन तस्य हृदयं सर्पदंशज्वालामन्वभूत्। सा हि दिवानिशं विकटविद्वेषज्वरविषम-ज्वालाभिर्दग्धातिष्ठत्। घटनयाऽनया च नन्हीजानवेश्याया व्रणेषु लवणः प्रक्षिप्तः। सा हि महर्षेः प्राणहरणदुरभिसन्धिमभ्ययोजयत्। यवनाश्चक्राङ्किताश्च तया समं सम्मिलिताः। आंगलशासकानां प्रारम्भत एव महर्षेः सकलकार्यकलापेषु वक्रदृष्टिरासीत्। सर्वैरेव गुप्तमन्त्रणां विधाय पाचकजगन्नाथेन कालकूट-विषमिश्रितं पयः महर्षयेऽर्पितम्। १९४०तमसंवत्सरस्याश्विनकृष्णचतुर्दश्यां तदनु १८८३तमवर्षस्थसितम्बरमासस्यैकोनत्रिंशत्तमतारिकाया रात्रिकालस्य घटनेयम-वर्तत।

विषमिश्रितदुग्धपानानन्तरं किञ्चित्कालमेव प्रसुप्तो महर्षिः प्रबलोदरवेद-नाविषादेनोद्बुद्धः। स हि तस्यामेव व्याकुलतायां वारत्रयं वमनक्रियामकरोत्; स्वयमेव जलादिकमप्यभिगृह्णन्मुखशोधनादिकमकरोत्; न कोऽपि सेवकजनो

जागरणेन खेदितः। किञ्चिद् विश्रम्य प्रसुप्तः प्रातश्च विलम्बेन अजागरत्, उत्थिते पुनर्वमनक्रिया प्रवृत्ता। अनेन वमनेन किञ्चित्सन्देहग्रस्तः स स्वल्पजलपानानन्तरं पुनरपि स्वयमेव वमनक्रियामकरोत्। कर्मचारिवर्गमुवाच, अद्य हि-अस्वस्थता किञ्चिदनुभूयते; उदरवेदना संवहति; भवन्तोऽग्निं प्रज्वाल्य यज्ञहवनमनुतिष्ठन्तु, येन भवनस्यान्तःस्थपवनोऽपि परिशुद्धो भवेत्। तुरन्तमेव महर्षेरादेशोऽनुष्ठितः। महर्षेरुदरभागेऽतिविषमा भयंकरा च वेदना प्रवर्तिता। तत्प्रशान्तये तस्मै अजवायन आदिवस्तूनां क्वाथः प्रदत्तः अनेनाऽप्युदरवेदना न प्रशान्ता, अतिसारश्च प्रवृत्तः। महर्षिभक्तश्चिकित्सकः सूर्यमलो बह्वौषधोपचारम- करोत्, परं न कोऽपि लाभः प्रवृत्तः।

सायंकाले चतुर्वादनसमये महाराजः प्रतापसिंहो महर्षेः रुग्णताया वृत्तमलभत, स हि तत्कालमेव चिकित्सकम्-अलीमर्दानखाँमहोदयमौषधोप-चाराय नियोज्य सम्प्रेषयामास। तस्यौषधोपचारेण महर्षेरुदररोगो भयंकरतमं रूपमधारयत्। एकस्मिन्नेव दिवसे त्रिंशच्चत्वारिंशद् वारश्चातिसारः प्रवृत्तः; उदरशूलश्चापि यथावदेव स्थितमासीत्। मुखं शिरो मस्तकञ्च त्वक्छालकैरा-च्छन्नम्, हिक्काः प्रवृत्ताः, शरीरं कृशतरं जातम्; चिकित्सक-(डॉक्टर)- महोदयो महर्षिं चतुर्गुणमात्रामितामोषधिं प्रादात्। विरेचकौषधिभिः सहैव स हि सूचीयन्त्रे-णापि महर्षिशरीरेऽतिशयं विषप्रवेशमकरोत्। एतावद् भीषणं विषमं तीव्रश्चोदरशूलं महर्षिदेहे समुदगच्छद् येन सामान्यमानवो हि वेदनाविह्वलः प्राणान्तस्थितिमयास्यत्। स ह्यसीमधैर्येण तामसह्यां दारुणवेदनामसहत। न खलु आहकारोऽपि मुखान्निसृतः। अन्ततः स हि स्वयमेवान्वभवत्; यद् हलाहलविषमविषं तस्य देहस्य शिरानाडीरक्तबिन्दुषु च सर्वत्र प्रविष्टं जीवनशक्तिं शोषयति।

**अद्भुतक्षमा**— स्वदिव्यदृशा महर्षिर्विषदातारं जगन्नाथमभ्यजानात्; स हि स्वापराधमपि स्वीचकार; परं महर्षिस्तं 'त्वम्' शब्देनाऽपि न समबोधयत्; स हि गम्भीरभावेन दयाभावं प्रदर्शयन्नुवाच, जगन्नाथ! साम्प्रतं मम मरणेन सर्वमपि मे कार्यजातमपूर्णमेवावशिष्टम्; न त्वं वेत्सि त्वत्कृत्येनानेन कियती लोकहितहानिरभवत्, अस्तु। विधातुर्विधाने हीदमेव संघटनीयमासीत्। "जगन्नाथ! आदत्स्व, पञ्चशतरुप्यकाणीमानि कार्यसाधकानि ते भविष्यन्ति। इतः सत्वरं नेपालदेशं प्रयाहि।" देव दयानन्द! अद्भुता ते क्षमाशीलता! विष-प्रदातारं प्राणहर्तारमपि त्वं प्राणदानं ददासि, धन्योऽसि दयानन्द! मुहुर्मुहुः धन्योऽसि।

स्वल्पकालानन्तरमेव महर्षेर्वेदनाव्याधितारसन्देशाः लाहौर- मुम्बई-मेरठादिसामाजिककेन्द्रेषु समाचरन्; अनेके भक्तजना महर्षेरुग्णावस्थाया

वृत्तमुपलभ्य सर्वमपि कार्यजातं विहाय जोधपुरमाजग्मुः। तत्र च महर्षेर्दशां पश्यन्तस्तेऽतीवाश्चर्यान्विता जाताः। रोगावस्थाम्, उपचारशिथिलताम्, सेवाशुश्रूषाऽसुविधाञ्च पश्यन्त आर्यजनास्तं ततः "आबूपर्वते" गन्तुमाग्रहमकुर्वन्। श्रीसूर्यमलोऽप्यवाञ्छद् यज्जोधपुरराक्षसभूमेर्महर्षेः शीघ्रं निष्कासनमेव श्रेयः। अलीमर्दानखां सुतरामजानात्, यत्तस्य सूचीयन्त्रैर्यत्कार्यमनुष्ठितं तन्न कोऽपि परिमार्ष्टुं शक्यः। इतः स्थितस्य मृत्युना च-अपयश एव स्यास्यति, अतः स स्वामिनमाबूपर्वते समानेतुमनुमेने।

**आबूपर्वतेऽवस्थानम्**— संसूचितो महाराजयशवन्तसिंहोऽतीवदुःखितोऽभूत्; परं महर्षेराग्रहेण खिन्नमनसा आबूपर्वतं गन्तुं स्वीकृतिमदात्। तत्र च जयपुरराज्यभवने महर्षेरावासव्यवस्था व्यवस्थापिता, अक्टूबरमासस्यैकविंशति तारिकायां प्रातःकाले श्रीमहाराज आबूरोडस्थानं प्राप्नोत्, अत्र च किञ्चिद्विश्रामानन्तरं स शिविकायां शायितः, यावच्च शिविका आबूपर्वतस्थानं प्रत्यगच्छत्तावद् राजकीयातुरालयचिकित्सकः श्रीलक्ष्मणदासः सेवास्थानान्तरणेन-अजमेरनगरं प्रति प्रस्थित आसीत्। काषायवेषधारिणं शिविकाशयानं संन्यासिनमवलोक्य पृष्टे सति तेन विज्ञातम् "अयं हि प्रसिद्धपरिव्राजको महर्षिर्दयानन्दः सरस्वती, भयङ्कररोगग्रस्तश्च आबूपर्वतं गच्छति" इति। तदानीं स्वामिमहाभागश्चेतनाशून्यः (संज्ञारहितः) आसीत्। चिकित्सकमहोदयस्तस्य नाडीस्थितिं निरीक्ष्य 'अमोनिया' औषधस्य स्वल्पां स्वल्पां मात्रां वारत्रयमदात्। औषधप्रदानेन महर्षिणा लोचन उन्मीलिते, कथितञ्च, "अमृतं मां कश्चिददात्" इति। श्रीलक्ष्मणदासस्तदैव निश्चयमकरोत्; "ममाजीविका वृत्तिरभिवर्तेत न वा; अहं हिं महर्षिणा सममाबूपर्वतस्थ इमं परिचरिष्यामि चिकित्सां शुश्रूषाञ्च विधास्यामि; अथ च स स्वामिमहाभागेन सममेव परावर्तितः। तस्य चिकित्सया च महर्षिरपूर्वलाभमलभत। उदरशूलं प्रशान्तम्, अतिसारावरोधश्च जातः। अक्टूबरमासस्य चतुर्विंशतितारिकायां श्रीमहाराजो निद्रामप्यलभत।

राजस्थानस्य प्रमुखायुर्वेदाधिकारिणः कर्नलस्पैन्सरमहोदयस्यादेशेन डॉ० लक्ष्मणदासस्य कृते अजमेरगन्तव्यमासीत्, परं दयानन्दसरस्वतीसमदेवपुरुषस्य चिकित्सासेवाशुश्रूषासौभाग्यमपि कश्चिद् विरलभाग्यशील एव लब्धुमशक्नोत्; अतः स हि कर्नलस्पैन्सरमहोदयं महर्षिसेवाशुश्रुषार्थं मासद्वयस्यावकाशमयाचत; परं कर्नलमहोदयेन तस्य प्रार्थनापत्रमस्वीकृतम्। अथच श्रीलक्ष्मणदासेन सेवाकार्यतः स्वत्यागपत्रं प्रस्तोतुं विनिश्चितम्, परं यदा हि महर्षिरभ्यजानात् स हि तस्य त्यागपत्रं शकलीकृत्य प्राक्षिपत्; श्रीलक्ष्मणदासञ्च-अजमेरं गन्तुमादिशत्। धन्यं खलु देवदयानन्दस्य परहितचिन्तनम्! भक्तश्रीक्ष्मणदासस्य क्षुब्धं मनः नैनां स्थितिममन्यत; स हि पुनस्त्यागपत्रं विलिख्य कर्नलमहोदयाय प्रास्तौत्;

कर्नलमहोदयश्चापि त्यागपत्रं पुनरस्वीकुर्वन् तम्-अजमेरनगरं गन्तुमादिदेश, महर्षेश्चिकित्साभारश्च स्वयमग्रहीत्। कर्नलस्पैन्सरमहोदयस्य चिकित्सा महर्षेर्देहस्थितेरनुकूलतां नाभजत्। रोगस्थितिरुग्रतरा जाता। ऋषिभक्तो भूपसिंहः-अजमेरं गन्तुमनुरुरोध। श्रीमहाराजो विषमदेहावस्थायामस्यां भक्तजनान् कष्टं प्रदातुमनिच्छन्नपि तेषामनुरोधं स्वीचकार, अतः कार्तिककृष्णैकादश्यां तदनु अक्टूबरमासस्य षड्विंशति तारिकायामाबूतः प्रस्थाय अग्रिमदिने चतुर्वादनसमये ब्राह्ममुहूर्ते-अजमेरनगरं प्राप्तः। तत्र च आगराद्वारबहिर्वर्तिभिनाईभवने श्रीमहाराजस्य विश्रामव्यवस्था व्यवस्थापिता। डॉ० लक्ष्मणदासः पुनरपि चिकित्सार्थं समाहूतः, स्वास्थ्यव्यवस्थायामारोहावरोहः प्रवृत्तः, परं महर्षिप्रवरोऽन्वभवत् "सम्प्रति देहत्यागस्य समयः सम्प्राप्तः" विषप्रभावः सर्वस्मिन्नपि शरीरे परिव्याप्तः। उदरशूलेन समं कफ- (श्लेष्म)- प्रवाहोऽन्तर्दाहश्चाप्यवर्धत। सर्वमपि शरीरं त्वक्छालकैरभिव्याप्तम्।

दीपावलीतो दिनद्वयपूर्वं लवपुरतः पण्डितः श्रीगुरुदत्तः M.A. श्रीजीवनदासश्च महर्षेः पुण्यदर्शनार्थम्-अजमेरनगरं सम्प्राप्तौ। उदयपुरतो महाराणासज्जनसिंहः श्रीमोहनलालविष्णुलालपण्ड्यामहाभागं महर्षेः स्वास्थ्य-समाचारमभिगन्तुं प्रेषयामास; चिकित्साविषये सर्वां सावधानतां च निरदिशत्। सर्वेऽपि समागन्तुकमहानुभावा महर्षेर्गम्भीरावस्थां पश्यन्तोऽधैर्ययुताः स्तब्धाश्च बभूवुः। अस्यामातुरावस्थायामपि मुनिवरः स्वप्रशान्तदृशा सर्वेभ्यो धैर्यमदात्। कार्तिक-अमावास्यायां (अक्टूबरमासस्य त्रिंशत्तारिकायां) डॉ० लक्ष्मणदासो महर्षेर्जीवनधारणस्य सर्वामाशामत्यजत्। भक्तजनाननुरुरोध च "चिकित्सकेन केनचित्सुयोग्येन महर्षेर्निरीक्षणव्यवस्था कर्तव्येति।" ततः-अजमेरनगरस्य चिकित्सकः (सिविलसर्जनः) डॉ० न्यूमैनमहोदयः समाहूतः; स हि महर्षे रोगभोगस्थितिं निरीक्ष्य साश्चर्यमुवाच "अतीवसाहसिकः सहनशीलश्चायं देवपुरुषः, अस्य हि सर्वासु स्नायुषु रोमरोमसु च प्रविष्टाः रोगकृमयः कुलबुलायन्ते, परमतिशान्तचित्तोऽयम्, अस्य तनुपञ्जरं महाव्याधिज्वालाज्वलनं ज्वलयति, यद् दृष्ट्वा दर्शका अपि कम्पन्ते , परमयं प्रशान्तः शय्यास्थितोऽभिवर्तते, न किमपि देहसञ्चालनं देहप्रकम्पो वा दृश्यते। एतादृशविषमस्थितावपि जीवनधारणमेतादृशधैर्यधुरन्धराणामेव कार्यम्। तदा भक्तलक्ष्मणदासस्तमुवाच "महोदय! अयं महापुरुषो हि योगिराजो देवर्षि दयानन्दः सरस्वती।" श्रुत्वैतच्चिकित्सकोऽतितरां शोकाकुलो जातः। महर्षिस्तस्य मुख्यचिकित्सकस्य प्रश्नानां संकेतेनैवोत्तरमदात्। एको ह्यतिप्रसिद्धो यवनचिकित्सकः (पीरजी) अपि महर्षिं निरीक्षितुमागच्छत्; सोऽपि समागत एवावदत् "कश्चित् कुलकण्टकः कालकूटविषमस्मिन् प्रयोज्य स्वात्मानं कलङ्कितमकरोत्; अस्य देहे

सर्वाण्यपि चिह्नानि विषप्रयोगजन्यानि दृश्यन्ते। पीरजीमहाभागोऽपि महर्षेः सहनसामर्थ्यं निरीक्ष्य प्रदत्तदन्तांगुलिरुवाच "नैतादृशो धैर्यघनी धरणीतलेऽस्माभिः कश्चिदन्यो दृष्टः।"

**ईश्वरेच्छायाम्–** यद्यप्यतिगम्भीरा देहदशा परं दयानन्दः सरस्वती किञ्चित्स्वस्थमद्यात्मानमन्वभूत्। एकादशवादनसमये स शौचकर्मार्थं गन्तुमैच्छत्। चतुर्जनाश्रयेणोदतिष्ठत्; निवृत्ते सति पुनः पर्यङ्के प्रस्वापितः। सम्प्रति तीव्रा श्वासप्रश्वासगतिः, भक्तजना अपृच्छन्; कीदृशं भवन्तोऽनुभवन्ति? प्रशान्तभावेन महर्षिरुवाच; अद्य हि सुचारु किञ्चिदनुभवामि; एकमासानन्तरं यावदद्य हि विश्रामदिवसः। लाला-जीवनदासोऽपृच्छत्; क्व भवान्? महर्षिराह—ईश्वरेच्छायाम्; चतुर्वादनकाले शिष्यप्रवरम्-आत्मानन्दमाजुहाव, स्वपृष्ठे शिरः समीपमुपवेष्टुमादिश्यापृच्छत्; किमिच्छसि-आत्मानन्द? स उवाच, भगवन्! प्रार्थयामि परमं प्रभुवरं पूर्णस्वस्था अत्रभवन्तो भवन्त्विति। मुनिवरस्तं सान्त्वयन्नुवाच, "पञ्चभौतिकोऽयं देहः किमस्य पूर्णस्वस्थत्वं भविष्यति।

पुनस्तस्य शिरसि शुभाशीषहस्तं स्पृशन् "सानन्दं जीव" इति शुभाशिषं प्रादात्। काशीतः स्वामिगोपालगिरिरपि महर्षिदर्शनार्थमुपागत आसीत्। तस्मै अपि शुभाशिषं व्यतरत्। ततश्च द्विशतरुप्यकाणि शालवस्त्रद्वयञ्चोपादायात्मानन्दभीमसेनाभ्यां प्रदातुमादिदेश। सुदूरप्रदेशेभ्यः समागताः सर्वेऽपि भक्तजनाः शोकार्द्रचेतसः श्रद्धाभावेन स्वगुरुवरस्य सम्मुखमुपातिष्ठन्। महर्षिश्चोपदेशमिव प्रयच्छन् सकरुणदृशा सर्वानपश्यत्, अब्रवीच्च "भक्तप्रवराः!" साहसं धैर्यञ्च धारयन्तु; धीरैः सर्वैर्भाव्यं न किमपि शोककारणम्; नाशवानयं देहः। महर्षेर्मुखमण्डलं प्रशान्तं प्रसन्नञ्चासीत्; न किमपि दुःखशोकयोश्चिह्नम्। न किमपि क्रन्दनम्, अतिधैर्येण भक्तजनैः समं वार्तालापमकरोत्। अस्मिन्नेव समये-अलीगढ नगरतः श्रीमहाराजस्य सर्वप्रथमभक्तशिष्यः पण्डितसुन्दरलालोऽपि स्वगुरुवरपुण्यचरणदर्शनार्थम् अजमेरनगरमागच्छत्।

पञ्चवादनानन्तरं महर्षिः सर्वानपि समागतभक्तजनान् स्वपृष्ठभागे स्थातुं समादिशत्। द्वाराणि वातायनाश्च सर्वाण्यनावृतानि; अपृच्छच्च; "कतमोऽद्य मासः पक्षः दिवसश्चेति" भक्तवरः कश्चित्समुदतरत्; "भगवन्! अद्य हि कार्तिकमासस्यामावास्यादिवसः, मंगलवासरश्चेति" श्रुत्वैतन्महर्षिरूर्ध्वदृष्टिपातमकरोत्; पुनश्च सर्वतश्चमत्कारपूर्णदृशाऽपश्यत्; वेदमन्त्राणाञ्च पाठं पठितुमारभत। किञ्चित्कालं वेदमन्त्रान् पठन् संस्कृतभाषायामीश्वरस्तुतिमकरोत्। प्रभुगुणगानेन सममानन्दमग्नो गायत्रीमहामन्त्रं समुदचरत्। प्रशान्तसमाधिस्थश्च जातः। पुनर्लोचने उन्मील्य "ओ३म्" पदस्योच्चारणमकरोत्; अकथयच्च—

"हे दयामय! सर्वशक्तिमन्! सर्वेश्वर! इयमेव तवेच्छा; इयमेव तवेच्छा; पूर्णा तवेच्छाऽस्तु; अत्यद्भुता हि तव लीला" इति।

शब्दैरेतैः स्वयमेव स्वपार्श्वपरिवर्तनमकरोत्; पुनरेकवारं प्राणानवरुध्य सदैवार्थं बहिर्निरगमयत्। दीपमालायाः दिवसे सायन्तनषड्वादनसमये देवर्षिः दयानन्दसरस्वतीमहाभाग इहलोकलीलां परिसमाप्य ज्योतिर्मयस्य शरणमगच्छत्।

भक्तजनाः स्तब्धा इवापश्यन्, पाश्चात्यविज्ञानाध्ययनपरः पण्डितो गुरुदत्तो विद्यार्थी प्रथमवारमेव पुण्यदर्शनार्थं दयानन्दसरस्वतीमुपागच्छत्; परमशक्तौ परमेश्वरे स्वल्प एव विश्वासः, अयमपि भक्तजनैः सममस्य योगिनो लीलां निरैक्षत। असह्यवेदनायामन्तर्दाहेऽप्यानन्दमग्नोऽयं योगी दृश्यते। काचिद् दिव्यशक्तिर-स्याह्वानमिव करोति। अयञ्च प्रमुदितमनास्तस्य शरणमुपगच्छति। समीपस्थितोऽ-प्यन्तको निरीक्षते। अयं योगी शाश्वतरूपेणामृतपदं प्राप्नोति। गुरुदत्तोऽप्यस्या दिव्यशक्तेर्दर्शनमलभत। तमो विच्छिन्नम्। दिव्यज्योतिषोऽन्तःप्रवेशोऽभवत्। अद्यप्रभृति स हि पूर्णास्तिक आसीत्।

सर्वेषामपि भक्तप्रवराणां लोचनानि योगिनोऽस्य वेदनामयविसर्जनेनाश्रु-पूर्णान्यासन्। परमस्य विसर्जनस्य दिव्यं दृश्यं दर्शं दर्शं ते हि स्वहृदयेष्वद्भुत-ज्योतिषःप्रवेशगौरवमन्वभूवन्। यद्यपि तेषां मृन्मयगृहेष्वद्य हि पूर्णोऽन्धकारस्तथापि हृदयेषु दीपमालाया अक्षयः प्रकाशोऽवर्तत।

आगामिनि दिवसे योगिनोऽस्य देहस्यान्त्येष्टिक्रियाव्यवस्था समारब्धा। काष्ठमयं शवशयनपट्टं कदलीपत्रैः पुष्पैश्च सुसज्जीकृतम्। शरीरे (देहे) चन्दनं प्रलिप्तम्। शवयात्रायाम् अजमेरस्थितजनसमूहेन सममेव तत्र स्थिता बंगीयाः, पाञ्चालाः, दाक्षिणात्याः, अन्ये च भक्तप्रवराः बहुसंख्यायां सम्मिलिता अभूवन्। श्रीहरविलासशारदा महाभागोऽपि सह एवावर्तत। श्मशानघाटस्थलेऽन्त्येष्टिक्रिया निमित्तं विशेषरूपेण वेदी विनिर्मिता। सम्पन्नायां वेद्यां भक्तजनैः द्विमनपरिमाणमितेन चन्दनेन, दशमनपरिमाणमितैः पिप्पलकाष्ठैश्च चिता समाचिता। ततश्च कथं कथमपि स्वभग्नहृदयानि स्तम्भयन्तो भक्तजना गुरुदेवस्य शवं तस्यान्तिमशय्या-यामस्वापयन्। रामानन्द-आत्मानन्दश्च यथाविधि अग्न्याधानमकुरुताम्। अग्निस्पर्शेणैव घृतसिञ्चिता चिता ज्वालमालाभिरावृताऽभूत्। तस्मिन् दाहकुण्डे चतुर्मनपरिमाणमितं घृतम्, पञ्चसेटकमितं कर्पूरम्, एकसेटकमितं च केसरम्, द्वितोलकमितं कस्तूरीद्रव्यञ्च प्रक्षिप्तम्। चरुघृतयोः पुष्कलाहुतिभिर्हुतो मुनिवरस्य देहः प्रियभक्तजनैर्नीरभरितनेत्रैर्दृष्ट एव स्वकारणेषु (पञ्चतत्त्वेषु) प्रलीनोऽभवत्। महर्षेरस्थिसञ्चयं विधाय शाहपुराधीशेन प्रदत्तोद्याने भूमौ स्थापितः। तदुद्यानम् आना-सागरतटे (तीरे) पुष्करराजपथे स्थितम्।

श्रीहरबिलासशारदा निम्नशब्देष्वन्तिमं दृश्यमवर्णयत्– महर्षेर्देहत्यागानन्तरं त्रयो वयम्– (श्रीशारदामहोदयः, तन्मित्रं रामगोपालः, पितृव्यपुत्रो रामविलासश्च) रुदन्तो गृहं परावृत्ताः। दीपावलीपर्वपुण्यावसरे रुदतोऽस्मानवलोक्य पिताश्रीराश्चर्यमकरोत्। स हि रुदनकारणमपृच्छत्; भृशं रुदन्नहमवोचम्; अद्य हि भारतवर्षस्य रविरस्तं गतः। मम पिताश्रीः सत्वरमेवाभ्यजानात्; स ह्यस्मान् सान्त्वनां प्रादात्। अन्यस्मिन् दिने स्वामिनः शवदाहः कृतः। प्रातर्नवदशवादनान्तराले तस्य मृतदेहो वैमानिकसमारोहरूपेण श्मशानभूमिं समानीतः। आगराद्वारं प्रविश्य शवसमारोहो नयाबाजार-कड़क्काचौक-धानमण्डी-दरगाहबाजार-घसेटीडिग्गीस्थानेषु प्रवहन्नुसरीद्वारे समागतो मलूसरश्मशानभूमिमनुप्रचलितः। स्वीकृतिपत्रनिर्दिष्ट-निर्देशेनैव शवदाहोऽभवत्।

अहं हि प्रारम्भत एव समारोहेण सममेव वर्तमान आसम्। इतरार्यबन्धुभिः सममहमपि शवस्कन्धप्रदानसौभाग्यं सम्प्राप्नुवम्। अतिविशालेयमरथी; षोडशजना ह्यस्यां संलग्नाः। एकदा अजमेरनगर एव प्रवचन एकस्मिन् बालविवाहकुप्रथां भृशं खण्डयता ब्रह्मचर्यञ्च मण्डयता महर्षिणा प्रोक्तमासीत् "ये हि ब्रह्मचर्यं न धारयन्ति बालविवाहकुचक्रग्रस्ताश्च जायन्ते, दुर्बलकायास्ते भवन्ति। स्वसम्बन्धे प्रब्रुवन्महर्षिरकथयत्– "मया ह्याजीवनं पूर्णब्रह्मचर्यव्रतमनुष्ठितम्, अतो मम शवयात्रायां षोडशजनाः संलग्ना भविष्यन्ति" इति। सहसैव मया महर्षेः प्रकथनमिदं संस्मृतम्। अतस्तथैवानुष्ठितम्। महर्षिपरमभक्तः समर्थकश्च-अजमेरनगरस्थन्यायिक-सहायुक्तः रायबहादुरपण्डितः श्रीभागराममहोदयः शवयात्रायाः पूर्णव्यवस्थामकरोत्। स हि प्रारम्भतः पर्यवसानं यावत् पदातिरेव समं व्यचरत्। शवदाहात् पूर्वं स ह्येकस्मिन् संक्षिप्तभाषणे मानवजातिं प्रति महर्षेः सेवाकार्यमुपकारजातञ्चावर्णयत्। उपस्थितजनसमुदायञ्च लोकहितार्थसमारब्धं महर्षिकार्यं निरन्तरं प्रचालयितुं सम्प्रैरयत्।

एवं देवर्षिदयानन्दस्येहलोकलीला परिसमाप्ता, परं तस्य जीवनं जीवितप्रेरकालोकरूपेणाद्याप्यस्मत्पुरोऽवतिष्ठते। देवदयानन्दोऽमृतत्वं प्राप्नोत्, परं यशः कायकुसुमेऽमृतसुरभिरूपेण स्थितस्य तस्य प्रवाहेण सम्पूर्णमपि जगदिदं सदैव सुरभितं स्यास्यति।

इति विद्वाद्वर श्रीदेवेन्द्रनाथमुखोपाध्याय, स्वामिसत्यानन्द सरस्वती
प्रभृति विदुषां सुललितार्यभाषावाक्यावलिमधिकृत्य संकलितम्

आचार्य **श्रीरविदत्त गौतमेन** *देवगिराऽलंकृतं*
*देवर्षि-दयानन्द-चरितं सम्पूर्णम् ।।*

## देवर्षिदयानन्दस्य चरणयोः समर्पितश्रद्धाञ्जलयः

१. महर्षिदयानन्दो हि हिन्दूधर्मोद्धारस्यातिमहत्तमं कार्यमन्वतिष्ठत्, समाजसुधारविषये स हि वेदोक्तार्षज्ञानसरणिमवालम्बत। महदुदारहृदयः स वेदोक्तार्षज्ञाननिर्भर आसीत्। वेदग्रन्थेषु स विस्तृतभाष्यमरचयत्; येन तस्य विस्तृतविज्ञतामयं वैदुष्यं व्यापकस्वाध्यायशीलत्वञ्च प्रतिभाति (प्रतीयते)।

**(मैक्समूलरमहोदयः)**

२. देवर्षिदयानन्दो भारतराष्ट्रस्याशक्तशरीरे (जनसमूहे) स्वीयदुर्धर्षशक्तिम्, अविचलभावम्, सिंहपराक्रमञ्च संचारयन् प्राणसञ्चारमकरोत्, स हि परमोच्चगौरवगिरिशिखरस्थो महापुरुषः; तेषु नरकेसरिषु (पुरुषसिंहेषु) स एकतमः, याँश्च भारतगौरवं विचिन्वन्तो योरोपवासिनः प्रायः विस्मरन्ति, परं निश्चितमेवैकदा स्वभ्रान्तिं मन्यमाना योरोपीयास्तं स्मर्तुं विवशाः भविष्यन्ति; यतोहि तस्य स्वभावे कर्मयोगिविचारकनेतृजनोपयुक्तप्रतिभायाः दुर्लभसम्मिश्रणमासीत्। दयानन्दोऽस्पृश्यताया अन्यायं नासहत। स ह्यस्पृश्यजनानां कृते तदपहृताधिकाराणामुत्साहपूर्णोऽद्वितीयः समर्थक आसीत्। भारतवर्षे नारीणां शोचनीयदशां निवारयितुं दयानन्दोऽतिसाहसेनोदारभावेन च सफलतां प्राप्नोत्। राष्ट्रियभावनां जनजागृतिञ्च प्रवर्धयितुं वस्तुतस्तस्यैव मनसा वाचा कर्मणा प्रबलं सर्वतोऽधिकञ्च सशक्तं योगदानमासीत्। स हि राष्ट्रियपुनर्निर्माणस्य राष्ट्रियसंगठनस्य चोत्साहसम्पन्नो देवदूतो ऽवर्तत।

**(फ्रेञ्चलेखक रोम्याँ रोलाँ)**

३. ध्रुवमेतद्; यत् श्रीशंकराचार्यस्य पश्चात् केवलं दयानन्दमेव विशिष्टसंस्कृतभाषाभिज्ञम्, गहनगम्भीराध्यात्मवेत्तारम्, चमत्कारपूर्णप्रवक्तारम्, दुर्भाविषु भ्रान्तिषु निर्भीकप्रहर्तारञ्च भारतवर्षमलभत।

**(मैडम ब्लेवट्स्की)**

४. एतत्स्वीकरणीयं यद् भारतराष्ट्रस्य नवजागरणे सांस्कृतिकसमुत्थानक्षेत्रे च दयानन्दस्यातिमहत्त्वपूर्णं स्थानमासीत्; तस्य मन्तव्याः सिद्धान्ताश्च हीनभावग्रस्तामार्यजातिं पुनरपूर्वोत्साहसम्पन्नामकुर्वन्।

**(एमर्सनः)**

५. अहं महर्षिदयानन्दसरस्वतीमहाभागं सदैव विगतशताब्दीस्थितेषु तेषु महापुरुषेष्वेकतमं मन्ये ये हि रामकृष्णपरमहंसपरिव्राजकविवेकानन्दप्रभृतीनिव नवहिन्दूधर्मस्यागाधां सुस्थिराञ्चाधारशिलामस्थापयन्, पौराणिकभ्रान्तिभ्यश्च शुद्धतममेनमकार्षुः। **(एस० एल० माइकेलः)**

६. दयानन्दस्य मृत्युना भारतवर्षं स्वीयसुयोग्यतमसुपुत्रेषु-एकतमेन वञ्चितोऽभूत्। स्वामिना सममस्माकं पत्राचारः प्रावर्तत। वस्तुतः स हि न केवलं महान् भद्रपुरुषोऽपितु साक्षाद् देवपुरुष आसीत्।

**(कर्नल अल्काटः)**

७. निःसन्देहं दयानन्दो हि एको महर्षिप्रवरः, स हि विरोधिजनप्रक्षि-, प्तेष्टिकाप्रस्तरादीन् शान्तिपूर्वकमसहत। भारतराष्ट्रस्य महत्त्वपूर्णमतीतकालं गौरवभरितं भविष्यच्च तस्मिन् समाविष्टमासीत्। स शरीरेण मृतोऽप्यमृतत्वम-लभत। मानवसमूहं भ्रान्तिकारातो विमोचयितुम्, जातिबन्धनानि छेत्तुं चैव तस्य महर्षेः प्रादुर्भावोऽभवत्। "आर्यावर्त! उत्तिष्ठ, जागृहि, समागतो जागृतिकालः, नवयुगं प्रविश, पुरः प्रवर्धस्व" इति तस्य महर्षेः सन्देशाः।

**(पालरिचर्डः)**

८. वेदाध्ययनाय प्रोत्साहयितुं, 'न श्रुतिसम्मता मूर्तिपूजा' इति सिद्धयितुं च महर्षेर्दयानन्दस्य महानुपकारोऽवश्यं स्मरणीयः; आर्यसमाजस्य प्रवर्तको महर्षिदयानन्दो वर्तमानार्यजातेर्मूर्खतायास्तज्जनितहानिभ्यश्च विरुद्धं स्वानुयायिनः प्रस्तुतानकरोत्; एतद् व्यतिरिक्तं किमप्यकुर्वाणः सोऽवश्यं भारतवर्षस्य महत्सु नेतृषु सम्मानितोऽभविष्यत्।

**(डॉ० विण्टर्नित्ज)**

९. वर्तमानस्वराज्यान्दोलनेन स्वामिनो दयानन्दस्य गणना भारतस्य राष्ट्रनिर्मातृषु स्वीकर्तव्या; महान् पुण्यशीलपुरुषो हि दयानन्दः; तद् विरहितस्य भारतराष्ट्रस्य भीषणा शोचनीया च हानिरभवत्।

**(ग्रास ब्रोल्डः)**

१०. एकेश्वरवादी स्वामिदयानन्दः, वेदाधारितमन्तव्ययुतः (सिद्धान्तशीलः) प्रगतिसमर्थको देशोद्धारकश्चासीत्।

**(मोनियरविलियम्सः)**

११. सम्पूर्णमेव विश्वं वेदानुयायिनं विधातुमार्यसमाजः संकल्पते (स्वप्नद्रष्टा वर्तते)। दयानन्दश्चेमम् (आर्यसमाजम्) जीवनं सिद्धान्तञ्च प्रादात्। समस्तजातिषु निर्वाचितार्यजातिः, राष्ट्रेषु निर्वाचितं भारतं राष्ट्रम्, धार्मिकपुस्तकेषु निर्वाचितश्च वेदपुस्तकमिति दयानन्दस्य ध्रुवनिश्चयः।

**(रेम्जे मेकडानल्डः)**

१२. दयानन्दस्वामिनः सिद्धान्तानां विषये कामपि सम्मतिं कश्चित् स्थिरां

कुर्यात्परं स्वराष्ट्रगौरवप्रतीको हि दयानन्द इति सर्वैरेव स्वीकरणीयं भविष्यति। दयानन्दस्य देहावसानेन महतीं हानिं भारतवर्षमसहत। स हि अतिमहामहिमश्रेष्ठपुरुष आसीत्।

(कांग्रेससंस्थापकः श्री ए.ओ.ह्यूमः)

१३. सादरं प्रणमामि तं महान्तं गुरुदेवं दयानन्दम्; यस्य दिव्यदृष्टिर्भारतस्याध्यात्मिकेतिहासे सत्यतामेकताञ्चापश्यत्; यस्य मनोभारतीयजीवनस्य सर्वाण्यङ्गानि प्रदीप्तानि-(प्रकाशितानि)- अकरोत्। यस्य गुरुवरस्योद्देश्यं भारतं राष्ट्रमविद्याऽऽलस्यतः प्राचीनैतिहासिकतत्त्वाज्ञानतश्च मुक्तं विधाय सत्यपवित्रभावयोर्जागृतौ– 'उन्मेषयितुमासीत्। वारं वारमहं प्रणमामि, सादरं श्रद्धाञ्जलिञ्च समर्पयामि नवभारतस्य मार्गदर्शकं तं दयानन्दम्,यो हि राष्ट्रस्य पतितावस्थायामपि हिन्दूवर्गं प्रभुभक्तेर्मानवसमाज सेवायाश्च सत्यं सरलञ्च मार्गदर्शनमकारयत्।

(रवीन्द्रनाथठाकुरः)

१४. तपोमूर्तिर्महर्षिर्दयानन्दः, स हि स्वराष्ट्रे (भारतवर्षे) दिव्यं ज्योतिः प्राकाशयत्। स हि सर्वतो हिन्दूसमाजं पुनर्जन्म प्रदातुं प्रायतत। स दिव्यं स्वतन्त्रञ्च भारतं राष्ट्रं द्रष्टुमैच्छत्। आर्षकालं पुनः प्रवर्तयितुं स प्रयत्नशील आसीत्। प्रायो मृतायां हिन्दूजातौ पुनः प्राणसञ्चारमकरोत्। स हि हिन्दूसंस्कृतेरप्रतिमप्रतिमानो भारतमातुरक्षयपात्रभूत आसीत्।

(मदनमोहनमालवीयः)

१५. दयानन्दो हि प्रथमः पुरुषः यो हि "भारतं हि भारतीयानां कृते" इति समुद्घोषमदात्; आर्यसमाजकृतेऽहं स्वहृदये शुभकामनासमूहं संधारयामि (बिभर्मि) तस्मै च महते देवपुरुषाय (यं हि भवन्तः सम्मानयन्ति) अहं स्वहृदये वास्तविकं पूज्यभावं विभावयामि।

(एनी० बीसेण्ट)

१६. दिव्यज्ञाननिधेः साहसिकः प्रहरी, सकलविश्वं विश्वात्मशरणप्रदानक्षमः, मानवानां संस्थानाञ्च शिल्पी, आत्मोन्नतिमार्गे प्रकृतिप्रदत्तबाधानां वीरविजेता स दयानन्द आसीत्। एवं हि दयानन्दरूपेण मम लोचनयोः पुरत आध्यात्मिकक्रियात्मकतयोरेका सशक्तमूर्तिः परिस्फुरति। अस्मद् भावनासु पूर्णतः परस्परभिन्नयोर्द्वयोः शब्दयोरेतयोर्मिश्रणमेव दयानन्दस्य समुपयुक्तपरिभाषाप्रतीयते। आत्मनिष्ठपरमपुरुषः, चर्मचक्षुषोर्दिव्य तेजोधरः जीवनतत्त्वसंयुताभीष्टस्वरूपमूर्तिसंघटनसामर्थ्यधृतकरः, स्वकल्पनाक्रियापरिणयनसमर्थश्च

स महापुरुष इति तस्य व्यक्तित्वव्याख्यानं कर्तुं शक्यते। स्वयं सुदृढशिलारूपः सुदृढशिलासु घनप्रहारेण सुदृढपदार्थनिर्माणक्षमश्च स शक्तिपुञ्जभूतो देवपुरुष आसीत्।

(योगी अरविन्दः)

१७. भारतीयगगनगतो ज्वलन्तनक्षत्रनिभो दिव्यदयानन्दोऽलौकिकाभा-भासितः, गहनाज्ञाननिद्रागतं भारतं वर्षं जागृतमकरोत्। स हि स्वराज्यस्य प्रथमः सन्देशवाहको मानवतोपासकश्चासीत्।

(लोकमान्यबालगंगाधरतिलकः)

१८. महर्षिदयानन्दमहं स्वमार्गदर्शकं गुरुवरं मन्ये। तच्चरणकमलस्थितेन मया बहुतरं सम्प्राप्तम्; स हि मयि सदैवानुग्रहपरोऽवर्तत। विदेशेष्वपि वैदिकधर्मस्य प्रचारप्रसारः स्यादिति तस्य समीहा, अतः स मां विदेशेषु वैदिकसंस्कृतेः प्रचारार्थं सम्प्रैषयत्। मया हि स्वराष्ट्रस्य, स्वजातेः समाजस्य च याऽपि सेवा कृता, महर्षिदयानन्द एव तस्य श्रेयोभाक्। सर्वहितैषिणो वेदविज्ञस्य तेजस्विनो युगद्रष्टुस्तस्य (देवदयानन्दस्य) ममशिरःस्थितवरदहस्तेनैवाहमेतत्सर्वं विधातुं प्राभवम्। तस्य स्वतन्त्रविचारकस्य शिष्यभावे स्थितो गर्वान्वितोऽहं स्वात्मानमनुभवामि।

(श्यामजी कृष्णवर्मा)

१९. महर्षिदयानन्दो हि स्वातन्त्र्य -(स्वाधीनता)- संग्रामस्य सर्वप्रथमो योद्धा, हिन्दूजातेः संरक्षकश्चासीत्; तेन संस्थापितः आर्यसमाजो भारतराष्ट्रस्य महतीं सेवामकरोत् करोति च निरन्तरम्। स्वतन्त्रतासंग्रामे आर्यसामाजिकानां बृहद् योगदानमासीत्। महर्षिणा विरचितः अमरग्रन्थः सत्यार्थप्रकाशो हिन्दूजातेः स्नायुषु-उष्णं रक्तं सञ्चारयति। स्थिते सत्यार्थप्रकाशे न कोऽपि विधर्मिजनः स्वमतगौरवावहने प्रभवति।

(स्वातन्त्र्यवीरसावरकरः)

२०. एतादृशः प्रकाशस्तम्भो हि दयानन्दः, यो ह्यसंख्यजनान् सत्यमार्गं प्रादर्शयत् (सन्मार्गे प्रावर्तयत्)। स्वराष्ट्रे राष्ट्रजनवर्गे च कृताः (विहिताः) तस्योपकाराः शाश्वतरूपेण स्थास्यन्ति। दयानन्दो हि प्रवर्तमानान्धकारयुगे वैदिकरविरूपेण समुदितः। तस्य प्रशंसकेषु स्थितोऽहं तदनुयायिषु स्वात्मानं परिगणयन्नतीवगर्वमनुभवामि।

(वेदतास्वरूप-भाईपरमानन्दः M.A.)

२१. ऋषिदयानन्दो हि भारतवृक्षमूलममृतजलेनाभ्यषिंचत्। तस्यैव

शुभप्रयासेनाद्य वृक्षेऽस्मिन् विविधानि स्वादूनि फलानि फलितानि दृश्यन्ते फलिष्यन्ति च। महर्षिर्युवजनहृदयेषु देशभक्तित्यागपरोपकारभावानां ज्योतिः प्राज्वालयत्। या हि हिन्दूजातेर्वर्तमाना समुन्नतिर्दृश्यते देवर्षिर्दयानन्द एव तस्याः श्रेयोभाक्। भारतीयेतिहासे महीयसां राष्ट्रसमुद्धारकाणां शुचिश्रेण्यां स्वर्णाक्षरेषु तस्य नामाङ्कितं स्थास्यति।

(लालाहरदयालःM.A.)

२२. आधुनिकभारतराष्ट्रनिर्मातृषु-आचारसम्बन्धिपुनरुत्थानकर्तृषु धार्मिक-पुनरुद्धारोत्तरदातृषु च महापुरुषेषु महर्षेर्दयानन्दस्य प्रशस्तं स्थानमासीत्। हिन्दू-समाजस्य समुद्धारे आर्यसमाजस्य बहुतरं योगदानं वर्तते। रामकृष्णमिशन-संस्थानेन बंगदेशे यदनुष्ठितम्, ततोऽप्यधिकम्– आर्यसमाजेन पाञ्चालप्रान्ते-उत्तरप्रदेशे च समनुष्ठितम्। नेयमतिशयोक्तिर्यत् प्रत्येकपाञ्चालनेता आर्यसामाजिकोऽवर्तत। स्वामिनं दयानन्दमहमेकं सुधार्मिकम्, समाजसुधारकम्, कर्मयोगिनं च मन्ये। संगठनकार्येषु सामर्थ्यप्रसारदृष्ट्याऽनुपमा आर्यसमाजसंस्था। संगठनकार्यसुदृढता, उत्साहसमन्वयात्मकतादिभावेन न काऽपि संस्था-आर्य-समाजस्य समतामर्हति।

(नेताजी सुभाषचन्द्रवसुः)

२३. महर्षिदयानन्दो मे गुरुदेवः, संसारेऽस्मिन् केवलं तमेवाहं गुरुदेवं मन्ये। स हि धर्मतः मे पिता, आर्यसमाजसंस्था च मे माता एतयोरंकेऽहं लालितः पालितश्चाभवम्, गर्वमहं वहामि यत् पिता गुरुदेवश्च मां स्वतन्त्रचिन्तनं भाषणं कर्तव्यपालनम्, माता (आर्यसमाजः) च संस्थाबद्धभावेन नियमानुवर्ति-तामशिक्षयत्।

(पञ्जाबकेसरी लालालाजपतरायः)

२४. महर्षिदयानन्दस्य धर्मोपदेशाः कोटिशो जनान् नवजीवनम्, नवचेतनाम्, नवदृष्टिञ्च प्रायच्छन्। तस्मै श्रद्धाञ्जलिं समर्पयद्भिरस्माभिः तत्प्रदर्शितपथग्रहणेन सम्पूर्णमपि राष्ट्रं सुखशान्तिवैभवसम्पन्नं विधातुं व्रतं ग्रहीतव्यम् (ग्राह्यम्)। (डॉ० राजेन्द्रप्रसादः प्रथमराष्ट्रपतिः)

२५. महासुधारकस्य प्रखरक्रान्तिकारिणो महामहिमदयानन्दस्य हृदये सामाजिकमन्यायजातमुत्खातयितुं प्रचण्डज्वाला प्रज्वलिताऽसीत्। सर्वमपि तस्य प्रशिक्षणमस्मत्कृतेऽतिमहत्त्वपूर्णम्, "सत्यनिकषनिकषणेनैव सर्वं वयं स्वीकुर्यामः" इति तस्य महान् सन्देशः।

(डॉ० सर्वपल्लीराधाकृष्णन्– द्वितीयो राष्ट्रपतिः)

२६. महत्यो हि दयानन्दस्य शिक्षाः, ताश्च हिन्दूधर्मे स्थायिस्थानं प्राप्ताः; स्वामिनः शिक्षानुष्ठानेन परिपक्वं हिन्दूत्वं भविष्यति, स हि हिन्दूत्वोद्धारकरूपेण वक्तुं शक्यते।

(चक्रवर्ती राजगोपालाचार्यः)

२७. नाहं स्वामिनं दयानन्दं साम्प्रदायिकं मन्ये; मम सम्मतौ महान् विस्तृतधर्मशीलो हि सः, पूर्णराजनीतिकपुरुषोऽपि सम्मानयितुं शक्यः।

(राजर्षिपुरुषोत्तमदासटण्डनः)

२८. बहवो जनाः स्वामिनं दयानन्दं सामाजिकं धार्मिकञ्च सुधारकमेव मन्यन्ते; परं मम दृशा स हि विशुद्धो राजनीतिकद्रष्टा; चत्वारिंशद् वर्षेभ्यः कांग्रेससंस्थाया यो हि कार्यक्रमो व्यवस्थितः, सर्वोऽपि स षष्ठिवर्षपूर्वतो महर्षिदयानन्देन स्वदेशाभिमुखं प्रसारित आसीत्। सर्वस्मिन् देशे एकाभाषा, खादीवस्त्रनिर्माणम्, स्वदेशीयवस्तुप्रचारः पञ्चायतनस्थापनम्, दलितोद्धारः, राष्ट्रियसामाजिकैकत्वम्, उत्कटः स्वदेशाभिमानः, स्वराज्यघोषणादिकं सर्वमेतन्महर्षिदयानन्दः स्वराष्ट्रं प्रायच्छत्; वर्तमानकांग्रेससंस्थायाः प्रत्येकोंऽशः भगवता दयानन्देनैव विनिर्मितः। षष्ठिवर्षपूर्वमेव यदि कार्यक्रमोऽयमस्थास्यत्; चिरं प्रागेव भारतं राष्ट्रं स्वतन्त्रमभविष्यत्। अहं हि महर्षिदयानन्दमात्मनो राजनीतिकं गुरुवरं मन्ये। मम दृशा हि स महान् विप्लववादीनेता राष्ट्रविधायकश्चासीत्।

(सरदारबल्लभभाई पटेलः)

२९. महर्षिदयानन्दः पददलितभारतराष्ट्रस्य पुनरुत्थानमकरोत्; राष्ट्रकृते नवजीवनसन्देशञ्च प्रायच्छत्; स हि सामाजिकीं क्रान्तिं व्यदधात्; अन्धश्रद्धाञ्च दूरीकृत्य सफलराष्ट्रनिर्माणमकरोत्।

(मुरारजीदेसाई)

३०. महर्षिदयानन्दो महान् राष्ट्रनायकः क्रान्तिकारी महाशक्तिरूपश्चासीत्; स हि व्यावहारिकरूपेण सर्वेष्वपि जीवनक्षेत्रेषु स्वप्रभावमस्थापयत्! स्वामिमहाभागः श्रद्धया स्मरणीयः, यतो हि स स्वराष्ट्रस्य धार्मिक-सांस्कृतिक-राजनीतिकादिक्षेत्रेष्वभूतपूर्वं कार्यजातमन्वतिष्ठत्। स सर्वं स्वीकृतकार्यजातं निरवहत्। हिन्दूधर्मस्य स विशेषं कल्याणमकरोत्; सुदृढ-व्यक्तित्वमयो हि सः। विरला एवैतादृशाः क्रान्तिकारिणो नेतारो भवन्ति। अभद्रवस्तुषु संकेतकरणमप्यपराधं मन्यमाने युगे स स्वराष्ट्रस्य सफलनेतृत्वमकरोत्। स हि देवनागरीं हिन्दीं राष्ट्रभाषां विधातुं च शंखनादमकरोत्। अस्पृश्यताभावे, जातिवादविरोधे च

प्रबलमान्दोलनमकरोत्। स्वराज्यस्य स्वदेशीयतायाश्च तादृशास्तरंगास्तरंगिताः, येन भारतीयराष्ट्रिय-कांग्रेससंस्थाया निर्माणभूमिः प्रस्तुता।

**(श्रीलालबहादुरशास्त्री– द्वितीयः प्रधानमन्त्री)**

३१. स्वामिदयानन्दो वर्तमानभारतराष्ट्रस्य सर्वप्रथमो महान् निर्माताऽसीत्; अगाधा तस्य विद्या; महदनुकरणीयश्च चरित्रम्, एतदधिकं सामान्यतया राष्ट्र-निर्मातारो यां दृष्टिं प्राप्नुवन्ति तदपेक्षयाऽतिस्वच्छतमा विशाला च तस्य दृष्टिरासीत्। विशुद्धीकृतेऽद्यतनहिन्दूधर्मे, हिन्दूमहासभायाः प्रबलमनोवृत्तिषु, गाँधिमहात्मनः कार्यकलापेषु च वयं स्वामिनो दयानन्दस्य निर्भ्रान्तदृष्टेः, राजनीतिज्ञतायाश्च प्रभावं सुतरां द्रष्टुं शक्नुमः। निःसन्देहं तस्यानुस्मृतिर्भाविनो भारतस्य पैतृकनिधिं संवर्धयिष्यति।

**(श्री के० एम० मुंशी)**

३२. लोकेषु "महात्मा"- रूपेण प्रसिद्धिं प्राप्तो गाँधी यदि भारतस्य "राष्ट्रपिता"- रूपेण सम्मान्यते तदा देवर्षिदयानन्दः "राष्ट्रपितामहः" पदेन सम्मानयितुं योग्यः। महर्षिर्ह्यस्माकं राष्ट्रियप्रवृत्तेः स्वाधीनतान्दोलनस्य च "आदिप्रवर्तकः" आसीत्। गाँधी तस्यैव चरणचिह्नान्यन्वसरत्। तस्य पथप्रदर्शन-अभावे तस्मिन्नांगलशासने सर्वोऽपि पाञ्चालप्रान्तो यवनमते दीक्षितोऽभविष्यत्। सम्पूर्णश्च बंगप्रदेशः क्रिश्चीनसम्प्रदायमग्रहीष्यत्। महर्षिरेव "**कृण्वन्तो विश्वमार्यम्**" इति प्रेरणां प्रादात्। स हि सुप्रसिद्धमिदमकरोत्, यत्सर्वासु विश्वसंस्कृतिषु आर्यसंस्कृतिः सर्वश्रेष्ठा। स ह्यादर्शमिमं समस्थापयत् दिव्यमहापुरुषो हि दयानन्दः। यवनक्रिश्चीनसम्प्रदायाक्रमणेभ्यः स एव स्वदेशमरक्षत्। तस्यार्यसमाजो राष्ट्रैकतायै निरन्तरं कार्यजातमनुतिष्ठति।

**(श्री अनन्तशयनम्-अय्यंगारः)**

३३. अतिनिर्बला मे शब्दा महर्षेर्महिमानं वर्णयितुमशक्ताः। तस्याप्रतिमब्रह्मचर्येण सत्यसंग्रामेण, घोरतपश्चर्यया च स्वहृदये परमपूज्यभावैः प्रेरितोऽहं तस्मै वन्दनां करोमि। शक्तिसुतं कर्मवीरयोद्धारञ्च मन्यमानोऽहं तं प्रणमामि, तस्मै श्रद्दधामि; तस्य जीवनं राष्ट्रनिर्माणकृते स्फूर्तिदायकं, बलदायकं, सम्माननीयञ्च विद्यते, अत्युत्कटस्वदेशभक्तो हि दयानन्दः, अतो राष्ट्रवीरं मन्यमानोऽहं तं वन्दे।

**(साधु टी० एल० वास्वानि)**

३४. भारतराष्ट्रस्य विख्यातपुरुषविभूतिषु समुज्ज्वलनक्षत्रसमो देवर्षिः दयानन्दः।

**(एम० रंगाचार्यः)**

३५. एतावान् श्रेष्ठतमो वैदुष्यनिधिश्च दयानन्द आसीत्, यत्सर्वमतानुयायिनां कृतेऽतिसम्मानपात्रमभूत्।

**(सरसय्यद-अहमदखाँ)**

३६. महर्षिदयानन्दो हि भारतमातुस्तेषु महामहिममहात्मसु स्थितो यस्य समुज्ज्वलं नाम विश्वेतिहासगगने ज्वलन्तनक्षत्रेषु प्रकाशितं स्थास्यति। स हि भारतजननीसुपुत्रेषु सर्वाधिकगर्वानुभूतिप्रदः। नैपोलियन- सिकन्दरप्रभृतयोऽनेके सम्राजो विजेतारश्च संवृत्ताः परं दयानन्दो हि सर्वेषु प्रशस्ततमः।

**(खदीजाबेगम M.A.)**

३७. सततमहं प्रपश्यामि यदा कश्चिदपि हिन्दूः आर्यसमाजे दीक्षितो भवति, तदा तस्य स्वभावेऽनुपमा विशेषताऽऽविर्भवति। तस्य प्रवृत्तौ समुत्साहः देशभक्तिः, कर्मशीलता, अद्भुतास्मिता च प्रवर्तिता जायते। यथा च राष्ट्रकार्येषु चिन्तयत— यावदन्ये जनाः स्वराज्यस्य स्वप्नमेवापश्यन् तावद् दयानन्दस्तस्यार्य-समाजश्च स्वपुस्तकादिप्रचारमाध्यमेन तस्य प्रचारकार्येषु प्रवृत्त आसीत्। अहं हि प्रमुदितो ब्रवीमि— यदसहयोगान्दोलनयुगात् प्राक् प्रायो नवतिप्रतिशतमार्य-सामाजिकाः स्वराज्यकार्येषु प्रवर्तिता नेतार आसन्; यावच्चान्यसंस्थानां कठिनतया द्वि-त्रिप्रतिशतमेव जनाः स्वराज्यक्षेत्रे कार्यकर्तारो बभूवुः।

**(मौलानाहसरतमोहानी)**

३८. क्रिश्चीनसाम्प्रदायिकतायाः पश्चिमीयसभ्यतायाश्च प्रबलाक्रमणैः भारतीयान् सुरक्षितान् कर्तुं यदि कश्चित् श्रेयः प्रदातुं पात्रभूतः, तदा केवलं महर्षेर्दयानन्दस्यैव गौरवास्पदं नाम लोकरसनासु (जनजिह्वासु) प्रवर्तते। एकोनविंशतिशताब्दीकाले महर्षिदयानन्देन भारतराष्ट्रस्य कृते यदमूल्यकार्य-जातमनुष्ठितं तेन हिन्दूवर्गेण सममेव यवनादि- अन्यमतावलम्बिनोऽप्यति-लाभान्विता अभूवन्।

**(पीरमुहम्मदयूनिसः)**

३९. "वयं हि ऋषीणां सन्ततयः" इति सौभाग्यं गौरवञ्चेद् वहामस्तदैतत्कृते महर्षिदयानन्दो ह्येवास्माकं सर्वाधिकमुपकारमकरोन्नान्यो महापुरुषः कश्चित्। दयानन्दो हि स्वयं किञ्चिदपि-अगृह्णन्नपारज्ञानराशिभरित-वेदज्ञाननिधिमस्मभ्यं प्रायच्छत्।

**(महाकविः सूर्यकान्तत्रिपाठी निराला)**

४०. आधुनिकभारतराष्ट्रस्य निर्माणे सर्वप्रथमप्रेरकरूपेण महर्षिदया-नन्दस्यातिविशिष्टं सर्वोपरि च स्थानमभिवर्तते। स्वमनसः समुद्दीप्तस्वाभिमानेन स

हि प्रसुप्तं भारतीयसमाजं जागृतमकरोत्। अनुकरणस्य दासवृत्तिषु प्रहरन् स हि स्वतन्त्रप्रतिमामयीं राष्ट्रियास्थां समादिशत्। सर्वमपि लोकजीवनक्षेत्रं तस्य तेजोमयविचारप्रवाहैर्भासमानं दृश्यते। (सर्वाण्यपि लोकजीवनक्षेत्राणि तस्य तेजोभरितविचारधाराभिर्विभासमानानि दृश्यन्ते)।

**(माधवराव सदाशिव गोलवलकर, सरसंघसञ्चालकः)**

४१. महर्षिदयानन्दो हि धर्मजागृतिमवर्धयत्। स ह्यार्यसंस्कृतिम्, वेदाध्ययनम्, संस्कृतभाषां हिन्दीभाषाञ्च प्रति देशवासिनां हृदयेषु प्रेमभावमवर्धयत्; अस्पृश्यताकलङ्कं प्राक्षालयत् (पर्यमार्जयत्) निःसन्देहमेतादृशैर्बहुभिः कार्यजातैर्महर्षेः संस्मरणं शाश्वतस्थायि भविष्यति।

**(मोहनदासकर्मचन्दगाँधी)**

# महर्षिदयानन्दस्य सिद्धान्ताः (मन्तव्याः)

१– महर्षिदयानन्दः ''सत्यम्'' सर्वोपर्यमन्यत। अयं तस्यस्थिरो विश्वासः ''यत्सत्यं तत्सत्यं यच्च मिथ्या तन्मिथ्यैव''इति प्रतिपादनमेव सत्यार्थस्य प्रकाशविज्ञानम्। यतः सत्योपदेशेन विना नान्यत् किमपि मानवजातेः समुन्नतिकारणम्।

२– एकस्यैव परमेश्वरस्य पुत्रत्वेन सर्वे विश्ववासिनः परस्परं भ्रातर एव। मानवमानवयोर्मध्ये स्थितां भेदमित्तिं स हि समूलमुत्पाटयितुमैच्छत्। मानव-मात्रस्यैकैव जातिः, एको धर्मः, एकश्चैवजीवनलक्ष्यमिति संस्थापनं तस्याभीष्टम्। जन्मना सर्वेऽपि समानाः, कर्मणा चैव ब्राह्मणक्षत्रियवैश्यशूद्रा भवन्ति। गुणकर्म-स्वभावसूचकं हि वर्णं न जातिसूचकम्।

३– मानवजीवनं न हि देहमात्रम्, आत्मनः साम्राज्यमेतत्। आत्मतत्त्वं विज्ञाय निरन्तरं परमेश्वरसान्निध्यञ्च प्राप्यैव मानवो वस्तुतो मानवतामाप्नोति, आत्मतत्त्वप्राप्तिमार्गनिर्देशनमेव ज्ञानोद्देश्यम्, वयं हि संसारेऽस्मिन् यज्ञकर्माणि कुर्वन्तस्तदेवैश्वर्यसंग्रहं कुर्याम, यच्चेतो गच्छद्भिरस्माभिः सहापि गन्तुं प्रभवेत्। भोगवादाध्यात्मवादयोः समन्वय एव महर्षेर्विशेषसन्देशः।

४– ''वेदो हि सर्वासामेव सत्यविद्यानां पुस्तकम्; तस्य पठनं पाठनं श्रवणं श्रावणञ्च परमो धर्मः'' इति स सुस्थिरं सत्यभावेनामन्यत। वेदज्ञान-प्रचारप्रसारातिरिक्तं न किमपि मानवजातेः समुन्नतिकारणम्, यतो हि भारत-वासिभिर्वेदानां स्वाध्यायः परित्यक्तस्तत एव भारतराष्ट्रस्याधःपतनं प्रारब्धम्'' इति तस्य सुस्थिरो विश्वासः। वस्तुतो धरणीतले वैदिकविचारधारायाः साम्राज्य-संस्थापनमेव महर्षेश्चरमलक्ष्यम् ।

५– नारीजातिं महर्षिः पूजनीयाममन्यत, पञ्चसहस्रवर्षानन्तरं स एव हि ''**यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवताः**'' इति समुदघोषयत्।

६– महर्षेर्दृष्ट्या स एव धर्मो यस्य न कोऽपि विरोधं कर्तुं शक्नुयात्। ''यच्च कालत्रये– (त्रिषु कालेषु)– सर्वैः समानतया सम्मानयितुं योग्यं तदेव मदीयमपि मन्तव्यमित्यभिजानामि। यत्सत्यं तस्य संमननं सम्माननम्, यच्चासत्यं तस्य च परित्यागः परित्याजनमेव हि मेऽभीष्टम्'' इति तस्य प्रकथनम्।

७– ''अन्यायमाचरतो बलवतोऽपि न बिभीयात् धर्मात्मनश्च बलहीनादपि भयमनुभवेत्। नैतावदेवापितु स्वसम्पूर्णसामर्थ्येन निर्बलानां गुणहीनानामनाथा-नामपि धर्मात्मनां संरक्षणं समुन्नतिं प्रियाचरणञ्च सदैव समाचरेत्, अधर्मिणा-ञ्चातिबलवतां गुणवतां सनाथानां चक्रवर्तिनामपि सदैवावनतिं विनाशमप्रिया-

चरणञ्च विदध्यात्'' इति महर्षेरादेशः।

८– परमेश्वरः, जीवात्मा, प्रकृतिश्चेति त्रीणि-अनादितत्त्वानि- तत्र जीवो भोक्ता, प्रकृतिश्च साधनरूपा, परमेश्वरो हि सच्चिदानन्दस्वरूपः। तत्सान्निध्येन नित्यानन्दोपलब्धिरेव जीवात्मनां लक्ष्यम्। निरन्तरं यज्ञकर्मानुष्ठानपूर्वकं प्रभुप्राप्तये प्रयत्नशीलतैव ज्ञानमार्गः।

९– गंगास्नान- व्रत- पूजाभिश्च पापानि न नश्यन्ति (क्षम्यन्ते) शुभाशुभ-कर्मफलानि सर्वैरेवानिवार्यरूपेण भोग्यानि भवन्ति; अयं हि महर्षेर्विश्वासः पुण्यधर्म-भावयोराधारशिलारूपेणावर्तत।

१०– मूर्तिपूजनावतारवादास्पृश्यतागुरुधारण– (गुरुडम)– अन्धविश्वास-भूतप्रेतादिदम्भजालानां मतमतान्तराणाञ्च स हि प्रबलतमो विरोधी आसीत्। एतानि सर्वाण्यपि मिथ्याजालानि स हि मानवजातेरधःपतनकारणान्यमन्यत।

११– स हि एकं परमेश्वरमेवोपास्यदेवममन्यत, नानादेवीदेवतानां संघटनमवतारवादश्च स पतनहेतुकमेवामन्यत। ''मानवो हि स्वशुभैः कर्मभिरेव मोक्षानन्दोपलब्धिं कर्तुं पारयति; कस्यचित् प्रतिनिधेःर्गुरोश्चानुशंसा नावश्यका'' इति तस्य मान्यताऽऽसीत्।

१२– महर्षिदयानन्दो ह्येतादृशीं सामाजिकीं, आर्थिकीम्, धार्मिकीम् आध्यात्मिकाञ्च व्यवस्थामपैक्षत (अभीष्टाममन्यत) येन च भूतलमेवेदं स्वर्गधामरूपेण प्रवर्तेत । अथच जन्मनो मृत्युपर्यन्तं न कोऽपि मानवप्राणी दुःखं कष्टं क्लेशं वानुभवेत्। 

१३– ''सर्वत्र सत्यप्रचारप्रसारेण, सर्वेष्वैक्यमतसंस्थापनेन, द्वेषभावं विहाय (परित्यज्य) परस्परस्थिरसुप्रीतिसंयोजनेन सर्वैरेव सर्वान् लाभान्वितान् कर्तुं (विधातुम्) मे प्रयत्नोऽभिप्रायश्च'' इति महर्षेश्चरमलक्ष्यं तस्यैव शब्देषु सुस्पष्टम्।

१४- पूर्वोक्तं स्वचरमलक्ष्यं प्रपूरयितुं महर्षिरतितरामुत्कण्ठित आसीत्, स हि स्वमन्तव्येष्वलिखत्—

''सर्वशक्तिमत्सर्वेश्वरानुकम्पया साहाय्येन , आप्तजनानां समनुभावेन च सत्यसिद्धान्तोऽयं सर्वत्र भूगोलप्रदेशे (सर्वस्मिन् भूमण्डले) सत्वरमेव प्रवृत्तः स्यात्; येन भूमण्डलस्थः सर्वजनसमूहः सहजभावेन धर्मार्थकाममोक्षाणां संसिद्धिं विधाय समुन्नतिपथमनुसरन्-आनन्दनिर्भरो भवेत्'' इति मे मुख्यं प्रयोजनम्। इति।

# स्वात्म-परिचय

**आचार्य रविदत्त गौतम**

जन्म – कार्तिक शुक्ल-अष्टमी (गोपाष्टमी) रविवार विक्रम संवत १९७५

जन्म प्रदेश – कैथल (करनाल) हरियाणा।

शिक्षा – गवर्नमेण्ट संस्कृत कॉलेज बनारस (सम्प्रति-सम्पूर्णानन्द संस्कृत विश्वविद्यालय, वाराणसी) से व्याकरण शास्त्री, साहित्याचार्य, तथा पंजाब विश्वविद्यालय, लाहौर (संप्रति चण्डीगढ) से साहित्य शास्त्री, एम. ए. (संस्कृत) प्रभाकर-परीक्षाएं बी. ए. अंग्रेजी एवं दिल्ली-विश्वविद्यालय दिल्ली से एम. ए. हिन्दी, व हिन्दी साहित्य सम्मेलन प्रयाग से साहित्य रत्न परीक्षाएं प्रथम श्रेणी में समुत्तीर्ण।

कार्यक्षेत्र – १९४२ से १९८२ चालीस वर्ष तक हिन्दी व संस्कृत अध्यापन।

अभिरुचि – वैदिक धर्म के क्षेत्र में ब्राह्मणोचित वेद, उपनिषद्, गीता, रामायण आदि आर्ष-ग्रन्थों का स्वाध्याय व प्रवचन।

